the result is also predicted like-wise. Another system is Sudarshan Chakra. This has been developed by appropriate study oft he position of the Sun, the Moon and the Ascendant. This also helps in calculating good and bad periods beginning from hours, days, months to years.

## CHAPTER 10

The name of this chapter is given Abda Charayadi-Varnan. This is a unique system developed by Prashara for dividing time and calculating various periods of time. For example, the day is calculated of 15 Muhuratas. One Muhurata is equal to two Ghati. Similarly the night is of 15 Muhuratas. The 12 ascending signs have been calculated beginning with the sign rising at the time of Sun-rise. These are called 12 Lagnas. Different other types of time calculations are elaborately mentioned in this chapter.

## CHAPTER-11

The title of this chapter is **Prashana Shastra.** This is a very important chapter. It is easy to calculate good or bad periods in case of a person whose time of birth is clearly known. If the exact time of birth is not known, *Jyotish Shastra would be of little use. It is here that this chapter* helps an astrologer to calculate good or bad events on the basis of the precise time at which a person has put a question for knowing some details. The time of putting the question is calculated to determine the ascending sign and accordingly the normal procedure of prediction is followed. Other details can also be worked out on the same basis. This chapter also refers to Kali Yuga and its influences and also the influences of Jyotish Shastra as a basic guiding force. The necessary qualification of a Jyotishi are also mentioned, such as, the Jyotishi should not be a hypocrite angry, uneducated etc. He should be well-versed in all Shastras and be conversent with various branches of Jyotish Shastra.

Goswami Girdharilal

# अनुक्रमणिका

## प्रथमोऽध्यायः

### 'शास्त्रावतरणम्'

## द्वितीयोऽध्यायः
### 'ग्रहस्वरूपनिरूपणम्'



## तृतीयोऽध्यायः
### 'राशिस्वभावकथनम्'

---

## चतुर्थोऽध्यायः

### 'द्वादशभावफलनिरूपणम्'

---

## पञ्चमोऽध्यायः

### 'कारकनिरूपणम्'

## षष्ठोऽध्यायः

### 'आयुर्दायनिरूपणम्'

## सप्तमोऽध्यायः

### 'अष्टकवर्गनिरूपणम्'



---

## अष्टमोऽध्यायः

### 'राजयोगादिनिरूपणम्'

---

## नवमोऽध्यायः

### 'दशानिरूपणम्'

---

## दशमोऽध्यायः
### 'अब्दचर्यादिवर्णनम्'

—:o:—

## एकादशोऽध्यायः

### "प्रश्नशास्त्रम्"

श्री :

# फलितज्योतिष-विवेचनात्मक-बृहत्पाराशर-समीक्षा

## प्रथमोऽध्यायः

## शास्त्रावतरणम्

### (क) किं नाम ज्योतिषं शास्त्रम्

#### (अ) ज्योतिष-शब्दस्य व्युत्पत्तिः

'द्युतेरिसिन्नादेश्च जः, इत्युणादि-सूत्रेण' ज्वलतिकर्मणो द्युतिधातोरिसिन् प्रत्यये दकारस्य च जकारादेशे गुणे 'ज्योतिः' इति शब्दस्य निष्पत्तिर्भवति । यस्यार्थेन स्वयं प्रकाशितग्रहनक्षत्रादीनां निर्देशः । एवं तेषां सूर्यादिग्रहाणामश्विनीप्रभृतीनां नक्षत्राणां च गणितफलितरूपेण यत्र विषयनिरूपणमुपलभ्यते तच्छास्त्रं नाम ज्योतिषम् । ज्योतिष-शब्दोऽपि 'अधिकृत्य कृते ग्रन्थे' इति' पाणिनीयेन सूत्रेणाण्प्रत्यये विहिते सिध्यति । अयमेव शब्दो भारतीयज्योतिर्विज्ञानार्थे योगरूढत्वेन प्रख्यातः ।

#### (इ) ज्योतिषस्य वेदाङ्गत्वम्

'वेदोऽखिलो-धर्ममूलम्' इति मनुस्मृतौ,' अपि च ऋग्वेदभाष्यभूमिकायां सायण:—

---

१. उणादिसूत्रम् २७५, वासुदेव शर्मा, सिद्धान्तकौमुदी, निर्णय सागर प्रेस, मुम्बई ।

२. तत्रैव पाणिनीयसूत्रम्, ४।३।८७ ।

३. प्राणजीवन शर्मा, मनुस्मृतिः २।६, गुजराती प्रिंटिंग प्रेस, मुम्बई ।

प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥[1]

एवं च—

श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥[2]

इति श्लोकवार्त्तिकेऽपि वेदज्ञानस्य परमावश्यकत्वं प्रतिपादितम्। तथा च मनुः—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥[3]

इत्यत्र वेदस्यानध्ययने प्रत्यवायोऽपि दर्शितः।

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥[4]

अनेन वेदस्य सर्वज्ञानमयत्वमपि निर्दिष्टम्। तत्र च वेदविज्ञानार्थं वेदस्य षडङ्गानि प्रोक्तानि।

शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दो, ज्योतिषमिति मुण्डकोपनिषदि चोपलभ्यते।[5]

अपि च ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च। अत्र च साङ्गवेदाध्ययनं ब्राह्मणस्याध्ययन-विधि-प्रदर्शनमात्रेणैव नालम्, अपितु परमगम्भीरस्य वेदा-

---

१. सायणाचार्यः, ऋग्वेद संहिता पृ० २२ खण्ड १, वैदिकसंशोधन मण्डल, पूना।

२. अच्युतानन्द झा, बृहत्संहिता भूमिका पृ० १, चौखम्बा विद्या भवन चौक, वाराणसी।

३. प्राणजीवन शर्मा 'मनुस्मृतिः' २।१६८, गुजराती प्रिंटिंग प्रेस, मुम्बई।

४. तत्रैव २।७, गुजराती प्रिंटिंग प्रेस, मुम्बई।

५. मुण्डकोपनिषद् १।५, अष्टाविंशत्युपनिषदः, खेमराज श्रीकृष्णदास, श्रीवेङ्कटेश्वर-स्टीम प्रेस, मुम्बई।

र्थस्याऽवगमनार्थं च शिक्षादीनि षडङ्गानि प्रवृत्तानि। तान्यप्यवश्यमध्येतव्यानि। षडङ्गेषु पुनः ज्योतिषस्य नेत्रत्वं स्वीकृतम्।

> छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
> ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
> शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
> तस्मात्साङ्गमधीत्यैव ब्रह्म-लोके महीयते॥[1]

इति ज्योतिषं वेदचक्षुरिति स्वीकृतम्। अपि च

> यथा शिखा मयूराणां नागानां मणयो यथा।
> तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम्।[2]

इति वेदाङ्गज्योतिषे निरूपितम्।

### (उ) ज्योतिषस्य महिमा

> अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्।
> प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ।[3]

तथा भास्कराचार्यः।—

> वेदचक्षुः किलेदं स्मृतं ज्योतिषं,
> मुख्यता चाङ्गमध्येऽस्य तेनोच्यते॥
> संयुतोऽपीतरैः कर्णनासादिभि-
> श्चक्षुषाङ्गेन हीनो न किञ्चित्करः॥ इति॥[4]

---

१. पाणिनीयशिक्षा श्लोक ४१,४२।

२. उद्धरणम् 'शब्दकल्पद्रुमः' द्वितीयकाण्डः, पृ० ५५०, मोतीलाल वनारसीदास, दिल्ली।

३. चन्द्रशेखरन्, जातकसारदीपः, पृ० ५, मद्रास गवर्मेन्ट ओरियेण्टल सीरिज़, मद्रास।

४. भास्कराचार्यः, सिद्धान्तशिरोमणिः १।११, पृ० ४, चौखम्बा संस्कृत सीरिज़, बनारस।

अस्य प्रयोजनम् ।

ज्योतिष-शास्त्रं हि कालविज्ञापकं, कालज्ञानेन विना यज्ञादिकस्य निष्पन्नता न भवितुमर्हति । उक्तं च—

वेदा हि यज्ञार्थमभिप्रवृत्ताः
कालानुपूर्वा विहिताश्च यज्ञाः ।
तस्मादिदं कालविज्ञानशास्त्रं
यो ज्योतिषं वेद स वेद यज्ञम् ॥[१]

भास्कराचार्योऽपि—

वेदास्तावत् यज्ञकर्मप्रवृत्ताः
यज्ञाः प्रोक्तास्ते च कालाश्रयेण ।
शास्त्रादस्मात्कालबोधो यतः स्यात्
वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात् ॥[२]

नारदोऽपि—

वेदस्य निर्मलं चक्षुः ज्योतिशास्त्रमकल्मषम् ।
विनैतदखिलं श्रौतस्मार्त-कर्म न सिध्यति ।
तस्माज्जगद्धितायेदं ब्रह्मणा रचितं पुरा ॥[३]

अपि च श्रुतिराह—

ते असुरा अयज्ञा अदक्षिणा अनक्षत्राः ।
यच्च किञ्चाकुर्वत तां कृत्यामेवाऽकुर्वत ॥[४]

---

१. उद्धरणम्, शब्दकल्पद्रुमः, द्वितीयकाण्डः, पृ० ५५०, मोतीलाल बनारसीदास, दिल्ली ।

२. भास्कराचार्यः सिद्धान्तशिरोमणिः १।६, पृ०३, चौखम्बा संस्कृत सीरिज़बनारस ।

३. वसतिराम शर्मा, नारद संहिता पृ० २, खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर प्रेस, मुम्बई ।

४. प्रकीर्णम् ।

अर्थाज्ज्योतिषज्ञानं विना नक्षत्रादिशुद्धयात्मकं काल-ज्ञानं नास्ति । नक्षत्रादिशुद्धयात्मकं कालज्ञानं विना यत्किमपि यज्ञादिकं कर्म क्रियते तत्कृत्याधिकृतं दोषावहं भवतीति सिद्धम् ।

मुहूर्तमधिकृत्य कृतं सुकर्म चतुर्वर्गफलप्रदं भवति । तथा च गर्गः

**ज्योतिश्चक्रे तु लोकस्य सर्वस्योक्तं शुभाशुभम् ।**
**ज्योतिर्ज्ञानं तु यो वेद स याति परमां गतिम् ॥**[1]

अनेनेदं सिद्धं यज्ज्योतिषं विना कालज्ञानाभावः । कालज्ञानं विना श्रौतस्मार्तकर्मणां गर्भाधान-जातकर्मप्रभृतिकानां संस्काराणां, तिथिवारनक्षत्रयोगकरणभूतानां पञ्चाङ्ग-शुद्धिमधिकृत्य प्रतिपादितानां तडागारामकूपदेवालयविपणिकागृहारम्भप्रवेशयात्रादिकानां मुहूर्तानां, चान्द्रसौरमासप्रतिपादितानामेकादशी-जन्माष्टमी-शिवचतुर्दशी-प्रभृतिकानां विवध-प्रकाराणां व्रतानां, प्रश्न-जातक-हायन-प्रदर्शनकस्य वस्तुजातस्य, दर्शपौर्णमासचातुर्मास्याष्टकाविषुवायनगवामयन-ज्योतिषामयनादिश्रौतानुष्ठानस्य, महालयक्षयाह-पार्वणैकोद्दिष्ट-प्रभृतिकानां पितृकर्मणां, यज्ञादिदेवकर्मणामृषिकर्मणाञ्चानुष्ठानमेव न भवितुमर्हति । एवं निष्पक्षपात-धियाऽपीदमेव सिद्धं यज्ज्यौतिषं विना लौकिकं वैदिकं च किमपि कर्म न साफल्यमुपयातीति ।

### (ऋ) ज्योतिषशास्त्रभेदः

ज्योतिषशास्त्रस्य त्रिविधत्वं गणित-संहिता-होराभेदेन प्रतिपादितमस्ति । तथा च वराहमिहिरः—

**ज्योतिः शास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम्**
**तत्कात्स्न्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता ॥**

---

१. उद्धरणम्, शब्दकल्पद्रुमः, द्वितीयः काण्डः, पृ० ५५०, मोतीलाल बनारसीदास, दिल्ली ।

स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ
होराऽन्याङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः ।[1]

नारदोऽपि—

सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम् ।।[2]

तथा च बार्हस्पत्ये—

स्कन्धत्रयात्मकं शास्त्रमाद्यं सिद्धान्तसंज्ञितम् ।
द्वितीयं जातकं स्कन्धं, तृतीयं संहिताह्वयम् ।।[3]

पराशरोऽपि—

भगवन् परमं पुण्यं गुह्यं वेदाङ्गमुत्तमम् ।
त्रिस्कन्धं ज्योतिषं होरा, गणितं, संहितेति च ।।[4]

तत्र सिद्धान्तापरनाम्नः गणितस्य लक्षणमाह भास्कराचार्यः—

त्रुट्यादि-प्रलयान्त-कालकलनामानप्रभेदः क्रमात्
चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा चोत्तराः ।
भूधिष्ण्य-ग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते
सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्ध-प्रबन्धे बुधैः ।।[5]

---

१. अच्युतानन्द झा, बृहत्संहिता, १।६, पृ० ३, चौखम्बा विद्याभवन चौक, वाराणसी ।

२. नारदसंहिता, पृ० १, खेमराज श्री कृष्णदास, श्री वेंकटेश्वर स्टीम प्रेस, मुम्बई ।

३. प्रकीर्णम् ।

४. सीताराम झा, बृहत्पाराशरहोराशास्त्रम्, पृ० १, मास्टर खेलाड़ी लाल एण्ड सन्स, काशी, द्वितीय संस्करणम् ।

५. भास्कराचार्यः, सिद्धान्तशिरोमणिः १।६, पृ० ३, जयकृष्णदास हरिदास गुप्त, चौखम्बा सीरिज, बनारस ।

द्वितीयस्य संहिताभागस्य लक्षणमाह बृहत्संहिताकारः—

'दिनकरादीनां ग्रहाणां चारास्तेषु च तेषां प्रकृतिविकृतिप्रमाणवर्ण-किरण-द्युतिसंस्थानास्तमनोदय-मार्ग-मार्गान्तरवक्रानुवक्रर्क्षग्रहसमागम-चारादिभिः फलानि, नक्षत्रकूर्मविभागेन देशेष्वगस्त्यचारः, सप्तर्षिचारः, ग्रहभक्तयो नक्षत्रव्यूहग्रह-शृङ्गाटक-ग्रहयुद्ध-ग्रहसमागम-ग्रहवर्षफलगर्भलक्षणरोहिणीस्वात्याषाढीयोगाः सद्योवर्ष-कुसुमलतापरिधिपरिवेषपरिघपवनोल्कादिग्दाहक्षितिचलन-सन्ध्याराग-गन्धर्वनगर-रजोनिर्घातार्घकाण्डसस्यजन्मेन्द्रध्वजेन्द्रचापवास्तु-विद्याङ्गविद्यावायसविद्यान्तर-चक्र-मृग-चक्रश्वचक्र-वातचक्र-प्रासादलक्षण-प्रतिमालक्षण-प्रतिष्ठापन-वृक्षायुर्वेदोदगार्गलनीराजनखञ्जन कोत्पातशान्तिमयूरचित्रकघृतकम्बलखड्गपट्टकृकवाकु-कूर्म-गोजाश्वेभ-पुरुषस्त्रीलक्षणान्यन्तःपुर-चिन्ता-पिटकलक्षणोपानच्छेद-वस्त्रच्छेदचामर-दण्डशयनाशनलक्षणरत्नपरीक्षादीपलक्षणदन्तकाष्ठाद्याश्रितानि शुभाशुभनिमित्तानि सामान्यानि जगतः प्रतिपुरुषं पार्थिवे च प्रतिक्षणमनन्यकर्माभियुक्तेन दैवज्ञेन चिन्तयितव्यानि ।'[1]

नारदपुराणेऽपि (१।२।५४)

संहिता शास्त्ररूपं च ग्रह-चारोऽब्दलक्षणम् ।
तिथिवासर-नक्षत्रयोगतिथ्यर्द्ध-संज्ञकाः ॥८॥
मुहूर्त्तोपग्रहाः सूर्य-सङ्क्रान्तिगोचरः क्रमात् ।
चन्द्रताराबलं चैव सर्वलग्नार्तवाह्वयः ॥९॥
आधान-पुंस-सीमन्त-जातनामान्तमुक्तयः ।
चौलं कर्णच्छिदामौञ्जीक्षुरिकाबन्धनं तथा ॥१०॥
समावर्तनवैवाहप्रतिष्ठा-सद्मलक्षणम् ।
यात्रा प्रवेशनं सद्योवृष्टिः कर्म विलक्षणम् ॥११॥
उपत्तिलक्षणं चैव सर्वं संक्षेपतो ब्रुवे ।[2]

---

१. अच्युतानन्द झा, बृहत्संहिता २।२१, पृ० ११, चौखम्बा विद्याभवन, काशी ।

२. नारदमहापुराणम्, १।२।५४।८-११, कल्याण, नारदविष्णुपुराणांक, जनवरी १९५४, गीताप्रेस, गोरखपुर ।

होरास्कन्धलक्षणमाह—

अत्र वराहमिहिरः—

'होराशास्त्रे च राशिहोराद्रेष्काणनवांशकद्वादशभाग-त्रिंशद्भागवलावल-परिग्रहो ग्रहाणां दिक्स्थानकालचेष्टाभिरनेकप्रकारवलनिर्धारणं प्रकृति-धातुद्रव्य-जाति-चेष्टादि-परिग्रहो निषेक-जन्मकालविस्मापन-प्रत्ययादेशसद्यो-मरणायुर्दाय-दशान्तर्दशाष्टक-वर्गराजयोग-चन्द्र-योगद्विग्रहादियोगानां नाभसादीनां च योगानां फलान्याश्रयभावावलोकननिर्याणगत्यनूकानि तत्कालप्रश्नशुभाशुभनिमित्तानि विवाहदीनां च कर्मणां कारणम् ।'[1]

अत्र नारदपुराणम्[2]—

जातके राशिभेदाश्च ग्रह-योनिवियोनिजे ।
निषेक-जन्मारिष्टानि ह्यायुर्दायो दशाक्रमः ॥
कर्माजीवं चाष्टवर्गो राजयोगाश्च नाभसाः ।
चन्द्रयोगाः प्रव्रज्याख्याः राशिशीलं च दृक्फलम् ॥
ग्रहभावफलं चैवाश्रय-योगप्रकीर्णके ।
अनिष्टयोगाः स्त्रीजन्मफलं निर्याणमेव च ॥
नष्टजन्मविधानं च तथा द्रेष्काणलक्षणम् ॥७॥

गणितभागविवेचनम् ।

अनेनेदं सिद्धं यज्ज्यौतिषस्य प्रथमभागे केवलं गणित-नामकं ज्योतिषं यत्र सूर्यादि-ग्रहाणां स्पष्टीकरण-प्रसङ्गेन तिथिवारनक्षत्र-योग-करणात्मकस्य पञ्चाङ्गस्य स्पष्टीकरणमुपलभ्यते । सूर्यचन्द्रयोर्ग्रहणकालस्य तत्परिमाणादिकस्य च

---

१. अच्युतानन्द झा, बृहत्संहिता २।१७, पृ० ६, चौखम्बा विद्याभवन चौक, वाराणसी ।

२. नारदमहापुराणम्, १।२।५४।४,५,७, कल्याण, नारदविष्णुपुराणांक, जनवरी १९५४, गीता प्रेस, गोरखपुर ।

स्पष्टीकरणं भवति। गणितज्योतिषं च पाश्चात्यैविज्ञान-रूपेण सर्वैरङ्गीक्रियते फलितविषये तेषान्तत्र मतभेदो विद्यते। फलितज्यौतिषस्यापि प्राचीनत्वं तैः स्वीकृतम् परन्तु फलितज्यौतिषमपि पूर्णविज्ञानमित्यत्र तेषां संदेहः। भारतीयैस्तु फलित-ज्यौतिषस्यापि महिमा प्राचीन-कालादेव स्वीकृतः। आधुनिकाः केचित्पाश्चात्यविचारधारानुयायिनस्तु अस्य गौरवाङ्गीकरणे मुह्यन्ति। भारतीयवाङ्मये वेदादिशास्त्रेषु तु त्रिविधस्कन्धात्मकस्यास्य ज्योतिषस्य वर्णनं सम्यग् रूपेणोपलभ्यते।

**(ख) प्राचीनवाङ्मये उपलब्धानां ज्योतिषसम्बन्धितत्त्वानां क्रमेणोल्लेखः।**

**(अ) वैदिक-वाङ्मये—**

यथा युगवर्णनं तैत्तिरीयब्राह्मणे—

**कृताय सभाविनं त्रेताया आदिनवदर्शनम्।**
**द्वापराय बहिः सदम् कलये सभा-स्थाणुम्॥**[1]

अपरं चैतरेयब्राह्मणे—

**कलिः शयानो भवति सञ्जिहानस्तु द्वापरः।**
**उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरंश्चरैवेति॥**[2]

संवत्सरस्य पञ्च भेदा यजुर्वेदे—

**संवत्सरोऽसि परिवत्सरोऽसीदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि।**[3]

चान्द्रद्वादशमासैः सह त्रयोदशमासस्यापि वर्णनमृग्वेदे—

**वेद मासो धृतव्रतो द्वादश प्रजावतः। वेदा य उपजायते।**[4]

---

१. हरिनारायणआपटे 'तैत्तिरीय ब्राह्मणम्' ३।४।१, आनन्दाश्रम मुद्रणालय, पूना।

२. 'सायणाचार्यः' 'ऐतरेयब्राह्मणम्' ३३।७, आनन्दाश्रम मुद्रणालय, पूना, खिस्ताब्दाः १९३१।

३. श्रीपाददामोदरसातवलेकरः यजुर्वेदसंहिता २७।४५, स्वाध्यायमण्डल, औंध [सातरा]

४. ऋग्वेद संहिता, १।२५।८, स्वाध्यायमण्डल, पारडी जि० सूरत।

यजुर्वेदेऽपि—

त्रयोदशभिरस्तुवत मासाः ।[1]

षड्तूनां द्वादशमासानां च नामनिर्देशो यजुर्वेदे—

मधुश्च माधवश्च वासन्तिकावृतू ।[2]
शुक्रश्च शुचिश्च ग्रैष्मावृतू ।[3]
नभश्च नभस्यश्च वार्षिकावृतू ।[4]
इषश्चोर्जश्च शारदावृतू ॥[5]
सहश्च सहस्यश्च हैमन्तिकावृतू ।[6]
तपश्च तपस्यश्च शैशिरावृतू ॥[7]

अपि च—

षड् वा ऋतवः संवत्सरः ।
द्वादशमासाः संवत्सरः ।
त्रयोदशमासाः संवत्सरः ।

मलमासवर्णनं यजुर्वेदे—

ज्योतिषे स्वाहा मलिम्लुचाय स्वाहा ।
ज्योतिषे स्वाहा स्वाहांऽहस्पतये स्वाहा ॥[8]

---

१. यजुर्वेदसंहिता, १४।२९, स्वाध्यायमण्डल, औंध जि० सतारा ।
२. तत्रैव, १३।२५
३. तत्रैव, १४।६
४. तत्रैव, १४।१५
५. तत्रैव, १४।१६
६. तत्रैव, १४।२७
७. तत्रैव, १५।५७
८. तत्रैव, २२।३०, ३१

मधुमाधवादीनि क्रमशः चैत्र-वैशाखादीनां द्वादशमासानां वैदिक-नामानि सन्ति-तथा चाधिमासक्षयमासादिकमधिकृत्य संसर्पमलिम्लुचांहस्पति-शब्द-त्रयं त्रयोदशमासार्थमङ्कितम् ।

त्रयोदशमासो न शुभकर्मावह इत्यपि चैतरेयब्राह्मणे दृश्यते—

**"तं त्रयोदशान्मासादक्रीणंस्तस्मात् त्रयोदशो मासो नानुविद्यते ।"[1]**

अहोरात्रवर्णनमृग्वेदे—

**ततो रात्र्यजायत ततः समुद्रोऽअर्णवः । समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ।[2]**

अहोरात्रसंख्यापि दृश्यते तत्रैव ऋग्वेदे—

**द्वादशप्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत । तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ।[3]**

अपि चैतरेयब्राह्मणे—

**त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि—**
**—सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रयः ।[4]**

अत्र वर्षस्य षष्ट्युत्तरत्रिशतसंख्याका दिवसाः (३६०) विंशत्युत्तरसप्तशत-संख्याकानि (७२०) अहोरात्राणि च प्रदर्शितानि ।

अयनस्याप्युल्लेखस्तैत्तिरीयसंहितायाम्—

**तस्मादादित्यः षण्मासो दक्षिणेनैति षडुत्तरेण ।[5]**

---

१. सायणाचार्यः, ऐतरेय-ब्राह्मणम्, ३।१, आनन्दाश्रम मुद्रणालय, पूना, खिस्ताब्दः १९३१ ।

२. ऋग्वेदसंहिता, १०।१९०।२, स्वाध्यायमण्डल, पारडी (सूरत) ।

३. तत्रैव १।१६३।४८

४. ऐतरेय ब्राह्मण ७।१७, आनन्दाश्रम, पूना ।

५. हरिनारायण आपटे, तैत्तिरीय संहिता, ६।५।३, आनन्दाश्रम, मुद्रणालय, पूना ।

तिथीनां वर्णनं तैत्तरीयब्राह्मणे—

**चन्द्रमा वै पञ्चदशः। एष हि पञ्चदश्यामपक्षीयते। पञ्चदश्यामापूर्यते १।५।१०।**

**द्वादश पौर्णमास्यः। द्वादशाष्टकाः। द्वादशामावस्याः।**[१]

अत्र पञ्चदशतिथिनिर्देशपूर्वकमपक्षीयमाणापूर्यमाणपक्षद्वयस्य कृष्णशुक्लात्मकस्य वर्णनं स्पष्टम्। कृष्णपक्षस्यान्तिमा तिथिरमावस्या शुक्लस्य च पौर्णमासीत्यपि स्पष्टम्।

अष्टाविंशतिसंख्याकानां सर्वेषां नक्षत्राणां नामोल्लेखनपूर्वकं स्पष्टनिर्देशोऽथर्ववेदे चैकोनविंशकाण्डे—

**"चित्राणि साकं दिवि रोचनानि सरीसृपाणि भुवने जवानि। तुर्मिशं सुमतिमिच्छमानो अहानि गीर्भिः सपर्यामि नाकम्। सहुवमग्ने कृत्तिका रोहिणी चास्तु। भद्रं मृगशिरः शमार्द्रापुनर्वसू सूनृता चारु पुष्यो भानुराश्लेषा अयनं मघा मे पुण्यं पूर्वाफाल्गुन्यौ चात्र हस्तश्चित्रा शिवा स्वाति सुखो मे अस्तु। राधे विशाखे सुहवानुराधा ज्येष्ठा सुनक्षत्रमरिष्टं मूलम्। अन्नं पूर्वा रासन्तां मे अषाढा ऊर्जं ये देव्युत्तरा आ वहन्तु अभिजिन्मे रासतां पुण्यमेव श्रवणः श्रविष्ठाः कुर्वतां सुपुष्टिम् आ मे महच्छतभिषग्वरीय आ मे द्वया प्रोष्ठपदा सुशर्म आ रेवती चाश्वयुजौ भगं म आ मे रयिं भरण्य आ वहन्तु।**[२]

तैत्तिरीय ब्राह्मणे नक्षत्राणां तद्देवतानिर्देशपूर्वकं तृतीयाष्टकस्य प्रथमप्रपाठकस्य प्रथमद्वितीयानुवाकयोश्च सविस्तरं फलनिर्देशपुरःसरं वर्णनमुपलभ्यते।[३]

---

१. हरिनारायण आपटे तैत्तरीयसंहिता १।५।१२ आनन्दाश्रम मुद्रणालय, पूना।

२. अथर्ववेदसहिता १६।७।५, वैदिक यन्त्रालय, अजमेर।

३. हरिनारायण आपटे "तैत्तिरीयब्राह्मणम्" १।५।१, आनन्दाश्रम मुद्रणालय, पूना

**अग्निर्नः पातु कृत्तिका, आर्द्रया रुद्रः प्रथमान एति ।**

अथ चैकस्य पुष्यनक्षत्रस्य गुरुयुतस्य फलवर्णनं विशेषेण दृश्यते ।

**"बृहस्पतिर्वा अकामयत', ब्रह्मवर्चसी स्यामिति स एतं बृहस्पतये तिष्याय नैवारं चरुं पयसि निरवपत् ततो वै स ब्रह्मवर्चस्यभवत् ब्रह्मवर्चसी ह वै भवति यस्तेन हविषा यजते य उ चैनदेवं वेद सोऽत्र जुहोति । बृहस्पतये स्वाहा तिष्याय स्वाहा ब्रह्मवर्चसाय स्वाहेति ।'**[1]

अर्थाद् बृहस्पतिर्ब्रह्मवर्चस्वी भवितुमकामयत स पुष्य-नक्षत्रे चरुमवपत् । अतो यो ब्रह्मवर्चस्वी भवितुं कामयते तेन पुष्यनक्षत्रे यष्टव्यमिति । अत एव ज्योतिषग्रन्थेषु गुरुपुष्ययोगस्य महान् महिमा दृश्यते । गुरुपुष्ययोग एव सर्वार्थ-सिद्धियोग इत्युच्यते ।

तथा चाथर्ववेदेऽपि नक्षत्रजं कुफलमपाकर्तुं प्रार्थना-मन्त्रो दृश्यते ।

**यानि नक्षत्राणि दिव्यन्तरिक्षे अप्सु भूमौ यानि नगेषु दिक्षु ।**
**प्रकल्पयंश्चन्द्रमा यान्येति सर्वाणि ममैतानि शिवानि सन्तु ।**

**अष्टाविंशानि शिवानि शग्मानि सह योगं भजन्तु मे ।**
**योगं च प्रपद्ये क्षेमं च क्षेमं प्रपद्ये योगं च नमोऽहोरात्राभ्यामस्तु ।।'**[2]

अत एवाग्रे तैत्तिरीयब्राह्मणे कुनक्षत्रेषु यजनेन कुफलरूपा हानिरपि भवतीति प्रदर्शितम् । तथाहि—

**यानि वा इमानि पृथिव्याश्चित्राणि तानि नक्षत्राणि । तस्माद-श्लीलनामंश्चित्रे नावस्येन्न यजेत । यथा पापाहे कुरुते तादृग्वै तत् ।'**[3]

न कुनक्षत्रेषु यष्टव्यं न किमपि कार्यं तेषु समाप्यं, यत्किमपि तेषु कृतं भवति तद्दोषावहं पापकरमिति भावः ।

---

१. हरिनारायण आपटे 'तैत्तिरीयब्राह्मणम्', ३।१।४।६ आनन्दाश्रम मुद्रणालय पूना ।
२. अथर्ववेदसंहिता १९।८।१,२, वैदिक यन्त्रालय, अजमेर ।
३. हरिनारायण आपटे, 'तैत्तिरीयब्राह्मणम्', १।५।२, आनन्दाश्रम मुद्रणालय, पूना ।

ऐतरेयब्राह्मणे रोहिणीमृगव्याधप्रसङ्गेन रोहिणीमृगशीर्षनक्षत्रयोः शुभ-कर्मार्हत्वं प्रदर्श्य सुन्दरमालङ्कारिकमाख्यानं दृश्यते।[1]

तैत्तिरीयब्राह्मणेऽपि रोहिणीनक्षत्रे यजनादिकं सुतरां शुभावहमिति निर्दिष्टम्।

रोहिण्यामग्निमादधीत। स्व एवैनं योनौ प्रतिष्ठितमाधत्ते। ऋध्नोत्येतेन।

अपि च—

प्रजापतौ रोहिण्यामग्निमसृजत्। तं देवा रोहिण्यामादधत्। ततो वै ते सर्वान् रोहानरोहन्। तद्रोहिण्यै रोहिणीत्वम् रोहिण्या-मग्निमाधत्ते। ऋध्नोत्येव। सर्वान् रोहान् रोहति।[2]

अत्र नक्षत्रस्य निर्वचनपुरःसरं सेतिहासं शुभत्वमङ्कितम्। इत्थमन्येषामपि नक्षत्राणां पुण्यापुण्यप्रदर्शकं शुभाशुभत्वं दरीदृश्यते।

स पुनर्वस्वोरग्निमादधीत। पुनरेवैनं नाम वसुमावर्तते भद्रो भवति।[3]

अनेन पुनर्वसुनक्षत्रस्य शुभत्वमङ्गीकृतम्।

अन्वेषामरात्स्मेति तदनुराधाः॥
ज्येष्ठमेषामवधिष्मेति तत् ज्येष्ठघ्नी।
मूलामेषामवृक्षामेति तन्मूलबर्हिणी॥
यन्नासहन्त तदषाढाः यदश्रोणात् तच्छोणा. यदशृणोत्
तच्छ्रविष्ठाः यच्छतमभिषज्यन् तच्छतभिषक्॥

---

१. हरिनारायण आपटे 'ऐतरेय ब्राह्मणम्' १३।६, आनन्दाश्रम मुद्रणालय, पूना।

२. हरिनारायण आपटे तैत्तिरीय ब्राह्मणे १।१।१०।६, एवं १।१।२, आनन्दाश्रम मुद्राणालय, पूना।

३. हरिनारायण आपटे तैत्तिरीय-ब्राह्मणम् १।१।१०।६, एवं १।१।२, आनन्दाश्रम मुद्राणालय पूना।

प्रोष्ठपदेषूदयच्छन्त रेवत्यामरवन्त ।
अश्वयुजोरयुञ्जत अपभरणीष्वपावहन् ॥[1]

अपरं च—

यः कामयेत दानकामा मे प्रजाः स्युरिति । पूर्वयोः फल्गुन्योरग्निमादधीत । अर्यम्णो वा एतन्नक्षत्रम् । यत्पूर्वे फाल्गुनी । अर्यमेति तमाहुर्यो ददाति । दानकन्या कामा अस्यै प्रजा भवन्ति ।[2]

यान्येव देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यात् ।[3]

यां कामयेत दुहितरं प्रिया स्यादिति तां निष्ट्यायां दद्यात् प्रियैव भवति ।[4]

अत्र कन्यादानार्थं स्वातिनक्षत्रस्योत्कृष्टत्वं प्रदर्शितम् । निष्ट्या स्वातिनक्षत्रनामेति ज्ञेयम् ।

पौष्णेन व्यवस्यन्ति । मैत्रेण कृषन्ते । वारुणेन विधृता आसते । क्षैत्रपत्येन पाचयन्ते । आदित्येनादधते ।

अत्र विभिन्ननक्षत्रक्रमेण विभिन्नकर्मणः सम्पादनं विहितम् । अथ च तैत्तिरीयसंहितायामुदितेष्वेव व्रतादिकं कर्तव्यमिति दृश्यते ।

उदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं विसृजति ।

इदमेव मूलं परस्तात्प्रदर्शितेषु धर्मशास्त्रेषु चोदितेष्वेव नक्षत्रेषु क्रियमाणव्रतादिकानां विधानस्येति ।[5]

---

१. तैत्तिरीय-ब्राह्मण १।५।२, आनन्दाश्रम मुद्रणालय, पूना ।
२. तत्रैव, १।१।२.
३. तत्रैव, १।५।२.
४. तत्रैव, १।५।२.
५. तत्रैव, १।८।४ एवं ६।१।४।४ ।

अपि च ऋग्वेदेऽपि नक्षत्रमधिकृत्य विवाहानन्तरं गवां ग्रहणम् ।

**सूर्याया वहतु प्रागात्सविता यमवासृजत् ।**
**अघासु हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ॥[1]**

अत्र हन्यन्ते इति शब्दस्य वधार्थे नैव प्रयोगः । अपि तु गृह्यन्ते इत्यर्थः प्रो० पी० वी० काणेमहोदयेन लिखितः । तथा च—

**मघाभिर्गावो गृह्यन्ते । फल्गुनीभ्यां व्यूह्यन्ते । रोहिणी मृग-शीर्षमुत्तरे फल्गुनी स्वातीति विवाहस्य नक्षत्राणि ।**

इति बौधायनगृह्यसूत्रस्योद्धरणं प्रदत्तम् (१।१।१०)[2]

अपि च स्पष्टरूपेण गण्डान्तनक्षत्रान्तर्गतज्येष्ठमूलयोरुत्पन्नस्य बालकस्य नक्षत्रजन्यकुफलपरिहाराय शान्तिरूपेणाग्निप्रभृतिकदेवप्रार्थनामन्त्रोपलब्धिरथर्ववेदे ।[3]

**ज्येष्ठघ्न्यां जातो विचृतोर्यमस्य मूलबर्हणात्परि पाह्येनम् । अत्येनं नेषद् दुरितानि विश्वा दीर्घायुत्वाय शत-शारदाय । व्याघ्रेऽह्न्यजनिष्ट वीरो नक्षत्रजा जायमानः सुवीरः । स मा वधीत्पितरं वर्धमानो मा मातरं प्रमिनीज्जनित्रीम् ।६।११०।२-३।**

अत्र च यमं प्रति ज्येष्ठायामथ च मूले जातस्य बालकस्य कृते रक्षणार्थं, समस्तदुरितापहराय, दीर्घायुष्ट्वाय च मङ्गलकामना विहिता ।
अत्र सायणभाष्यम् ।[4]

---

१. श्रीपाददामोदर सातवलेकरः, ऋग्वेद-संहिता १०।८५।१३, स्वाध्यायमण्डल, पारडी, सूरत ।

२. प्रो० पी० वी० काणे, हिस्ट्री आफ धर्मशास्त्र, पृ० ४६७, पंचमो भागः, प्रथमखण्डः, भण्डारकर रिसर्च इन्स्टीच्यूट, पूना ।

३. सायणाचार्यः अथर्ववेदः. तृतीयो भागः पृ० ५७३, सनातनधर्म यन्त्रालय, मुरादाबाद ।

ज्येष्ठं वयसा प्रवृद्धं हन्तीति ज्येष्ठघ्नी ज्येष्ठाख्यं नक्षत्रम् । तथा च तैत्तिरीयकम्—

**ज्येष्ठम् एषाम् अवधिष्मेति तज्ज्येष्ठघ्नी इति तै० ब्रा० १।५।२।८**

तस्यां ज्येष्ठघ्न्यां जातः पुत्रः ज्येष्ठस्य पितुः भ्रात्रादे-र्हन्ता भवति । तथा च विचृतौ विचर्तन-स्वभावे मूलनक्षत्रे जातः पुत्रः सर्वं कुलं विचृतति हिनस्ति । मूल-नक्षत्रं मूलोन्मूलनकरम् । तथा च तैत्तिरीयके तन्नामनिर्वचनम्—

**मूलम् एवा अवृक्षामेति तन्मूलबर्हिणी इति (तै० ब्रा० १।५।२।८)**

अतः पापनक्षत्रे जातमेवं कुमारं यम-सम्बन्धिनो यमेन क्रियमाणाद् मूल-बर्हणः सन्तानमूलोच्छेदनात् सर्वतो रक्ष । एनं पुत्रं सर्वाणि दुरितानि अतिक्रमयन्तु । चिरकाल-जीवनाय शतसंवत्सर-परिमित-जीवनमस्तु ।

द्वितीयमन्त्रस्य स्पष्टो भावः । यत्पापनक्षत्रे जातोऽयं बालो मातरं पितरं वा मा हन्यादिति प्रार्थना ।

ग्रहशान्तिप्रार्थनाऽपि चाथर्ववेदे—

**शन्नो ग्रहाश्चान्द्रमसाः शमादित्याश्च राहुणा ।**
**शन्नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः ॥**[1]

अत्र सायणभाष्यम्—

चन्द्रमसः सम्बन्धिनः चन्द्रमण्डलस्य भेदकाः संघर्षका ये अंगारकाद्या ग्रहाः सन्ति ते नः शं भवन्तु । राहुणा ग्रस्तः आदित्यश्च शान्त्यै भवतु तथा मृत्युः मारको धूमकेतुः उत्पातः । धूमकेतोरनिष्टकारित्वं सूत्रितम् ।

**अथ यत्रैतद् धूमकेतुः सप्त ऋषीन् उपधूपयति तद् अयोग-क्षेमाशङ्कम् (इति कौशिक० १३।३५)**

**स धूमकेतुः शशम् दोषनिर्घाताय भवतु ।**[2]

---

१. सायणाचार्यः अथर्ववेदः, सप्तमो भागः १६।६।१० सनातनधर्म प्रेस, मुरादाबाद ।
२. तत्रैव, सप्तमो भागः, पृ०८६, सनातनधर्म प्रेस, मुरादाबाद ।

**उत्पाताः पार्थिवान्तरिक्षाः शं नो दिविचरा ग्रहाः ।**
**शन्नो भूमिर्वेप्यमाना शमुल्का निर्हतं च यत् ॥**[1]

**नक्षत्रमुल्काभिहतं शमस्तु।**

कम्पमाना भूमिराकाशात्पतिता नक्षत्ररूपा चोल्का मारणार्थं शत्रुभिः कृता अभिचारा भूमेरधोऽस्थिकेशादिवेष्टिता विषवृक्षादि-निर्मिताः पुत्तल्योऽस्माकं शं भवन्तु चेति सायणभाष्यभावार्थः । एतन्मूलमधिकृत्यैव वराहमिहिरप्रभृतिकै-राचार्यैः संहिताग्रन्थेषु ग्रहनक्षत्रोल्काभूमिनिघातोत्पातानां पल्लवनं विहितम् ।[2]

**उपनिषत्सु—**

उपनिषत्स्वपि ज्योतिषस्योल्लेखो विद्यते । तथाहि छान्दोग्योपनिषदि नक्षत्रविद्यानिर्देशः—

**स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थ-मितिहासपुराणं पञ्चमं वेदानां वेदं ...नक्षत्रविद्यां सर्पदेवजनविद्या-मेतद्भगवोऽध्येमि ।**[3]

एवमन्यत्रापि ज्ञेयम् ।

वेदांगज्योतिष-नाम्ना पुस्तकत्रयमुपलभ्यते । ऋग्वेदज्योतिषम् । यजुर्वेद ज्योतिषम् । अथर्ववेदज्योतिषम् । अत्र पुस्तकत्रये यद्यपि प्रायशः पाठसाम्यन्तथापि ज्योतिषस्य विषयविवेचनमतीव प्राचीनमुपलभ्यते ।

## (इ) वेदाङ्गान्तरेषु

**कल्पसूत्रेषु—**

---

१. सायणाचार्यः, अथर्ववेदः, सप्तमोभागः ७,८,६ । सनातनधर्म प्रेस, मुरादाबाद ।

२. तत्रैव, पृ० ८२, ८३, ८४ ।

३. छान्दोग्योपनिषद् ७।१।२, अष्टात्रिंशदुपनिषदः, खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम यन्त्रालय, मुम्बई ।

आश्वलायनस्य गृह्यसूत्रे—

**श्रावण्यां पौर्णमास्यां श्रवणकर्म (२।१।१)**

इत्यत्र—

**'मार्गशीर्ष्यां प्रत्यवरोहणं चतुर्दश्याम्' (२।३।१)**

इत्यत्र च—

**'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका' (२।४।१)**

अत्रापि

**सीमन्तोन्नयनं…यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात् (१।१४)**

इत्यादिकं श्रौतसूत्रेऽपि (४।१२) मधुमाधवादिकानां मासानामृतूनां चोल्लेखः स्पष्टतयोपलभ्यते।[1]

पारस्करसूत्रेष्वपि—

**त्रिषु त्रिषु उत्तरादिषु स्वातौ मृगशिरसि रोहिण्याम्—**

इति विवाहमुहूर्ते नक्षत्राणां निर्देशः अस्मिन् गृह्यसूत्रे विद्यते (२।१६) गृह्यसूत्रे चास्मिन् ज्येष्ठानक्षत्रे कृषिकर्मसम्पादनं प्रोक्तम्। (१।२१) इति गृह्यसूत्रेमूलनक्षत्रजजातकफलमुपलभ्यते। यथा हि

**मूलांशे प्रथमे पितुर्नष्टो द्वितीये मातुस्तृतीये धनधान्यस्य चतुर्थे कुलशोकावहः स्वयं पुण्यभागी स्यात् इति।[2]**

अन्यसूत्रेषूल्लेखः—

*अन्यसूत्रेष्वपि ज्योतिषस्य वर्णनं द्रष्टव्यम्। तथाहि बौधायनसूत्रे—*

**'मीनमेषयोर्मेषवृषभयोर्वसन्तः'। पुण्ये नक्षत्रे दारान् कुर्वीत।**

---

१. शिवनाथ झारखण्डी, भारतीय ज्योतिष, पृ० १४३, प्रकाशनब्यूरो सूचना विभाग, उत्तर प्रदेश।

२, तत्रैव, पृ० १४३, १४४।

इति गोभिलगृह्यसूत्रे ११।१।१ विद्यते । इत्यादीनि वचनानि प्रायः सर्वेषु सूत्रग्रन्थेषु विद्यन्ते ।[1]

निरुक्ते—

*निरुक्तेऽपि यास्केन द्वितीयाध्याये मुहूर्तक्षणनामनिर्देशेन कालपरिमाणोल्लेखो विहितः ।*[2]

**सप्त ऋषीणानि ज्योतींषि,**[3]

तथा च चतुर्दशाध्याये दिनरात्रिशुक्लपक्षकृष्णपक्षोत्तरायणदक्षिणायनादिक कालवर्णनं विहितम् ।[4]

पाणिनीय-व्याकरणे—

अत्रापि ५।१।८८, ७।३।१६ ४।१-२७, ५।१।१३०, सूत्रेषु वर्षहायन चैत्रादिमासानां ४।२।२१ सूत्रे ३।३।६ सूत्रे च नाडीशब्दस्योल्लेखः अपि च ३।१।११६ सूत्रे तिष्यार्थे पुष्यसिध्यशब्दयोरुल्लेखो दृश्यते ।

**छन्दसि पुनर्वस्वोरेकवचनं १।२।६१ विशाखयोश्च १।२।६२**

इति सूत्रयोः नक्षत्राणामुल्लेखः । अपि च ३।३।१३७, ५।२।२५, ५।१।८५, ५।१।८३, ५।१।८८, ७।४।२५, ४।२।२३, ४।३।३४, ४।२।२२, ५।३।५०, ५।४।११०, ४।३।६४, १।२।६३, ४।३।३४, ६।४।१४९, १।२।६०, ४।३।३४, १।२।६२, ४।३।२८, ४।३।३६, ४।१।१४९ । एतत्संख्याकेषु सूत्रेषु चाहोरात्रपक्षमासपण्मासामावस्या-पौर्णमासी-कृत्तिका-मृगशीर्षार्द्रापुनर्वसु-तिष्यफाल्गुनी-हस्तचित्राविशाखानुराधा-मूलाषाढा-श्रवणशतभिषक्-प्रोष्ठपदा-रेवत्यश्वयुजादीनां

---

१. शिवनाथ झारखण्डी, भारतीय ज्योतिष पृ० १४४, प्रकाशन ब्यूरो सूचना विभाग, उत्तर प्रदेश ।

२. दुर्गाचार्यः 'निरुक्तम्', २।७।३, मनसुखराय मोर ५ क्लाईव रो, कलकत्ता ।

३. तत्रैव १०।३।२.

४. तत्रैव, चतुर्दशोऽध्यायः ।

कालज्ञापकानां दिनतिथिनक्षत्रादीनां च स्पष्टतया निर्देशः कृतोऽस्ति।[1]

## राधीक्ष्योर्यस्य विप्रश्नः (१।४।३६)

इति सूत्रे फलितज्योतिषस्योल्लेखः ऋगयनादिगणे चाप्योत्पात-संवत्सर-मुहूर्त-नमित्त-विषयाणामध्येतृणामौत्पातिक—सांवत्सरिक-मौहूर्तिक-नैमित्तिक—जनानांचोल्लेखो विद्यते। ये शारीरिकलक्षणैः शकुनादिभिरुत्पातादिभिर्मुहूर्त्तादिभिश्च भविष्यत्फलं प्रवदन्ति, इमे दैवज्ञा उच्यन्ते।[2]

## (उ) शास्त्रेषु

याज्ञवल्क्यस्मृतौ चाचाराध्याये ग्रहयज्ञस्य विधानं दृश्यते। यत्र ग्रहाणां कुफलदूरीकरणार्थं तेषां पृथक् पृथक् मन्त्राणां निर्देशो विद्यते। २६३ पद्यादारम्य ३०८ पद्यान्तं ग्रहशान्ति-प्रकरणस्य वर्णनमुपलभ्यते। ग्रहनामानि यथा—

सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः।
शुक्रः शनैश्चरो राहुः केतुश्चैव ग्रहाः स्मृताः ॥२९६॥
ग्रहाधीनं नरेन्द्राणामुच्छ्रयाः पतनानि च।
भावाभावौ च जगतस्तस्मात् पूज्यतमा ग्रहाः ॥३०८॥

अपि च

यस्य यश्च यदा दुःस्थः स तं यत्नेन पूजयेत्।
ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥३०७॥[3]

---

१. वासुदेवशरण अग्रवालः 'पाणिनिकालीन भारतवर्ष', पृ० १७२, मोतीलाल बनारसीदास, नेपाली खपरा, बनारस।

२. तत्रैव, पृ० ३२८।

३. याज्ञवल्क्य स्मृतिः १।२९६, ३०८, स्मृतिसन्दर्भः, तृतीयो भागः मनसुखराय मोर, ५ क्लाइव रो, कलकत्ता।

मनुस्मृतावपि—

**कालं कालविभक्तींश्च नक्षत्राणि ग्रहांस्तथा ।**[1]

अपि च कालमानवर्णनम्[2]

**निमेषा दश चाष्टौ च काष्ठा, त्रिंशत्तु ताः कलाः ।**
**त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रं तु तावतः ॥**

एवमग्रे कृष्णशुक्लपक्षयोः दक्षिणोत्तरायणयोः चतुर्युगस्य च लक्षणादिकं कथितम् ।[3]

अन्यस्मृतिष्वपि ज्योतिषस्य चर्चोपलभ्यते ।

विष्णुस्मृतौ—

अत्र विंशाध्याये दक्षिणायनसंवत्सराहोरात्रमासवर्षचतुर्युगकल्पादिककालमानस्य स्पष्टो निर्देशो दृश्यते ।[4] अपि च तत्रैव कालमधिकृत्य कृत्याकृत्यस्य चर्चा विद्यते । तथाहि—

**श्रावण्यां प्रौष्ठपद्यां वा छन्दांस्युपाकृत्यार्द्धपञ्चमासानधीयीत । नाधीयीताहोरात्रं चतुर्दश्यष्टमीषु च । नाकालवर्षविद्युत्स्तनितेषु । न भूकम्पोल्कापातदिग्दाहेषु ॥**[5] **अमावस्यायां नाश्नीयाद्दन्तकाष्ठं कदाचन ।**[6]

---

१. प्राणजीव शर्मा, मनुस्मृतिः १।२४, मणिलाल इच्छाराम देशाई, गुजराती प्रेस मुम्बई ।

२. तत्रैव, १।६४ ।

३. तत्रैव, १।६५-७३ ।

४. विष्णुस्मृतिः, विंशोऽध्यायः, स्मृतिसन्दर्भः, प्रथमो भागः, ५ क्लाईव रो, कलकत्ता ।

५. तत्रैव, उनत्रिंशो ध्यायः, पृ० ४६१-४६२ ।

६. तत्रैव, एकषष्ठितमोऽध्यायः, पृ० ४६६ ।

अत्रैव आदित्यसंक्रमणं विषुवद्वयं विशेषेणायनद्वयं व्यतिपातजन्मर्क्षमधिकृत्य श्राद्धकरणनिर्देशः।[1]

अत्रैव च पूर्णिमादिकतिथीनां, कृत्तिकादिनक्षत्राणां, वैशाखादिकमासानां निर्देशेन विविधकर्मणां, पुण्यादिफलप्राप्तिकथनम्।[2]

अपि च राजधर्मकथन-प्रसङ्गे शान्तिस्वस्त्ययनैर्दैवोपघातान्, प्रशामयेदिति शान्त्युपायचर्चापि विद्यते।[3]

बृहत्पाराशरस्मृतौ—

अत्र च दशमाध्याये सूर्यसंक्रमण-चन्द्रसूर्यग्रहण-मासपक्षतिथ्यादिकमधिकृत्य दानादिकस्य महिमा दृश्यते। एकादशाध्याये सर्वेषां शान्ति-विधानानां प्रसङ्गे ग्रहशान्तिविधानमुपलभ्यते।[4]

बोधायनस्मृतौ—

अत्र नवग्रहाणां नक्षत्राणां च कुफलदूरीकरणार्थं तर्पणविधिस्तथा नव-ग्रहाणां स्पष्टोल्लेखो दृश्यते।

**ओम् आदित्यं तर्पयामि, ओं सोमं तर्पयामि, ओं अंगारकं तर्पयामि, ओं बुधं तर्पयामि, ओं बृहस्पतिं तर्पयामि, ओं शुक्रं तर्प-यामि, ओं शनैश्चरं तर्पयामि, ओं राहुं तर्पयामि, ओं केतुं तर्पयामि। साहोरात्राणि सुमुहूर्तानि तर्पयामि। सग्रहाणि साहोरात्राणि**

---

१. विष्णुस्मृतिः सप्तसप्ततितमोऽध्यायः, पृ० ५१६।

२. तत्रैव, नवतितमोऽध्यायः, पृ० ५२६।

३. तत्रैव, तृतीयोऽध्यायः, पृ० ४१०।

४. बृहत्पाराशरस्मृति' दशमैकादशौ अध्यायौ, स्मृतिसन्दर्भः, द्वितीय भागः, मनसुख-राम मोर, ५ क्लाईव रो, कलकत्ता।

सुमुहूर्त्तानि तर्पयामि ।[1]

ब्रह्मोक्तयाज्ञवल्क्यसंहितायाम्—

अत्रापि दशमोऽध्यायो विनायकग्रहशान्तिवर्णनात्मको विद्यते ।[2]

कौटिल्यार्थशास्त्रे—

कौटिल्यार्थशास्त्रेऽपि ज्योतिषस्य चर्चा पूर्णरूपेणोपलभ्यते । तथाहि—

**शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविचितिर्ज्योतिषमिति चाङ्गानि ।[3]**

अत्र वेदस्य षडंगेषु ज्योतिषस्य ग्रहणम् ।

अपि च

**पुरोहितमुदितोदितकुलशीलं षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमापदां दैवमानुषीणाम् अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत ।[4]**

अत्र दैवशब्देन होरासंहिताभागद्वयस्य ग्रहणम् । निमित्त-शब्देन शकुनशास्त्रस्य ग्रहणम् । अर्थाज्ज्यौतिषस्य होरासंहिताशकुनादिकभागविज्ञातारं पुरोहितं राजा नियुञ्जीत । अपि च स पुरोहितः दैवमानुषीणामापदामथर्ववेदोक्तशान्त्युपायादिभिः प्रतिकर्तुं निष्णातो भवेदिति । अनेन ज्योतिष शास्त्रोक्त शान्त्युपायादीनामपि निर्देशः । एवं च द्वितीयाधिकरणे षट्त्रिंशे प्रकरणे विंशाध्याये त्रुटिलवनिमेषादिकादारभ्य काष्ठाकलानाडिकामुहूर्त्त दिनमानाहोरात्रपक्षमासर्तु नक्षत्रा-

---

१. बौधायनस्मृतिः, २४। १०४-११२, २६, २८, स्मृतिसंदर्भः, तृतीयोभागः, मनसुखराय मोर, ५ क्लाइव रो, कलकत्ता ।

२. ब्रह्मोक्तयाज्ञ्यवल्क्यसंहिता, दशमोऽध्यायः, स्मृतिसन्दर्भः चतुर्थोभागः, मनसुखराय मोर, ५ क्लाईव रो, कलकत्ता ।

३. कौटिलीय-अर्थशास्त्रम्, चौखम्बा विद्याभवन, वाराणसी, खं्ष्टाब्दाः १९६२, १।१।२, पृ० १२ ।

४. तत्रैव, १।४।८, पृ० २६ ।

मनपञ्चविध सम्वत्सरादिकस्य सकलस्य कालमानस्य लक्षणादिक मुपलभ्यते । अत्र च चैत्रवैशाखज्येष्ठादिकानि मासानां नामान्यपि स्पष्टतयोल्लिखितानि सन्ति ।[1]

वात्स्यायनकामशास्त्रे—

वात्स्यायन-कामसूत्रेऽपि ज्योतिषस्य चर्चोपलभ्यते । तथा हि—

**दैवचिन्तकरूपश्च शकुननिमित्तग्रहलग्नबललक्षणदर्शनेन नायकस्य भविष्यन्तमर्थसंयोगं कल्याणमनुवर्णयेत् ।[2]**

अत्र नायक-प्रेरितो दैवज्ञः काकादेः शकुनस्य, अन्यशुभनिमित्तानां शुभग्रहाणां लग्नादुपचयस्थानेषु स्थितानाञ्च बलेन दिक्कालस्थानस्वभावैः, शङ्खचक्रादेर्दर्शनात्मकेन लक्षणेन च भविष्यन्तमर्थसंयोगं सेनापत्यध्यक्षपत्तनादिलाभादिकल्याणं कन्यावरयोश्च चिन्तयेदिति यशोधरविरचितजयमङ्गलटीकायां स्पष्टोऽर्थो दृश्यते ।[3]

अपि च—

**दैवनिमित्तशकुनोपश्रुतीनामानुलोम्येन कन्यावरयेद्दद्याच्च ।[4]**

अत्र ज्योतिषशास्त्रस्य निमित्तशकुनलक्षणादीनामपि स्पष्टो निर्देश उपलभ्यते ।

अनेनेदं सिध्यति वात्स्यायनकामसूत्ररचनाकाले मेषादिलग्नानां षड्बलेन शकुननिमित्तलक्षणादिभिश्च दैवचिन्तका दैवज्ञा भविष्यफलप्रोक्तार आसन् ।

---

१. कौटिलीय-अर्थशास्त्रम्, चौखम्बा विद्या भवन, वाराणसी, ख्रीष्टाब्दाः १९६२, २।३६।२०, पृ० २२३ ।

२. माधवाचार्यः, वात्स्यायन-प्रणीत-कामसूत्रम् ३।१।६, पृ० ५७६, प्रथमो भागः, खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम प्रेस, मुम्बई ।

३. तत्रैव, पृ० ५७६ द्रष्टव्यम् ।

४. तत्रैव, ३।१।८, पृ० ५८० ।

## (ऋ) इतिहासपुराणेषु

वाल्मीकीय रामायणे—

अत्र षड्तूनां कर्कटलग्नस्य चैत्रमासस्य नवमीतिथेरदितिनामकनक्षत्रस्य श्रीरामजन्मकालं प्रतिपादयता ग्रहाणामुच्चादिकत्वमपि महर्षिवाल्मीकिना प्रदर्शितम्।

ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः।
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ॥
नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु।
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह॥
प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम्।
कौसल्याजनयद्रामं दिव्यलक्षणसंयुतम्॥[1]

अपि चात्र फलित-ज्योतिष-विषयेऽतीव प्रामाणिको निर्देशो महाराजस्य दशरथस्य श्रीरामेण सह संवादे अशुभस्वप्न-निर्घातमहोल्कापातमहास्वनादिकाशुभ-लक्षणानां वर्णनम् गोचरग्रहानुगतपापग्रहाणां सूर्यमङ्गलराहूणां योगेनाशुभमृत्यु-सूचकयोगानां दैवज्ञानाञ्च स्पष्टं वर्णनम्।

अपि चाद्याशुभान् राम स्वप्ने पश्यामि दारुणान्।
सनिर्घाता महोल्काश्च पतिता हि महास्वनाः॥
अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः।
आवदेयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः॥
प्रायेण हि निमित्तानामीदृशानां समुद्भवे।
राजा हि मृत्युमाप्नोति घोरां वाऽऽपदमृच्छति॥

---

१. पट्टी श्रीनिवास शास्त्री, वाल्मीकिप्रणीतं रामायणम्, बालकाण्डे १८।८-१०, गुजराती प्रिंटिंग प्रेस, ३०८ बाजार गेट स्ट्रीट इल्फिन स्टोन सर्कल, बम्बई।

अत एवात्र महाराजो दशरथो दैवज्ञोक्तं मृत्युमवगम्य भीतः सन् रामं यौवराज्येनाभिषेचयितुं दैवज्ञोक्तपुण्ययोगात्मकस्य मुहूर्तस्य प्रशंसामाह।

अद्य चन्द्रोऽभ्युपगतः पुण्यात्पूर्वं पुनर्वसू।
श्वः पुण्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः॥
तत्र पुण्येऽभिषिचस्व मनस्त्वरयतीव माम्[1]

वनं प्रस्थितस्य रामस्य मङ्गलं कामयमानायाः कौशल्यायाः स्वस्तिवाचने ग्रहनक्षत्रादिकस्य कृते प्रार्थना चोपलभ्यते।

द्यौरन्तरिक्षं पृथिवी नद्यः सर्वास्तथैव च।
नक्षत्राणि च सर्वाणि ग्रहाश्च सहदेवताः॥
अहोराजे तथा सन्ध्ये पान्तु त्वां वनमाश्रितम्।
ऋतवश्चैव षट् पुण्या मासाः संवत्सरास्तथा॥
कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते।[2]

अन्यदपि ग्रहगोचरानुसारमशुभफलवर्णनम्--

प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम्।
समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः॥
कोसलानां च नक्षत्रं व्यक्तमिन्द्राग्निदैवतम्।
आक्रम्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे॥[3]

---

१. कट्टी श्रीनिवास शास्त्री, वाल्मीकिप्रणीतं रामायणम्, अयोध्याकाण्ड ४।१७-१६, २१,२२। गुजराती प्रिंटिग प्रेस, ३०८ बाजारगेट स्ट्रीट, इलफिनस्टोन सर्कल, बम्बई-१

२. तत्रैव, अयोध्याकाण्ड, २५।१४-१६।

३. तत्रैव, युद्धकाण्डे १०२।३२, ३५, ३६।

अपि च—

> नैर्ऋतं नैर्ऋतानां च नक्षत्रमतिपीड्यते ।
> मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ॥
> सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् ।
> काले कालगृहीतानां नक्षत्रं ग्रहपीडितम् ॥[1]

तथा चाभिजिन्मुहूर्त्तप्रशंसा—

> अस्मिन्मुहूर्त्ते सुग्रीव प्रयाणमभिरोचय ।
> युक्तो मुहूर्त्ते विजये प्राप्तो मध्यं दिवाकरः ॥

अन्यदपि चोत्तराफाल्गुनीहस्तनक्षत्रवर्णनपूर्वकं यात्रामुहूर्त्तोल्लेखः—

> उत्तराफाल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।
> अभिप्रयामः सुग्रीव सर्वानीकसमावृताः ॥
> निमित्तानि च पश्यामि यानि प्रादुर्भवन्ति वै ।
> निहत्य रावणं सीतामानयिष्यामि जानकीम् ॥[2]

एवञ्चान्यत्रापि बहव उल्लेखाः दृश्यन्ते ।

महाभारते—

महाभारते तु ज्योतिषस्य विशदवर्णनमुपलभ्यते । पाण्डवानां जन्मसमय निरूपणम् । तत्र युधिष्ठिरस्य—

> ऐन्द्रे चन्द्रसमायुक्ते मुहूर्त्तेऽभिजितेऽष्टमे ।
> दिवा मध्यगते सूर्ये तिथौ पूर्णेऽतिपूजिते ॥

---

१. वाल्मीकीयरामायणे, युद्धकाण्डे ४।५१, ५२ ।

२. तत्रैव, युद्धकाण्डे ४।३, ५६ ।

भौमस्य—

> मघे चन्द्रसमायुक्ते सिंहे चाभ्युदिते गुरौ ।
> दिवा मध्यगते सूर्ये तिथौ पुण्ये त्रयोदशे ॥

अर्जुनस्य—

> उत्तराभ्यां तु पूर्वाभ्यां फाल्गुनीभ्यां ततो दिवा ।
> जातस्तु फाल्गुने मासि तेनासौ फाल्गुनः स्मृतः ॥[1]

पञ्चानां वर्णनम्—

> अनुसंवत्सरं जाता अपि ते कुरुसत्तमाः ।
> पाण्डुपुत्रा व्यराजन्त पञ्च संवत्सरा इव ॥[2]

नवग्रहाणामुल्लेखः—

> शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ।
> शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च ॥[3]

ग्रहाणां गोचरस्थित्या पापसंयोगमन्वीक्ष्य भविष्यज्जनसंहारस्यावश्यंभावित्वं ज्ञात्वा कर्णस्य श्रीकृष्णेन सह संवादः ।

> प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः ।
> शनैश्चरः पीडयति पीडयन् प्राणिनोऽधिकम् ॥
> कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन ।
> अनुराधां प्रार्थयते मैत्रं संगमयन्निव ॥
> विशेषेण हि वार्ष्णेय चित्रां पीडयते ग्रहः ।

---

१. महाभारतम्, आदिपर्व १२२।६, १६, ३५, गीता प्रेस, गोरखपुर ।
२. तत्रैव, आदिपर्व, १२३।२२ ।
३. तत्रैव, सभापर्व ११।२६ ।

सोमस्य लक्ष्म व्यावृत्तं राहुरर्कमुपैति च ।
दिवश्चोल्काः पतन्त्येताः सनिर्घाता सकम्पनाः ॥[1]

युद्धात्पूर्वं व्यासस्य धृतराष्ट्रं प्रति पापग्रहाणां पापयोगं दृष्ट्वा नरसंहारस्यानिवार्यतां संभाव्य ग्रहसंचारवर्णनम् ।

श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति ।
अभावं हि विशेषेण कुरूणां तत्र पश्यति ॥
धूमकेतुर्महाघोरः पुष्यं चाक्रम्य तिष्ठति ।
मघास्वाङ्गारको वक्रः श्रवणे च बृहस्पतिः ॥
भगं नक्षत्रमाक्रम्य सूर्यपुत्रेण पीड्यते ।
शुक्रः प्रोष्ठपदे पूर्वे समारुह्य विरोचते ॥
रोहिणीं पीडयत्येवमुभौ च शशिभास्करौ ।
चित्रास्वात्यन्तरे चैव विष्ठितः परुषो ग्रहः ॥
वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः ।
ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः ॥
संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ ।
विशाखायाः समीपस्थौ बृहस्पतिशनैश्चरौ ॥[2]

पुराणेषु—

पुराणेषु तु सर्वत्र त्रिस्कन्धात्मकस्य ज्योतिषस्योल्लेखो विद्यते । तत्रापि नारदपुराणे त्रिस्कन्धस्य पूर्णरूपेणोल्लेखो दृश्यते ।

नारदपुराणे पूर्वभागस्य द्वितीय-पादे चतुःपञ्चाशदध्यायादारभ्य षट्पञ्चाशाध्यायान्त सिद्धान्तस्य होराभागस्य संहिताभागस्य च पृथक्त्वेन लक्षणनिर्देशपूर्वकं स्पष्टोल्लेखः ।—

---

१. महाभारत उद्योगपर्व १४३।८-११, गीता प्रेस, गोरखपुर ।
२. तत्रैव, भीष्मपर्व, ३।१२-२७ ।

अत्र तु होराशास्त्रस्य सर्वाङ्गाणां चर्चा।

गणितभागे परिकर्मणः ग्रहाणां मध्यमस्पष्टक्रियाया अनुयोगस्य सूर्यचन्द्रयोः ग्रहणोदयास्तच्छायाशृङ्गोन्नतियुतिपातसाधनादिकस्य विशिष्टं वर्णनम्।

जातकस्कन्धे राशिभेदग्रहयोनिवियोनिजनिषेकजन्मारिष्टायुर्दायदशाक्रम-कर्माजीवाष्टवर्गराजयोगनाभसयोग--चन्द्रयोग--प्रव्रज्यायोग--राशिशीलदृक्फलग्रह--भावफलाश्रययोगप्रकीर्णानिष्टयोग--स्त्रीजातकफलनिर्याणनष्टजन्मविधानद्रेष्काण-फलादिकस्य च सम्यगुपन्यासः।

संहिताभागे ग्रहचाराब्दलक्षणतिथिवासरनक्षत्रयोगतिथ्यर्द्धसंज्ञकमुहूर्त्तोप-ग्रहसूर्यसंक्रान्तिग्रहगोचरचन्द्रतारावलसर्वलग्नार्तवाह्वयाधानपुंस-सीमन्तजातनामा-न्नप्राशनचूडाकरणकर्णवेधोपनयनमौञ्जीवन्धनक्षुरिकावन्धन--समावर्तन--विवाह--प्रतिष्ठागृहलक्षणयात्रागृहप्रवेशसद्योवृष्टिकर्मवैलक्षण्योत्पत्तिकालक्षणादिकस्य विशिष्टो निर्देशः।[1]

वायुपुराणेऽपि--

वायुपुराणे पञ्चाशदध्यायादारभ्य त्रिपञ्चाशाध्यायान्तं ग्रहाणां परिमाण-वर्णनपूर्वकं तेषां गगने कुत्र कुत्र स्थितिरित्यपि प्रतिपादितम्। ग्रहाणां विभिन्न-नक्षत्रेषूत्पत्तिनिर्देशोऽस्ति। सूर्यस्य राशिनक्षत्रचारानुरूपमुत्तरायणदक्षिणाय-नाविषुवदादिकालस्य च वर्णनमुपलभ्यते। अष्टाविंशतिनक्षत्रेषु पृथक् पृथक् रूपेण श्राद्धस्य विशिष्टं माहात्म्यं द्व्यशीतितमेऽध्याये दृश्यते।[2]

लिङ्गपुराणे—

लिङ्गपुराणेऽपि प्रायशो वायुपुराणवदेव सप्तपञ्चाशादध्यायादारभ्यैक-षष्टितमाध्यायान्तं वर्णनमुपलभ्यते।[3]

---

१. नारदमहापुराणम् १।२।५३, ५४, ५५, ५६ तमा अध्यायाः, कल्याण नारद विष्णु पुराणांक, जनवरी १९५४, गीता प्रेस, गोरखपुर।

२. वायुपुराणम्, ५०. ५१, ५२, ५३, ८२ तमा अध्यायाः, मनसुखराय मोर, ५ क्लाईव रो, कलकत्ता।

३. लिंगपुराणम्, ५७-६१ तमा अध्यायाः मनसुखरायमोर, ५ क्लाईव रो, कलकत्ता।

अग्निपुराणे—

अग्निपुराणेऽपि ज्योतिषस्य विशदं वर्णनं दृश्यते। एकविंशत्यधिक-शततमेऽध्याये नक्षत्रतिथिवारग्रहोद्ग्रास्तसूर्यचन्द्रग्रहणादिकानुरूपं जातकर्मान्नप्राशन-विवाहोपनयनादिकस्य विविधमुहूर्त्तानामुल्लेखः।[1] अत्रैव ज्योतिषस्य माहात्म्यम्।

ज्योतिःशास्त्रं प्रवक्ष्यामि शुभाशुभविवेकदम्।
चातुर्लक्षस्य सारं यत्तज्ज्ञात्वा सर्वविद्भवेत्॥[2]

षड्विंशत्यधिकशततमेऽध्याये नक्षत्राणां यात्राराज्याभिषेकादिकस्य कृते विविध-मुहूर्त्त-प्रसङ्गेन शुभाशुभत्वप्रतिपादनम्। षट्त्रिंशदधिकशततमेऽध्याये नक्षत्रचक्रस्योनचत्वारिंशदधिकशततमेऽध्याये षष्टिसंवत्सराणां चतुःषष्ट्यधिकशततमेऽध्याये च नवग्रहहोमस्य नवग्रहपूजनस्य च वर्णनं दृश्यते।[3]

ब्रह्मवैवर्त्ते—

ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे सप्तमाध्याये श्रीकृष्णजन्मकालिकग्रहस्थिति-वर्णनम्।

वेदातिरिक्ते वुर्ज्ञेये सर्वोत्कृष्टे शुभे क्षणे।
शुभग्रहैर्दृष्टलग्नेऽप्यदृष्टे चाशुभग्रहैः।
अर्द्धरात्रे समुत्पन्ने रोहिण्यामष्टमीतिथौ।
जयन्तीयोगयुक्ते चाप्यर्द्धचन्द्रोदये मुने।[4]

श्रीकृष्णजन्मखण्डे च द्व्यशीतितमोऽध्यायो दुःस्वप्नवर्णननामको विद्यते यत्र विभिन्नवस्तूनां स्वप्ने दर्शनात्कुफलस्य निर्देशः।

---

१. अग्निपुराणम् (१२१ तमोऽध्यायः), मनसुखराय मोर, ५ क्लाईव रो, कलकत्ता।
२. तत्रैव, १२१।१।
३. तत्रैव १२६ तमः, १३६ तमः, १३९ तमः, १६४ तमश्चेध्यायाः।
४. ब्रह्मवैवर्तपुराणम्, द्वितीयो भागः ४।७।६२, ६३, राधाकृष्ण मोर, ५ क्लाईव रो कलकत्ता।

अपि चात्रैव सप्ताधिकशततमेऽध्याये रुक्मिणीविवाहप्रसङ्गे ।

विवाहोचितलग्ने लग्नाधिपति-संयुते ।
सद्ग्रहे क्षण शुद्धे चाप्यसतां दृष्टिवर्जिते ॥
शुभक्षणे शुभर्क्षे च विशुद्धे चन्द्रतारयोः ।
वेधदोषादिरहिते शलाकादिविवर्जिते ॥

अन्यदपि—

भट्टैश्च गणकैश्चैव ज्योतिः-शास्त्र-विशारदैः ।[1]

मत्स्यपुराणे—

मत्स्यपुराणेऽपि द्विनवतितमेऽध्याये ग्रहशान्तिवर्णनम् । त्रिनवतितमेऽध्याये च ग्रहस्वरूपवर्णनम् । एवं मासतिथ्यादिकमधिकृत्य विविधानां व्रतानामुल्लेखः । चतुर्विंशत्यधिकशततमेऽध्याये ज्योतिपचक्रवर्णनं च विशदमुपलभ्यते । पञ्चविंशत्यधिकशततमे सप्तविंशत्यधिकशतमे चाध्याये ग्रहाणां गतिवर्णनं स्वरूपलक्षणञ्चावलोक्यते ।[2]

एवमेवाष्टाविंशत्यधिक-द्विशततमादारभ्य सप्तत्रिंशदधिकद्विशततमाध्यान्तं विविधोल्कापातादीनां दोषाणां कृते शान्तिविधानमष्टत्रिंशदधिकशततमे च ग्रहयज्ञविधानमूनचत्वारिंशदधिक-द्विशततमेऽध्याये यात्राकालमूहूर्त्तोपन्यासश्चत्वारिंशदधिकद्विशततमे चाङ्गस्फुरणविचार एकचत्वारिंशदधिकद्विशततमे च स्वप्नदर्शनविचारो द्विचत्वारिंशदधिकद्विशततमे च यात्रासमये मङ्गलामङ्गलसूचकशकुनवर्णनादिकञ्च दृश्यते ।[3]

पद्मपुराणे—

पद्मपुराणे विविधतिथीनां मासानाञ्चानुरूपाणां व्रतोत्सवानामुल्लेखः प्रथमे

---

१. ब्रह्मवैवर्तपुराणम्, द्वितीयो भागः ४।१०७।४४-४६-४८ । राधाकृष्ण मोर, ५ क्लाईव रो, कलकत्ता ।

२. श्रीमन्मत्स्यमहापुराणम्, गंगाविष्णु श्रीकृष्णदास, लक्ष्मी वेंकटेश्वर प्रेस, मुबम्ई, सं० १९८० वक्रमाब्द (९२, १२४, १२५, १२७ तमा अध्यायाः)

३. मत्स्यपुराणम्, २२८-२४२, तमा अध्यायाः, नन्दलाल मोर, ५ क्लाईव रो, कलकत्ता ।

सृष्टिखण्डे षडशीतितमेऽध्याये बुधगुरुशुक्रशनिराहुकेतूनां पूजाविधिवर्णनमुपलभ्यते[1] षष्ठे चोत्तरखण्डे द्विशततमेऽध्याये ज्योतिर्विदां भविष्यकथनस्य निर्देशश्च दृश्यते। यथा हि—

> ज्योतिर्विदः समाहूता लग्नं दृष्ट्वा बभाषिरे ।
> शिवशर्मन्नयं बालस्तव भावी हरिप्रियः ।।
> उद्धरिष्यति ते वंशं ब्रूमः सत्यं न वै मृषा ।[2]

मार्कण्डेयपुराणे—

मार्कण्डेयपुराणेऽपि पञ्चसप्ततितमेऽध्याये विवाहनक्षत्रकृते रेवतीनक्षत्रस्य शापकथाप्रसङ्गोऽवलोक्यते। यथा हि—

> रेवत्यृक्षं न वै भद्रे चन्द्रयोगि व्यवस्थितम् ।
> अन्यानि सन्ति ऋक्षाणि सुभ्रु वैवाहिकानि ते ।।[3]

कूर्मपुराणे—

कूर्मपुराणेऽपि चैकचत्वारिंशाध्याये ज्योतिश्चक्रस्य द्विचत्वारिंशे चादित्य-व्यूहस्य त्रिचत्वारिंशे च भुवनकोषस्य ग्रहरथस्य च वर्णनं दृश्यते।[4]

स्कन्दपुराणे—

स्कन्दपुराणेऽपि मासतिथिनक्षत्राद्यनुसारेण विविधव्रतानां निर्देश उपलभ्यते। अथ च काशीखण्डे चतुर्दशाध्यायादारभ्याष्टादशाध्यायान्तं ग्रहाणां

---

१. पद्मपुराणम्, प्रथमोभागः, सृष्टिखण्डे ८६ तमोऽध्यायः, मनसुखराय मोर, ५ क्लाईव रो, कलकत्ता।

२. तत्रैव, पंचमो भागः उत्तरखण्डे, २००।३२, ३३।

३. मार्कण्डेयपुराणम् ७५।५५, मनसुखराय मोर, ५ क्लाईव रो, कलकत्ता।

४. कूर्मपुराणम्, ४१, ४२, ४३ तमा अध्यायाः, मनसुखराय मोर, ५ क्लाईव रो, कलकत्ता।

लोकानां वर्णनं तेषां व्रतानां विधानं च दृश्यते ।[1] तृतीये ब्रह्मोत्तरखण्डे चैकविंशाध्याये पराशरमहर्षिणा राजपुत्रस्य भविष्यकथनं भाव्यनिष्टनिवारणोपायशान्त्यादिकस्य च वर्णनमवलोक्यते ।[2]

भविष्यपुराणे—

भविष्यपुराणेऽपि यत्र तत्र सर्वेषां प्रायो मासतिथिवारादिकमधिकृत्य व्रतानामुल्लेखः । विशेषेण चोत्तरपर्वणस्त्रयोदशोत्तरशततमादारम्य पञ्चदशोत्तरशततमाध्यायान्तं ग्रहनक्षत्रव्रतस्य शनैश्चरव्रतस्य सूर्यव्रतस्य ग्रहशान्तिविधानस्य च वर्णनमुपलभ्यते । एवमेवैकचत्वारिंशदधिकशततमेऽध्याये नवग्रहलक्षविधिस्तथा पञ्चचत्वारिंशदधिकशततमे च नक्षत्रहोमविधिर्दृश्यते ।[3]

वराहमिहिरस्य च वृत्तान्तोऽपि दृश्यते चतुर्थखण्डेऽष्टमाध्याये । तथा हि—

**वराहमिहिराचार्यो ज्योतिःशास्त्र-प्रवर्त्तकः ।**
**लङ्कामागम्य तत्रैव ज्योतिःशास्त्रमधीतवान् ॥**
**जातकं फलितञ्चैव मूकप्रश्नं तथाऽदितः ।**
**म्लेच्छैर्विनाशितं यत्तु वेदाङ्गज्योतिषां गतिः ॥**
**पुनरुद्धारितं तेन त्रिधाभूतं सनातनम् ।[4]**

विष्णुपुराणे—

विष्णुपुराणस्य द्वितीयांशीयाष्टमाध्याये कालचक्रप्रसङ्गे सूर्यचारमधिकृत्य द्वादशराशीनां नक्षत्राणाञ्च चर्चा दृश्यते । नवमेऽध्याये ज्योतिश्चक्रस्य द्वादशाध्याये च नवग्रहाणां स्वरूपस्य विशदं वर्णनमुपलभ्यते ।[5]

---

१. स्कन्दमहापुराणम्, चतुर्थो भागः काशीखण्डे १४-१८, तमा अध्यायाः, मनसुखराय मोर, ५ क्लाईव रो, कलकत्ता ।

२. तत्रैव, तृतीयो भागः, ब्रह्मोत्तर-खण्डे २१ तमोऽध्यायः ।

३. भविष्यपुराणम्, खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम प्रेस, मुम्बई, सं० १९६७ वैक्रमाब्दाः, उत्तरपर्वणि १३, १४, १५, ४१, ४५ तमा अध्यायाः ।

४. तत्रैव ४।८।११९-१२५ ।

५. विष्णुपुराणम्, द्वितीयांशस्य, अष्टमनवमद्वादशा अध्यायाः, गीता प्रेस, गोरखपुर ।

विष्णुधर्मोत्तरे—

विष्णुधर्मोत्तरपुराणे प्रथमखण्डे चैकाशीतितमाध्यायादारभ्य षडधिकशततमाध्यायान्तं ज्योतिषस्य विशदं वर्णनमुपलभ्यते । अहोरात्राकल्पाद्यात्मककालस्य, पञ्चविधसंवत्सरफलस्य, अयनमासग्रहनक्षत्रतिथिकरणानां दैवतानाञ्च वर्णनम्, लग्नहोराद्रेष्काणनवांशत्रिंशांशादिकस्य तत्तद्दैवतानाञ्च कथनम्, ग्रहनक्षत्रादिवशाच्छुभाशुभपरिज्ञानम्, पीडितग्रहनक्षत्राणां तत्तद्देशकृपीडाकरत्वम्, जन्माद्याश्रितचन्द्रादिनक्षत्रादिकशुभाशुभकथनम्, अश्विन्यादिनक्षत्रतारा-संख्या-ग्रहनक्षत्रमण्डलादिवर्णनम्, ग्रहर्क्षपूजाविधिवर्णनम्, ग्रहयाग-विधि-प्रकारः, ग्रहहोममन्त्रनिर्देशः, ग्रहशान्तिफलाभिधानम्, ज्योतिश्चक्रस्य वर्णनञ्च विशदरूपेण दृश्यते ।

यथा हि लग्नस्य षड्वर्गस्योल्लेखः—

लग्नं च होरा तथा द्रेष्काणं नवांशकं द्वादशभागसंज्ञम् ।
त्रिंशांशकं चाप्यथ षष्ठमत्र षड्भेदमाहुर्मुनयश्च लग्नम् ॥[1]

देवीभागवतमाहात्म्ये—

देवीभागवतमाहात्म्यस्य चतुर्थाध्याये ऋतवाङ्मुनिचरिते गर्गाचार्यस्य ज्योतिर्वित्त्वकथनं दृश्यते । रेवतीनक्षत्रं प्रति शापः । गण्डान्तनक्षत्रकुफलवर्णनम् । तथा हि—

विचार्य सर्वं तद्धेतुं ज्योतिर्विद्वाचमब्रवीत् ।
गर्ग उवाच ।
रेवत्यन्तं तु गण्डान्तं पुत्र दौःशील्यकारणम् ॥[2]

---

१. विष्णुधर्मोत्तर-महापुराणम्, ८४।१४। खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम प्रेस, मुम्बई सं० १९६९ वैक्रमाब्दाः ।

२. श्रीमद्देवीभागवतपुराणम्, माहात्म्यम् ४।२५, पूर्वार्द्धम्, मनसुख राय मोर, ५, क्लाईव रो, कलकत्ता ।

अथ च दैवज्ञेन मुहूर्त्तादिकस्य निर्देशः—

> आदौ दैवज्ञमाहूय मुहूर्त्तं कल्पयेत् सुधीः ।
> आरभ्य शुचिमासं तु मासषट्कं शुभावहम् ॥
> हस्ताश्विमूलपुष्यर्क्षे ब्रह्मभे चेन्दुवैष्णवे ।
> सत्तिथौ शुभवारे च पुराणश्रवणं शुभम् ॥[1]

ब्रह्माण्डपुराणे—

ब्रह्माण्डपुराणस्य प्रथमभागे द्वाविंशाध्याये ध्रुवमभिवर्त्य सर्वग्रहनक्षत्राणां परिभ्रमणं त्रयोविंशे सूर्यचन्द्रमङ्गलबुधशुक्रगुरुशनिप्रभृतीनां ग्रहाणां रथवर्णनं चतुर्विंशे सूर्यप्रभावेण नक्षत्रतारकाणां द्योतनं ग्रहनक्षत्राणां ज्योतिषाञ्च सन्निवेशोऽपि वर्णितो दृश्यते ।[2]

श्रीमद्भागवते—

श्रीमद्भागवतेऽपि पञ्चमस्कन्धे द्वाविंशाध्याये संवत्सरायनर्तुमासपक्षाहोरात्रादिकस्य सहाभिजिताष्टाविंशतिसंख्याकानां नक्षत्राणां सूर्यादिग्रहाणां च विशदं वर्णनं दृश्यते ।[3]

## (ग) बृहत्पाराशरहोराशास्त्रम्

### (अ) ग्रन्थकर्ता पराशरः

पराशरस्य चर्चा प्रायः सर्वेषु शास्त्रेषु दृश्यते । ऋग्वेदेऽपि सूक्तानां मन्त्राणां च द्रष्टा पराशरो विद्यते ।[4]

---

१. श्रीमद्देवीभागवतपुराणम्, माहात्म्यम्, ५।३।४ । मनसुखराय मोर, ५ क्लाईव रो, कलकत्ता ।

२. ब्रह्माण्डपुराणम्, प्रथमांशस्य द्वाविंशत्रयोविंशचतुर्विंशाध्यायाः, खेमराज श्रीकृष्णदास, श्रीवेङ्कटेश्वर स्टीम प्रेस, मुम्बई ।

३. श्रीमद्भागवतमहापुराणम् ५।२२ गीताप्रेस, गोरखपुर ।

४. श्रीपाददामोदर सातवलेकर, ऋग्वेद संहिता १।६५-७३ एवं ९।९७।३१-४४, स्वाध्याय मण्डल, पारडी जि० सूरत ।

ब्रह्माण्डपुराणेऽयं ब्रह्मणः प्रपौत्रः कथितः ।

अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पादयत्सुतम् ।
स्वाङ्गजं जनयच्छक्तिरदृश्यन्त्यां पराशरम् ॥
काल्यां पराशराज्जज्ञे कृष्णद्वैपायनः प्रभुः ।
द्वैपायनादरण्यां वै शुको जज्ञे गुणान्वितः ॥[1]

अर्थाद् ब्रह्मणः पुत्रो वसिष्ठः, वसिष्ठादरुन्धत्यां सञ्जातः शक्तिः शक्तेः पुत्रः पराशरः । सत्यवत्यां पराशराज्जातो व्यासः । व्यासाच्चारण्यां जातः शुक इति ।

महाभारते पराशर-शब्दस्य निर्वचनं दृश्यते—

परासुरपि यस्तेन वसिष्ठः स्थापितो मुनिः ।
गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥[2]

परासोराशासनमवस्थानं येन स पराशरः, आङ् पूर्वकाच्छासतेर्डरन् इति नीलकण्ठः ।

महाभारते ब्रह्माण्डपुराणवदेव तस्य वंशपरम्परा वर्णितास्ति । अत्रापि तस्य मातुर्नामादृश्यन्तीति कथितम् ।

एकदा वसिष्ठस्याश्रमे विश्वामित्रः समायातस्तस्य वसिष्ठेन कामधेनुद्वारा विविधपदार्थैः स्वागतं विहितम् । विश्वामित्रेण वसिष्ठात्सा कामधेनुर्याचिता । वसिष्ठेन यज्ञधेनुः कामधेनुरिति मत्वा न प्रदत्ता । क्रुद्धेन विश्वामित्रेण प्रेरितो राक्षसभूतः कल्माषपादनृपो वसिष्ठपुत्रं शक्तिं भक्षयितुं जघान । अयं कल्माषपादः शक्तेरपमानं कृतवान् येन शक्तिस्तस्य राक्षसो भवेति शापं प्रदत्तवान् स एव पुनः शक्तिं भक्षितवान् । विश्वामित्रो वसिष्ठस्यान्यपुत्राणामपि नाशं कृतवान् । वसिष्ठश्च दुःखितो भूत्वात्महत्यां कर्तुं विविधयत्नान् अकरोत् परञ्च साफल्यं न अवाप । ततश्च तेन स्वमनुगच्छन्त्याः पुत्रपत्न्याः अदृश्यन्त्या गर्भाद्वेदध्वनिः श्रुतः । सा च वसिष्ठेन पृष्टा का त्वम् । तया कथितम् ।

---

१. ब्रह्माण्डमहापुराणम्, ३।८।९१, ९२, खेमराज श्रीकृष्णदास, मुम्बई ।
२. शब्दकल्पद्रुमः, पृ० ५६, तृतीयः काण्डः, मोतीलाल बनारसीदास, दिल्ली ।

अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य ते।
समा द्वादश तस्येह वेदानभ्यस्यतो मुनेः॥[1]

ततश्च कल्माषपादराक्षसोऽदृश्यन्तीमपि हन्तुं यत्नमकरोत्। परञ्च वसिष्ठेन स्वमन्त्रबलेन तस्या रक्षा विहिता। ततश्च पराशरः समुत्पन्नस्तस्य जातकर्मादि-संस्काराः स्वयं वसिष्ठेन सम्पादिताः।

परासुं वसिष्ठं गर्भस्थोऽयं जीवयामास। अतश्चास्य पराशर इति नामकरणं विहितम्।

पराशरश्च वसिष्ठमेव पितरममन्यत। परञ्चैकदा तस्य मात्रा अदृश्यन्त्या रहस्यं प्रकटीकृतं यत्तस्य पिता राक्षसेन भक्षितः। दुःखितश्च पराशरः सर्वलोक-विनाशाय मतिञ्चकार। वसिष्ठेन सर्वलोकविनाशात् प्रतिषिद्धः पराशरः केवलं सर्वराक्षसानां विनाशाय यज्ञं कृतवान्। यदा राक्षसाः सर्वे नष्टुमारब्धास्तदा महर्षिपुलस्त्येन यज्ञं समापयितुं पराशरः प्रार्थितः। पुलस्त्येन रहस्यं प्रकटी-कृतम्। यत्तस्य पित्रा शक्तिनैव कल्माषपादनृपः शप्तः सन् राक्षसो बभूव। स एव तस्य पितरं हतवान्। अतश्चान्येषां राक्षसानां न कश्चिदपराधः। प्रतिशोधो हिंसा च ब्राह्मणाय न शोभेते। ततश्च पराशरेण यज्ञः समापितः।[2]

इदमेवाख्यानं स्वयं पराशरेण प्रोक्तं विष्णुपुराणेऽपि दृश्यते।[3]

तस्मात्पराशरात्कैवर्त-पालितायामुपरिचरनृपकन्यायां सत्यवत्यां वेदव्यास उत्पन्न इति महाभारतेऽपि कथा दृश्यते।[4]

मत्स्यपुराणे पराशरस्य वंशचरितं वर्णितं दृश्यते। अत्र बहुविधाः पराशराः कथिताः। यथा हि—

---

१. महाभारत, आदिपर्व १७४।१५, गीताप्रेस, गोरखपुर।

२. तत्रैव, १७४-१८० अध्याया, गीता प्रेस, गोरखपुर।

३. विष्णुपुराण १।१।१२-३१, गीता प्रेस, गोरखपुर।

४. महाभारत, आदिपर्व ६३।७०-८४, गीता प्रेस, गोरखपुर।

पराशरस्य त्वं पुत्र शृणु वंशमनुत्तमम् ।
काण्डवपो वाहनपो जैह्नपो भौमतापनः ॥
गोपालिरेषां पञ्चम एते गौराः पराशराः ।

एवमग्रे नीलपराशराणां कृष्णपराशराणां श्वेतपराशराणां श्यामपराशराणां धूम्रपराशराणां च वंशानुचरितं वर्णितम् ।[1]

देवीभागवते मत्स्यगन्धायां सत्यवत्यां पराशराद्वेदव्यासस्य जन्मकथाया विशदं वर्णनं दृश्यते ।[2]

पराशरस्य वाङ्मयम्—

पराशरो मन्त्रद्रष्टा ऋषिः ऋग्वेदे दृश्यते यथा हि—प्रथममण्डले ६५ तमसूक्तादारभ्य ७३ तमसूक्तपर्यन्तम् । शाक्त्यः पराशरः ऋषिरित्युल्लेखः ।[3] नवममण्डलस्य सप्तनवतितमस्य सूक्तस्यैकत्रिंशमन्त्रादारभ्य चतुश्चत्वारिंशमन्त्रान्तं पराशरः शाक्त्य ऋषिः ।[4]

शब्दकल्पद्रुमे—

पराशरः । अयं हि द्वादशाध्यायात्मिकां धर्मसंहितां कृतवान् । सा च कलिकर्तव्यधर्मविषया । यदुक्तं तत्रैव

कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः ।
द्वापरे शङ्खलिखितौ, कलौ पराशरः स्मृतः ॥[5]

---

१. मत्स्यपुराणम् २००।६०-३६, मनसुखराय मोर, ५ क्लाइव रो, कलकत्ता ।

२. श्रीमद्देवीभागवतपुराणम् २।२. अध्यायः, मनसुखराय मोर, ५ क्लाइव रो, कलकत्ता ।

३. श्रीपाददामोदर सातवलेकर, ऋग्वेद-संहिता १।६५-७३ सूक्तानि, स्वाध्याय मण्डली, पारडी, जिला सूरत ।

४. तत्रैव ९।९७।३१-४४ ।

५. शब्दकल्पद्रुमः, तृतीयकाण्डः, पृ० ५६, मोतीलाल बनारसीदास, दिल्ली ।

विष्णुपुराणमपि बृहत्पाराशरहोराशास्त्रवत्पराशरमैत्रेययोरेव संवादः। सापि रचना पराशरस्यैव।[1]

अपि च मनसुखरायमोरप्रकाशिते स्मृति-सन्दर्भे पराशरस्य संहिता-द्वय-मुपलभ्यते। तत्र प्रथमा पराशरस्मृतिः। द्वितीया बृहत्पराशरसंहितेति उभयत्र द्वादशाध्यायाः।[2]

*कौटिलीयेऽर्थशास्त्रेऽपि मुहुर्मुहुः पराशरमतस्योल्लेखो दृश्यते। यथा हि—*

**साधारण एष दोष इति पराशरः।[3] नैतन्मन्त्ररक्षणमिति पाराशराः,[4] अहिभयमेतदिति पाराशराः,[5] सर्वत्राष्टगुण इति पाराशराः,[6] दुर्गव्यसनमिति पाराशराः,[7] अर्थदूषणं गरीय इति पाराशराः।[8]**

एवमयमर्थशास्त्रप्रणेताप्यासीदिति प्रकटीभवति।

मैकडानलमहोदयेन लिखितं यत्—

पराशरस्य शतयातुवसिष्ठाभ्यां सह ऋग्वेदीये तस्मिन् सूक्ते उल्लेखो विद्यते यत्सूक्तं दशनृपाणामुपरि सुदासस्य विजय-प्रशस्तिं प्रकटयति। निरुक्तानुसारेणायं वसिष्ठस्य पुत्र, महाकाव्ये चायं शक्तिपुत्रो वसिष्ठस्य पौत्रश्च कथितः।[9] अनेन

---

१. विष्णुपुराण १।१।२६।३१, गीता प्रेस, गोरखपुर।

२. मनसुखराय मोर, स्मृतिसन्दर्भः, पृ० २, ५ क्लाईव रो, कलकत्ता।

३. वाचस्पति गैरोला, कौटिलीय अर्थशास्त्रम्, पृ० २५, चौखम्बा विद्याभवन, वाराणसी।

४. तत्रैव, पृ० ५४।

५. तत्रैव, पृ० ६५।

६. तत्रैव, पृ० १२७।

७. तत्रैव, पृ० ६८२।

८. वाचस्पति गैरोला, कौटिलीय अर्थशास्त्रम्, पृ० ६६६, चौखम्बा विद्याभवन, वाराणसी।

९. मैकडानल, वैदिक इण्डेक्स, पृ० ४६३, प्रथम खण्ड, मोतीलाल बनारसीदास, दिल्ली।

केषाञ्चिदृग्वेदीयानां सूक्तानां प्रणयनेऽपि श्रेयोऽधिगतमिति डा० कीथमहोदयेन[1] संस्कृतस्येतिहासे प्रतिपादितम् । अपि चासंशयं फलितज्योतिषस्य बहवो ग्रन्था आसन् । वराहमिहिरेणासितदेवलगर्गवृद्धगर्गनारदपराशराणामुल्लेखो विहितः । ते च ग्रन्थाः खण्डिता एवोपलभ्यन्ते । डा० कीथमहोदयेनायमायुर्वेदज्ञोऽपि कथितः ।[2] परं च तस्य पितुर्नाम भिन्नं प्रतीयते येनेदं ज्ञायते यदसावायुर्वेदाचार्यः पराशरो ज्योतिषाचार्यादस्मात् पराशरादन्य एवासीदिति ।

## (इ) ग्रन्थविवरणम् ।

अस्य ग्रन्थस्य बृहत्पाराशरहोराशास्त्रमिति नाम विद्यतेऽतः पूर्वम् ।

होराशास्त्रस्य व्युत्पत्तिमाह—

अहोरात्रमधिकृत्य जन्मेष्ट-घटिकादिकमाश्रित्य जातकस्य येन भूतभव्यवर्तमानात्मकं फलं निरूप्यते तद्धि होराशास्त्रमिति कथ्यते । यथा ह्यस्मिन् ग्रन्थे—

**अहोरात्राद्यन्तलोपाद्धोरेति प्रोच्यते बुधैः ।**
**तस्य हि ज्ञानमात्रेण जातकर्मफलं वदेत् ॥[3]**

बृहज्जातकेऽपि—

**होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापर-वर्ण-लोपात् ।**
**कर्मार्जितं पूर्वभवे सदादि यत्तस्य पङ्क्तिं समभिव्यनक्ति ॥[4]**

---

१. डा० कीथ, हिस्ट्री आफ संस्कृत लिट्रेचर, पृ० ५३०, आक्सफोर्ड यूनिवर्सिटी प्रेस, लण्डन ।

२. तत्रैव, पृ० ५०६ ।

३. बृ० पा० पू० भा० ३।२ (मुम्बई सं०)
बृ० पा० ४।२ (काशी सं०)

४. अच्युतानन्द झा, बृहज्जातकम्, १।३, चौखम्बा संस्कृत सीरिज, बनारस ।

सारावल्यामपि—

> आद्यन्तवर्णलोपाद्धोरा सिद्ध्यत्यहोरात्रात् ।
> तत्प्रतिबद्धश्चायं ग्रहभगणश्चिन्त्यते यस्मात् ॥
> जातकमिति प्रसिद्धं यल्लोके तदिह कीर्त्यते होरा ।
> अथवा दैवविमर्शन-पर्यायः खल्वयं शब्दः ॥[1]

अत्र स्पष्टरूपेण होरा-शब्देन जातक-शास्त्रमिति निरूपितम् तस्य निर्वचनमाद्यन्ताक्षरलोपेन कृतम् । निरुक्तेऽपि निर्वचने आद्यन्तलोपस्य निर्देशो दृश्यते ।[2]

होलतिहुल्यते वेति हुल हिंसा सम्वरणयो अच् घञ् वा रलयोरैक्यम् टाप् । लग्नम् । राश्यर्द्धम् रेखाशास्त्रभेद इति मेदिनीति शब्दकल्पद्रुमे दृश्यते ।[3]

अत्र होराशब्देन लग्नमित्यर्थो गृहीत । होराशास्त्र लग्न शास्त्र यदधिकृत्य जातक-कर्मफल निरूप्यते इत्यपि बोध्यम् ।

अपि च जातकसारप्रदीपे—

> ज्योतिः शास्त्रमनेकभेदबहुलं स्कन्धत्रयाधिष्ठितम् ।
> तार्तीयः समयत्रयोद्भवफलज्ञानैश्च होराभिधः ॥
> या ब्रह्मणा विलिखिता नरभालपट्टे
> प्राग्जन्मकर्मसदसत्फलपाकशस्तिः ॥
> होरा प्रकाशयति तामिह वर्णपङ्क्तिम्
> दीपो यथा निशि घटादिकमन्धकारे ॥[4]

अतश्चेद निष्पन्न होराशास्त्रेण मनुष्यस्य पूर्वजन्मार्जितसदसत्कर्मानुसारि फल ज्ञातुं शक्यत इति ।

---

१ सीताराम झा 'सारावली' २।२, मास्टर खेलाडीलाल एण्ड सन, बनारस ।
२. दुर्गाचार्य निरुक्तम् २।१।२, मनसुखराय मोर, ५ क्लाइव रो, कलकत्ता ।
३ शब्दकल्पद्रुम पृ० ५५३, पचम काण्ड, मोतीलाल बनारसीदास, दिल्ली ।
४ चन्द्रशेखरन्, जातकसारदीप, १।५, ६, मद्रास गवर्मेंट ओरियण्टल सीरिज, मद्रास ।

ग्रन्थपरिचयः—

पराशरस्य होराशास्त्रं त्रिविधमुपलभ्यते: लघुपाराशरी, मध्यपाराशरी, बृहत्पाराशरीति पुस्तकत्रयमपि दृश्यते।

नगेन्द्रनाथ-वसु-महोदयेन हिन्दी विश्वकोषे लिखितम्—

पराशरेण रचितं लघुवृद्धबृहदिति प्रकारत्रयेण ज्योतिषस्य पुस्तकत्रयं दृश्यते। अत्र परमसुख-भैरव-लक्ष्मीपति-वाणीविलास-सदानन्दादीनां टीका अपि दृश्यन्ते। श्रीकृष्णशुक्लेन बृहत्पाराशर्याष्टीका कृतेत्यपि।[1]

अयं विश्वकोषः १९२७ ख्रिष्टाब्दे मुद्रितः। तेनेदं ज्ञायते यदितः पूर्वं पाराशर्या रूपत्रयमविद्यत।

शङ्कर-बालकृष्णदीक्षितमहोदयेन तु पाराशर्या रूपद्वयमेव स्वीकृतं लघु-बृहन्नाम्ना।[2]

इदं पुस्तकमधिकृत्यापि तस्य मतम्—

पाराशर्या नाम दैवज्ञेष्वतीव प्रसिद्धम्। अस्य रूपद्वयं बृहल्लघुनाम्नो-पलभ्यते। तत्र बह्व्यष्टीका लिखिताः। बृहत्पाराशरी-नामक एको ग्रन्थो मुम्बय्यां ज्ञानसागर-मुद्रणालये श्रीधरशिवलाल-महोदयेन मुद्रितः। अस्य पूर्वोत्तर-नामकं खण्डद्वयम्। पूर्वखण्डेऽशीतिसंख्याका अध्यायाः सन्ति। उत्तरखण्डे च विंशतिः। परं च मुद्रितास्तु केवलमेकपञ्चाशत्पूर्वखण्डे दृश्यन्ते। तेऽपि विभिन्न-स्थानेभ्यो बहुप्रयत्नेन प्राप्ता अपि खण्डिताः सन्ति। पूर्वखण्डे ४१९६ श्लोकाः सन्ति। अत्र कियत्संख्याका मूलग्रन्थाद्गृहीता इति ज्ञातुं न कोऽप्युपायो विद्यते। एकत्र चायनांशानयनाय ग्रहलाघवस्य पद्यमुद्धृतं परन्नेदं लिखितं यदिदं पद्यं ग्रह-लाघवस्येति। सारांशेनेदं कथयितुं शक्यते यदयं पूर्वखण्डः पराशरकृत इति व्यर्थम्।

---

१. श्री नगेन्द्रनाथ वसु, हिन्दी विश्वकोष, त्रयोदशभाग पृ० १५४, ६ विश्वकोष लेन, बाघ बाजार, कलकत्ता।

२. शिवनाथ झारखण्डी, भारतीय ज्योतिष, पृ० ६३२, प्रकाशन ब्यूरो, सूचना विभाग उत्तर प्रदेश।

उत्तर-खण्डे विंशतिरध्यायाः। तत्राधिकतरा अनुष्टुप्छन्दसि ८१२ श्लोकाः सन्ति। अत्रानुक्तञ्च गर्गहोराशास्त्रे द्रष्टुं कथितम्। क्वचित्क्वचिच्च सायनग्रहैः कार्यं कर्तुं निर्देशः। येनेदमनुमीयते—

यच्छकीय-पञ्चशतवर्षाणामूर्ध्वमत्र समिश्रणं सञ्जातम्। तञ्जौर-राजकीय-पुस्तकालये पाराशर्याः पूर्वार्द्धो विद्यते। तस्य श्लोकसंख्या १६५० अस्ति। तत्र प्रथमाध्याये एव राशिस्वरूपवर्णनम्। तत्रारम्भे श्लोकद्वयम्—

मनोहरदयादृष्टिर्मन्दहासलसन्मुखः।
मङ्गलाय सदा सर्वमङ्गलाजानिरस्तु नः॥
मेषोक्षनरयुक्कर्कसिंह-कन्या-तुलादयः।
धनुर्नक्रघटी मीना इति द्वादश राशयः॥

मुम्बई-संस्करणीय-पुस्तके तृतीयाध्याये राशिस्वरूपं प्रतिपादितम्। तत्राप्येते श्लोका न दृश्यन्ते। तञ्जौरपुस्तकेऽरिष्टाध्यायोऽन्ते विद्यतेऽत्र च पञ्चमः। इति नेदं ज्ञातुं शक्यते यद्वराहाचार्यात्पूर्वमुपलभ्यमाना पाराशरी स्वरूपस्था कुत्रचिदुपलभ्यते न वेति।

इत्थमत्र शङ्करबालकृष्णमहोदयेन पुस्तकद्वयस्य चर्चा विहिता। शिवलाल-सम्पादित मुम्बई-संस्करणं मम सकाशेऽपि विद्यते तत्र १८२१ शकीयसंवत्सर-स्योल्लेखस्तेनेदं ज्ञायते यदिदं द्वितीयं सस्करणमिति।

अत्र शिवलालेन लिखितं यत्नेन स्थानषट्कात् लिखितपुस्तकानां सङ्ग्रहं विधायेदं पुस्तकं प्रकाशितम्।

तृतीयं पुस्तकम्—

काशी-सन्यासि-संस्कृतकालेजाध्यापकेन श्रीपण्डित-सीताराम-झा-मैथिल-

---

१. तत्रैव पृ० १२४। शिवनाथ झारखण्डी, भारतीय ज्योतिष, पृ० १३५, प्रकाशन ब्यूरो, सूचना विभाग, उत्तर प्रदेश।

महोदयेन ख्रिष्टाब्दे १६४६ तमे पुस्तकमेकं प्रकाशितम्। तत्र भूमिकायां झामहोदयेनेदमङ्कितम्, यदहं 'वयं पाराशरी-होरामनुसृत्य यथामती'त्यादिकं लघु-पाराशरीयं पद्यं दृष्ट्वा पाराशरीहोराशास्त्रगवेषणे संलग्नः। परं वास्तविकी पाराशरी नोपलब्धा। एकं मध्यपाराशरीनामकं पण्डित-रामयत्नओझासम्पादितं पुस्तकं दृष्टम्। परं चानुशीलनेनेदमधिगतं यन्नेयं कस्यचिद्विदुषः कृतिरिति। मुम्बई-संस्करणं बृहत्पाराशरहोरासारांशनामकं पुस्तकं दृष्टम्। तत्रापि सन्तोषाभावः। तत्र चाधुनिकानां ग्रन्थानां लेखा अल्पज्ञानां रचितानि च पद्यानि सङ्गृहतानि सन्ति। अपि चात्र पराशरभिन्नानां विषयाणामाचार्याणां च पद्यानि सन्ति, विषयाणामपि पुनरुक्तिर्विद्यते। तत्रापि बहुधा युक्तत्वं दृश्यते। ततश्च झामहोदयेन पण्डित-जीवनाथ-महोदयादेकं लिखितं पुस्तकमुपलब्धम्। तत्र मुम्बई-संस्करणे च पाठे प्रायः क्रमसाम्यमेव दृश्यते। परं च पाठभेदबाहुल्यमस्ति।[1]

पुस्तकस्य वास्तविकं नाम—

किमस्य पुस्तकस्य मूलनाम बृहत्पाराशरहोरेति वर्तते न वेति प्रश्ने झामहोदयेनेदमेव निर्दिष्टं यल्लिखितपुस्तकं तेनोपलब्धं तस्य नाम 'पाराशरहोरा' इति लिखितमासीत्। परं च लघुपाराशरी मध्यपाराशरीति पुस्तकद्वये प्रसिद्धे सति ग्रन्थस्यास्य नाम तेन बृहत्पाराशरहोराशास्त्रमिति लिखितम्।[2] मुम्बईसंस्करणस्य 'बृहत्पाराशरहोरासारांश' इति नामाङ्कितं विद्यते। तञ्जौरराजकीय-पुस्तकालये विद्यमानस्य पुस्तकस्यापि पाराशरीहोरेति नामास्तीति पूर्वमङ्कितम्। लघुपाराशरी-पुस्तकेऽपि 'वयं पाराशरीहोरामनुसृत्ये'ति पाठो विद्यते[3] मुम्बई-संस्करणे पूर्वखण्डे सर्वत्राध्यायसमाप्तौ बृहत्पाराशरहोरापूर्वखण्डसारांशे इति उत्तरखण्डे च बृहत्पाराशरहोरायामुत्तरखण्डे इति लिखितं विद्यते।[4] श्रीभट्टोत्पलेन बृहज्जातकटीकायां

---

१. बृ० पा० भूमिकायां पृ० २,३, काशी सं०।

२. बृ० पा० भूमिकायां, पृ० ४ (काशी-सं०)

३. दीवान रामचन्द्र कपूर, लघुपाराशरी भाष्य १।२ मोतीलाल बनारसीदास दिल्ली।

४. बृ० पा०, पू० भा० एवं उ० भा० (मुम्बई-सं०)

पाराशरीया संहितेयमिति· नाम लिखितम् ।[1] श्रीनगेन्द्रनाथवसुसम्पादिते हिन्दी-विश्वकोषे पाराशरीविषये लघुवृद्धबृहदिति शब्दत्रयमङ्कितमिति पूर्वं मया लिखितम् । अनेनेदं सिद्ध्यति यदुभाभ्यां श्री-शिवलाल-महोदयेन श्रीपण्डितसीताराम-झार्मैथिलेन च लघुमध्यपाराशरीपुस्तकद्वयं मुद्रितं दृष्ट्वैव बृहत्पाराशरहोराशास्त्रमित्यस्य पुस्तकस्य नामाङ्गीकृतम् । वस्तुतः पाराशरहोरासंहितेति नामैवास्य पुस्तकस्य पूर्वमासीत् । अस्यैव ग्रन्थस्य केनचिल्लघुभागो लघुपाराशरीनाम्ना मध्यभागश्च मध्यपाराशरी-नाम्ना व्यवहृतौ । तेनास्य ग्रन्थस्य बृहत्पाराशरहोराशास्त्रमिति' नाम साम्प्रतं प्रसिद्धिमगादिति भावः ।

ग्रन्थस्य परिमाणम्—

मुम्बई-संस्करणे 'एवं होराशताध्यायी सर्वपापप्रणाशिनी'ति[2] पाठो दृश्यते तेनास्य ग्रन्थस्य शताध्यायवत्त्वं संसूचितम् ।

अपि च—

भगवन् सर्वमाख्यातं जातकं विस्तरेण मे ।
ससहस्रायुतग्रन्थैरशीत्यध्यायसंयुतैः ॥[3]

इदं पद्यमुत्तरभागस्य प्रारम्भे दृश्यते । अनेनास्य खण्डद्वयमपि ज्ञायते । अत्र संस्कृत-टीकायां ग्रन्थ-शब्दस्य श्लोक इत्यर्थं प्रकाशयता श्रीधरशिवलाल-महोदयेनास्य श्लोकस्य व्याख्याने एकादशसहस्रश्लोकानां पूर्वखण्डमिति लिखितम् । परं तत्र ४१६६ एव श्लोका दृश्यन्ते । पूर्वभागेऽशीत्यध्यायस्थाने केवलं पञ्चाशदध्याया विद्यन्ते । *श्रीधर-शर्म-महोदयेनाङ्कितं यत्ते न बहुलतर-प्रयत्न-समारम्भेऽपि सम*-ग्रशताध्यायपरिमितो ग्रन्थो नोपलब्धः । अपि च समग्रमुत्तरार्द्धमाद्योपान्तं यथानुगतमुपलब्धमिति । पूर्वार्द्धं यत्प्राप्तमपि तच्च खण्डशः खण्डशः समधिगतं न कुत्रापि

---

१. भट्टोत्पलः, बृहज्जातकम्, पृ० ६६, खेमराज श्री कृष्णदास, श्री वेंकटेश्वर स्टीम प्रेस, मुम्बई ।

२. बृ० पा० उ० भा० १३।१४ ।

३. बृ० पा० उ० भा०, १।१ ।

सकलं समुपलब्धम्। यल्लब्धं तदपि यथाप्राप्तं सञ्चित्य सञ्चित्य सम्यक्तमा विषयान् समालोक्य क्वचित्क्वचिदपूर्णं दृष्ट्वाधुनातनविशेषप्रबलग्रन्थकार-सदुक्तिसमावेशेन तत्स्वविषयसमीकरणे संव्यवस्थाप्यैकपञ्चाशदध्यायपरिणद्धं कृतम्। तच्चापूर्णं दृष्ट्वा न टीका-विषयीकृतम्।'[1] अनेनेदं सिद्ध्यति यदुपलब्धा अपि चैकपञ्चाशदध्याया न पूर्णतया प्रामाणिका इति।

उत्तरखण्डस्यैकसहस्र-श्लोकाः सन्तीति श्रीधरेण लिखितम् वस्तुतः ८१२ श्लोका एवोपलभ्यन्ते।

उत्तरखण्डीयैकोनविंशोऽध्यायः—

मुम्बई-संस्करणीय-पुस्तकस्योत्तरखण्डे एकोनविंशोऽध्यायोऽनुक्रमणिका-नाम्ना विद्यते यत्र समग्रस्य ग्रन्थस्य शताध्यायात्मकस्य सूची विद्यते। सा च निम्नलिखित-प्रकारेण दृश्यते।

पूर्वखण्डस्य—

प्रथमाध्याये शास्त्रावतरणम्, द्वितीये ग्रहाणां प्रादुर्भावः, तृतीये राशिस्वभावः, चतुर्थे दृष्टिवर्णनम्, पञ्चमे गर्भाधानं, षष्ठे सूतिकाविधिः, सप्तमेऽरिष्टम्, अष्टमे पुत्रविचारः, नवमे पित्रोर्विचारः, दशमेऽरिष्टभङ्गः, एकादशे धूमादिग्रहाः द्वादशमारभ्य त्रयोविंशान्तं मिश्रस्य पञ्चाङ्गकारकादिकस्य द्वादशभावादिकस्य च फलविचारः, चतुर्विंशमारभ्यैकोनत्रिंशान्तं द्विग्रहाद्यपड्योगाः, त्रिंशेऽष्टकवर्गविचारः, एकत्रिंशमारभ्य पञ्चाशान्तं नाभसादिराजयोगाः, एकपञ्चाशमारभ्य पञ्च-पञ्चाशान्तं चिरायुष्य-योगाः, षट्पञ्चाशेऽध्याये राजयोगाः, सप्तपञ्चाशत्तमेऽ-वस्थाविचारः, अष्टपञ्चाशेऽध्यायेऽन्तर्दायविधिः, एकोनपञ्चाशादारभ्य पञ्च-षष्ट्यन्तं दायफलम्। षट्षष्टिमारभ्य त्रयोदशाध्यायान्तं राजवर्गाणां, शेषद्वये योगादिबलस्य च विचारो निगदितः।

उत्तरखण्डम्—

प्रथमाध्यायेऽष्टकवर्गः, द्वितीये भावदृग्वीर्यम्, तृतीये इष्टकष्टबलम्, चतुर्थे

---

१. बृ० पा० उ० भा०, भूमिकायां, पृ० ४।

रश्मिसम्भूतिः, पञ्चमे लोकयात्रा, षष्ठे सप्तमे च लोकयात्राभङ्गविचारः, अष्टमे नवमे चापि लोकयात्रा, दशमे दायविचारः, एकादशे द्वादशेऽन्तर्दायः, त्रयोदशे भाग्यविचारः, चतुर्दशेऽब्दचर्या, पञ्चदशेऽब्दचर्याफलम्, षोडशे मासचर्या, सप्तदशे दिनचर्या, अष्टादशे प्रश्नजातकम्, एकोनविंशेऽध्यायानुक्रमः, विंशे शास्त्रफलम्, इत्युत्तरखण्डेऽनुक्रमणमध्यायानां प्रोक्तम् ।

समीक्षा—

उक्तोत्तरखण्डे तूत्तरखण्डप्रोक्तानां वस्तूनां निर्देशोऽध्यायेषु यथा तथोपलभ्यते । परं च पूर्वखण्डीयानामध्यायानामनुक्रमवर्णनमन्यत् पुस्तके चान्यद्दृश्यते । एकोनविंशत्यध्यायानामप्यभावः । अनुक्रमानुसारं पञ्चमे गर्भाधानं, षष्ठे सूतिकाविधिः, सप्तमेऽरिष्टविचारः इत्यादि । पुस्तके चान्यथा दृश्यते पञ्चमेऽरिष्टारिष्टविचारः, षष्ठे धूमादिग्रहवर्णनं, सप्तमेऽर्गलाविचार इत्यादि ज्ञेयम् । तेनेदं सिध्यति यत्पूर्वखण्डे मूलपुस्तकानुसारेण वस्तुनिर्देशो नोपलभ्यते । तच्चापूर्णमेवेतस्ततोऽन्यपुस्तकेभ्यः पाठान् समुद्धृत्य संगृह्य च सम्पादितम् ।

पूर्वे खण्डे प्रायः सर्वत्राशुद्धपाठा उपलभ्यन्ते । कुत्रचिच्च प्रक्षिप्तपाठानां ज्ञानं स्वत एव स्पष्टरूपेण भवति । यथा चाचार्यनीलकण्ठेन 'तत्रापि महेश्वर-भावेश-त्रिकोणाब्दे' जैमिनीयसूत्रे व्याख्याया अब्द इति शब्देन तत्तद्राशिदशेति बोध्यं लिखितम् ।[1] अत्र ग्रन्थे पूर्वमब्दशब्दाभावेऽपि अत्राब्द इति शब्देन, राशि-दशाक्रम इति लिखितम् ।[2]

खण्डद्वयस्य प्रयोजनम्—

पूर्वखण्डे जातकस्य सर्वे प्रकारा उक्ता इत्यवगम्यते, यद्यपि पूर्णा अशीत्यध्याया नोपलभ्यन्ते परं चोत्तरखण्डस्यैकोनविंशाध्याये वर्णितानुक्रमणिकयेदं ज्ञायते यन्नारदपुराणोक्तहोराशास्त्रस्य प्रायः सर्वे विषया दृश्यन्ते । उत्तरभागे चाब्द-

---

१. नीलकण्ठकृत टीका, जैमिनीयसूत्राणि, १।२।५४, पृ० ५४, खेमराज श्रीकृष्णदास, श्रीवेङ्कटेश्वर स्टीम मुद्रणालय, मुम्बई ।

२. बृ० पा० पू० भा०, २६।२६ (मुम्बई-सं०)

चर्याप्रश्नजातकस्याष्टवर्गकस्यायुर्दायविशेषप्रकारस्य षड्बलैक्यसाधनस्य च विशेषो दृश्यते। अत्र चाचार्येणाष्टकवर्गवर्णनप्रसङ्गे उत्तरखण्डस्य प्रारम्भे एवाङ्कितम् यत्पूर्वभागे यज्जातकप्रकरणमुक्तं तत्तु सङ्करात्कलियुगीयैराचार्यैरवबोद्धुं न शक्यते। तथा च योऽत्रायुर्दायः प्रोक्तस्तस्य निश्चयो वसिष्ठेन बृहस्पतिना वा कर्तुं न शक्यते। कथं पुनर्मानवेनेति भावः[1] अस्य प्रश्नस्योत्तररूपमेवोत्तरखण्डं प्रोक्तम्।

यथा हि—

> कर्मज्ञानविदा वेदो द्विधा यद्वत्तदाऽऽह्वये।
> होराशास्त्रं द्विधा प्रोक्तं संकीर्णनिश्चयादिति॥
> प्रोक्तः संकीर्णभागस्तु निश्चयांशस्तु कथ्यते।
> यो वेत्ति सम्यगेतत्तु दैवज्ञः स उदाहृतः॥[2]

अर्थाद्यथा वेदस्य कर्मज्ञानभेदेन रूपद्वयं विद्यते तथात्र ग्रन्थेऽपि सङ्कीर्णनिश्चयरूपेण भागद्वयं कथितम्। पूर्वखण्डस्तु सङ्कीर्णभाग उत्तरखण्डश्च निश्चयांशः। अस्य निश्चयांशस्य ज्ञानादेव विद्वान् दैवज्ञो भवति। सङ्कीर्णभागोक्तायुर्दायस्य निश्चयो वसिष्ठबृहस्पतिभ्यामपि कर्तुं न शक्यते। परं च निश्चयभागीयायुर्दायस्य ज्ञानं सरलमिति भावः।

काशी-संस्करणम्—

काशी-संस्करणे सीतारामझामहोदयेन सप्तनवतिसङ्ख्याका अध्याया मुद्रिताः। अत्र खण्डद्वयं न दृश्यते।

पुस्तकान्ते सम्पादकीयविज्ञप्तिरूपेण स्वमतं प्रकटीकृतम्।

> श्रूयते यच्छताध्यायैः पराशर-महर्षिणा।
> कलौ लोकोपकारार्थं होराशास्त्रं विनिर्मितम्॥

---

१. बृ० पा० उ० भा०, १।१-१२।

२. तत्रैव, उ० भा० १।१४,१५।

किञ्च सम्प्रति देशेऽस्मिन् दृश्यते न तथाविधम् ।
न हस्तलिखितं वापि मुद्रितं वापि कुत्रचित् ॥
बहुत्रान्विष्य यत्नेन मयाजस्रं यतस्ततः ।
विभिन्नपुस्तकागाराद् दैवज्ञानां करादपि ॥
समाहृत्य तदंशांश्च सङ्कलय्य यथाक्रमम् ।
संशोध्याऽशुद्धपाठांश्च खण्डितांशान् प्रपूर्य च ॥
नगाङ्कसङ्ख्याकाध्यायैर्युतः सम्पादितोऽधुना ।

अपि चाग्रे भाषायां शतशब्दस्य शतेत्यर्थं नाङ्गीकृत्य शतमनेकार्थकमिति स्वीकृत्य शतादधिकं न्यूनं वा शतस्यार्थ इति स्वीकृतम् ।

विषयेष्वप्यब्दचर्यायाः प्रसङ्गो न दृश्यते—

मुम्बई-संस्करणस्योत्तरभागीयविषयानामभाव एव ।

पञ्चमहापुरुषलक्षणपञ्चमहाभूतफलसत्त्वादिगुणफलप्रव्रज्यायोगस्त्रीजातकाङ्गलक्षणफलतिलादिलाञ्छनफलग्रहशान्त्यशुभजन्मकथनदर्शजन्मशान्तिकृष्णचतुर्दशीजन्मशान्तिभद्रादिदुर्योगशान्तिसङ्क्रान्तिजन्मशान्तिग्रहणजातशान्तिगण्डान्तशान्तित्रीतरजन्मशान्तिप्रसवविकारशान्त्यादयो विषया अपि मुम्बईसंस्करणाद्भिन्नाः सन्निविष्टाः सन्ति ।

ग्रन्थस्य महिमा—

पुण्यं यशस्यं धन्यं च त्रिकालज्ञानकरणम् ।
विना मनुतपस्यैव शास्त्रज्ञानेन केवलम् ॥
हस्तामलकवत्सर्वं जगतां लोकयेत्फलम् ॥[1]

इदं होराशास्त्रं पुण्ययशोधनादिकप्रदमनेन मनुष्यस्त्रिकालज्ञो भवति । तस्य समक्षं सर्वं जगतो भविष्यज्ज्ञानं हस्तामलकवद्दृश्यते । मन्त्रमन्त्रजपतपश्चर्यादिकस्याभावेऽपि ज्ञानं भवतीति प्रतिपादितम् ।

---

१. बृ० पा० उ० भा० १७।६,७ (मुम्बई सं०)

होरास्कन्धस्य शकले श्रुत्वार्थमवधार्य च ।
वाग्मी द्विजवरो यः स्यान्न वन्ध्या तस्य भारती ॥[1]

अनेन शास्त्रेण विप्रो वाग्मी भवति । तस्य वाणी निष्फला न भवति ।

काशीसंस्करणेऽपि—

पुण्यदं ज्योतिषं शास्त्रं तद्धि वेदाङ्गमुत्तमम् ।
होराशास्त्रस्य तत्त्वज्ञः सत्यवाग् विजितेन्द्रियः ॥
शुभाशुभं फलं वक्ति सत्यं तद्वचनं भवेत् ।[2]

अस्य वेदाङ्गोत्तमस्य होराशास्त्रस्य ज्ञानेन वाणी सत्यपूता भवति । तस्य वचनं न निष्फलं भवतीति ज्ञेयम् ।

अपि च—

'एवं होराशताध्यायी सर्वपापप्रणाशिनी'[3]

अत्रास्य श्रवणेन मननेन च सर्वपापविनाश इत्युक्तम् ।

ननु 'कलौ पराशरः स्मृत.' इत्युक्तं विद्यते । तेनास्य ग्रन्थस्य कलौ एवावश्यकता । तस्य निराकरणमपि दृश्यते यदिदं शास्त्रं चतुर्युगेष्वेव प्रत्यक्षेण फलदायकम् ।

'युगेषु च चतुर्ष्वेव प्रत्यक्षफलदायिनी ।'[4]

अपि चेदं शास्त्रं वेदस्वरूपं वेदाङ्गञ्च—

वेदेभ्यश्च समुद्धृत्य ब्रह्मा प्रोवाच विस्तृतम् ।
शास्त्रमाद्यं तदेवेदं वेदाङ्गं वेदचक्षुषी ॥[5]

---

१. बृ० पा० (मुम्बई), उ० भा० १८।१५ ।
२. बृ० पा० ९७।४-६ (काशी-स)
३. बृ० पा० उ० भा० १६।१५ (मुम्बई-स०)
४. तत्रैव, उ० भा० १६।१५ ।
५. तत्रैव उ० भा० २०।३,४ ।

इदं शास्त्रं गुरुमुखादेव श्रोतव्यम् । गुरुमुखाच्छ्रुत्वा मत्वा च सर्वपापरहितो गर्गाचार्यस्वरूपस्सन् भूत्वा ब्रह्मलोकमधिगच्छति । अर्थान्मुक्तो भवति ।

श्रुत्वा गुरुमुखादेव बुद्धिमानवलोक्य च ।
यो जानाति स शास्त्रार्थं सर्वपापैः प्रमुच्यते ॥
श्रावयेद्दर्शयेद्विद्वानन्यो गर्गो द्विजोत्तमः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥[1]
आचार्यस्य मुखादेतच्छास्त्रं तु शृणुयाद्बुधः ।
सम्प्रदायेन यः श्रान्तश्चास्मिंञ्छास्त्रे महामतिः ॥[2]

श्वेताश्वतरोपनिषद्यपि गुरुमहिमा दृश्यते—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥[3]

अपि च श्रद्धाविनयसंयुतेन श्रोतव्यम्—

होराशास्त्रमिदं सर्वं श्रद्धाविनय-संयुतः ।

श्रीमद्भगवद्गीतायामपि—

श्रद्धावांल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।[4]

काशी-संस्करणेऽपि—

ये तु शास्त्रं पठन्तीदं ये वा शृण्वन्ति भक्तितः ।
तेषामायुर्बलं वित्तं वृद्धिमेति यशः सदा ॥[5]

---

१. बृ० पा०, उ० भा० २०।१,२,३। (मुम्बई-सं०)

२. बृ० पा० उ० भा० १।१३ (मुम्बई-सं०)

३. श्वेताश्वतरोपनिषद् ६।२३, अष्टाविंशदुपनिषदः, खेमराज श्रीकृष्णदास, श्री वेङ्कटेश्वर स्टीम प्रेस, मुम्बई ।

४. श्रीमद्भगवद्गीता ४।३९, गीता प्रेस, गोरखपुर।

५. बृ० पा० ९७।७ (काशी-सं०)

ग्रन्थस्याधिकारी—

ग्रन्थे सूर्यसिद्धान्तादिगणितज्ञोऽधीतव्याकरणन्यायशास्त्रो देशकालज्ञो होराशास्त्रे कृतश्रम, शिक्षणसमर्थो दैवज्ञो देवताराधनतत्परस्तर्कसमाधानकुशलो बुद्धिमाश्चैवात्र ग्रन्थेऽधिकारी प्रोक्त ।ः

गणितेषु प्रवीणः, स्याच्छब्दशास्त्रे कृतश्रमः ।
न्यायविद्बुद्धिमान् होरास्कन्धश्रवणसम्मतः ॥
दैवविद्देशिको दैवसम्मतो देशकालविद् ।
ऊहापोहपटुः प्राज्ञः पटुः स्वजनसम्मतः ॥[1]

आचार्येणापि शिष्यस्याधिकारिता द्रष्टव्या। आचार्येण गुणशीलयुताय द्विजातये एव देयम् ।

गुणशीलयुतायैव शिष्यायैव द्विजातये ।
दातव्यं तु प्रयत्नेन वेदाङ्गमिदमुत्तमम् ॥[2]

काशीसंस्करणेऽपि—

शान्ताय गुरुभक्ताय सर्वदा सत्यवादिने ।
आस्तिकाय प्रदातव्यं ततः श्रेयो ह्यवाप्स्यति ॥[3]
देयमेतत्सुशीलाय भक्ताय सत्यवादिने ।
मेधाविने विनीताय सम्यग्ज्ञातकुलाय च ॥
जानाति कालमानं यो ग्रहर्क्षाणां च संस्थितिम् ।
होराशास्त्रमिदं सम्यक् स विजानाति नापरः ॥[4]

---

१. बृ० पा० उ० भा० ३।४६,४७ (मुम्बई-सं०)
२. तत्रैव, १८।७७,७८ ।
३ बृ० पा० १।१० (काशी-सं०)
४. तत्रैव, ६७।३,४,५,

अनेन ज्ञातकुलशीलाय द्विजातये ग्रहगणितज्ञाय मेधाविने शिष्यायेदं शास्त्रं प्रदेयमिति सिध्यति।

शास्त्रेऽनधिकारिणो लक्षणानि—

नाशिष्याय प्रदातव्यं नापुत्राय कदाचन।[1]

काशीसंस्करणेऽपि—

नासूयकाय दातव्यं परनिन्दारताय वा।
जडाय दुर्विनीताय नाज्ञाताय कदाचन॥[2]

पुत्ररहिताय मूर्खाय निन्दकायाज्ञातकुलशीलाय द्विजेतराय शिष्येतराय दुर्विनीतायेदं शास्त्रं न प्रदेयमिति भावः।

अपि च—

बुद्धिहीनाय दाम्भाय दाम्भिकाय त्वमर्पिणे।
न दद्याद्यदि दद्याच्चेद्विद्या त्वस्य विनश्यति।[3]

अत्र च धर्मपिणे बुद्धिहीनाय पापण्डिने होराशास्त्रज्ञानस्य प्रदाने कुफलमपि दर्शितम् अर्थात्तस्याचार्यस्य स्वकीयविद्यापि विनश्यति।

न देयं परशिष्याय नास्तिकाय शठाय वा।
दत्ते प्रतिदिनं दुःखं जायते नात्र संशयः॥[4]

अत्र शारीरिकहानिरपि निर्दिष्टा।

यास्कस्य निरुक्तेऽप्येतत्कृते सुन्दर वचनं दृश्यते—

---

१. बृ० पा० उ० भा० १८।७८, (मुम्बई-सं०)
२. बृ० पा० ९७।२,३ (काशी-सं०)
३. बृ० पा० उ० भा० १७।६ (मुम्बई-सं०)
४. बृ० पा० पु० भा० १।७ (मुम्बई-सं०)

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥[1]

अपि च—

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्च नाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥[1]

श्रीमद्भगवद्गीतायामपि—

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥[2]

ग्रन्थस्य पूर्वपरम्परा—

पराशरेणेदं जातकज्ञानं गर्गान्नीतमिति स्पष्टमत्रोपलभ्यते । तथा च पाराशरीहोरातः पूर्वं गर्गहोराया एवात्र स्पष्टोल्लेखो दृश्यते ।

वेदेभ्यश्च समुद्धृत्य ब्रह्मा प्रोवाच विस्तृतम् ।
शास्त्रमाद्यं तदेवेदं वेदाङ्गं वेद-चक्षुषी ॥
गर्गस्तस्मादिदं प्राह मया तस्माद्यथा तथा ।
तदुक्तं तव मैत्रेय शास्त्रमाद्यन्तमेव हि ॥[3]

अनेनेदं सिध्यति यदिदं ज्ञानमादौ ब्रह्मा वेदेभ्य उद्धृत्य गर्गाय प्रादात् । गर्गेण च पराशराय प्रदत्तम् । पराशरेण तु मैत्रेयाय पुनर्दत्तम् । तदेवेदं पाराशरी होरेत्युच्यते ।

काशीसंस्करणे भेदः । तत्र ब्रह्मा नारदं प्रोक्तवान् । नारदेन शौनकादि-

---

१. दुर्गाचार्यः, निरुक्तम् २।१।७, मनसुखरायमोर, ५ क्लाईव रो, कलकत्ता ।

२. श्रीमद्भगवद्गीता १८।६७, गीता प्रेस, गोरखपुर ।

३. बृ० पा० उ० मा० २०।३,४, (मुम्बई-स०)

मुनिभ्यो निगदितम्। तेभ्यः पराशरेण गृहीतमिदं ज्ञानमिति लिखितम्।[1] इद-मुचितं न प्रतीयते यतः शौनकादीनां पराशरात्परवर्त्तित्वं पुराणेषूपलभ्यते।

गर्गहोरा—

गर्गहोराया अस्मिन् पुस्तके स्पष्टो निर्देशो दृश्यते।

कल्पादौ भगवान् गर्गः प्रादुर्भूय महामुनिः।
ऋषिभ्यो जातकं सर्वमुवाच कलिमाश्रितः॥
अस्मिन्नुत्तरभागे तु मयानुक्तञ्च यद्भवेत्।
तत्सर्वं गर्गहोरायां मैत्रेय त्वं विलोकय॥[2]

पूर्वाचार्याणामुल्लेखः—

प्राणिनां पूर्वजन्मशापद्योतकेऽध्याये शूलपाणेर्भगवतः शङ्करस्योल्लेखः,[3] यत्र भगवता शङ्करेण पार्वत्यै ज्ञानं प्रदत्तम्। सुजन्मोवाच लोमश उवाचेत्यपि पूर्वखण्डे दृश्यते।[4] उत्तरखण्डे—

'निश्चेतुं तन्न शक्नोति वसिष्ठो वा बृहस्पतिः'।[5]

अत्र च वसिष्ठस्य बृहस्पतेश्च नामोल्लेखो विद्यते, येन बृहस्पतिवसिष्ठयोरपि ज्योतिषाचार्यत्वं प्रकटीभवति। गर्गस्य तु यत्र तत्रोत्तरखण्डे तन्मतप्रदर्शने निर्देशो विद्यते। यथा हि—

मङ्गञ्च मङ्गञ्च मुनिश्च गर्गः प्रोवाच यद्वन्मुनिपुङ्गवाहम्।[6]

अपि स्वमते गर्गस्य मतभेदमपि पराशरोऽत्र निर्दिष्टवान्—

राजयोगेषु सर्वेषु पैण्ड्यमाह पराशरः।[7]

---

१. बृ० पा० ९७।१,२ (काशी-सं०)
२. बृ० पा० उ० भा० १२।४१,४२ (मुम्बई-सं०)
३. बृ० पा० पू० भा० १६।१ (मुम्बई-सं०)
४. तत्रैव, ३३ तमेऽध्याये
५. तत्रैव, उ० भा० १।११
६. तत्रैव, उ० भा० ८।१०
७. तत्रैव, उ० भा० १२।२१

शेषेषु षट्सु पैण्ड्यः स्यादाद्यो गर्गोऽयमाह च ।[1]

अनेनेद स्पष्टं सिध्यति यत्पूर्वखण्डस्तु सङ्ग्रहात्मकस्तत्र कस्यचिदाचार्यस्य न निर्देशः। उत्तरखण्डे च वसिष्ठबृहस्पत्योश्च नाम गृहीतमत्र दृश्यते। गर्गस्य तु च्छायैव ग्रन्थोऽयमिति। यथोक्तम्—यदत्रानुक्तं तद्गर्गहोरायां द्रष्टव्यमिति पूर्वं मयाङ्कितम्। नारदोक्ताष्टादशाचार्यपरम्पराया पराशराद्भिन्नः सप्तदश मुनयोऽङ्किताः सन्ति। तत्र वसिष्ठादीनामुल्लेखो दृश्यते। तथा हि—नारद-सहितायाम्।

ब्रह्माचार्यो वसिष्ठोऽत्रिर्मनुः पौलस्त्यलोमशौ।
मरीचिरङ्गिरा व्यासो नारदः शौनको भृगुः॥
च्यवनो यवनो गर्गः कश्यपश्च पराशरः।
अष्टादशैते गम्भीरा ज्योतिःशास्त्रप्रवर्त्तकाः॥[2]

## (घ) ग्रन्थस्य रचनाकालः।

ग्रन्थस्य रचनाकालः प्रमाणद्वयेन निर्णेतुं शक्यते–अन्तरङ्गेन बाह्येन च। पूर्वमन्तरङ्गमाश्रित्य विचारोऽत्र विधीयते। अस्य ग्रन्थस्यान्तेऽङ्कितं विद्यते यदिद पराशरम्प्रति गर्गेण प्रदत्तम्। एवं पूर्वपरम्पराया वर्णन कृतमस्ति।

वेदेभ्यश्च समुद्धृत्य ब्रह्मा प्रोवाच विस्तृतम्।
शास्त्रमाद्यं तदेवेदं वेदाङ्गं वेदचक्षुषी॥
गर्गस्तस्मादिदं प्राह मया तस्माद्यथा तथा।
तदुक्तं तव मैत्रेय शास्त्रमाद्यन्तमेव हि॥[3]

काशी-सस्करणे ब्रह्मणा नारदाय प्रदत्तमिद ज्ञानम्। नारदेन शौनका-दिभ्य.। शौनकादिभिश्च पराशरायेति भेदो दृश्यते।[4]

---

१. बृ० पा० उ० भा० १२।३८, (मुम्बई-स०)
२. नारदसंहिता १।२,३ क्षेमराज श्रीकृष्णदास, मुम्बई
३. बृ० पा० उ० भा० २०।३,४, (मुम्बई-स०)
४. बृ० पा० ६७।१ (काशी स०)

मुम्बई-संस्करणे तु मुहुर्मुहुः गर्गस्योल्लेख उत्तरखण्डे दृश्यते। इदमपि लिखितं यदुत्तरखण्डेऽनुक्तं तद् गर्गहोरायां द्रष्टव्यम्।[1]

पराशरस्य वेदे महाभारते पुराणेषु च वंशपरम्परोपलभ्यते। ऋग्वेदेऽप्ययं शाक्त्यः पराशरो लिखितः। शक्तिश्च वासिष्ठोऽङ्कितः वसिष्ठश्च ब्रह्मणः पुत्रः प्रसिद्ध एव।[2]

अत्र च ग्रन्थे मङ्गलाचरणे प्रथमाध्याये परमेश्वरस्य शक्तीनामेवोल्लेखो विहितः। ईश्वरस्य च षोडशकलत्वात् षोडशवारं शक्तिशब्दस्योल्लेखो विहितः। अनेनेदं ज्ञायते यत्पराशरेण शक्तिरूपः स्वजनक एव वन्दितः। परमात्मनः शक्तिरेव सर्वं कर्तुमकर्तुं समर्थेति ध्वन्यते। शक्तेरंशा एव ग्रहाः। तथा हि—

शक्तयश्च तथैतेषामधिकांशाः श्रियादयः।
अन्यासु स्वस्वशक्तिषु ज्ञेया जीवांशकाधिकाः॥[3]

वसिष्ठस्याप्युल्लेखोऽस्मिन् ग्रन्थे दृश्यते—

निश्चेतुं तन्न शक्नोति वसिष्ठो वा बृहस्पतिः।[4]

अनेनेदं सिध्यति यदयं शक्तिपुत्रो वसिष्ठपौत्रश्च पराशर एवास्य ग्रन्थस्य कर्त्तेति।

महाभारते शान्तिपर्वणि वेननृपस्य राजज्यौतिषिकरूपेणोल्लेखो दृश्यते।

महर्षिर्भगवान् गर्गस्तस्य सांवत्सरोऽभवत्।[5]

---

१. बृ० पा० उ० भा० १२।४२ (मुम्बई-सं०)

२. श्रीपाद-दामोदर-सातवलेकरः 'ऋग्वेद संहिता' १।६५-७३ सूक्तानि एवं ६।६७ तमं सूक्तम्, स्वाध्याय मण्डल, पारडी, जिला सूरत।

३. बृ० पा० पू० भा० १।२३ (मुम्बई-सं०)

४. तत्रैव, उ० भा० १।११.

५. महाभारत शान्तिपर्व ५६।१११ गीता प्रेस, गोरखपुर।

पराशरस्यापि महाभारते बहुवारं वर्णनमुपलभ्यते—

आदिपर्वणि चास्य जन्मकथा विद्यते[1]। तत्रैव पराशरशब्दस्य निर्वचनमप्यङ्कितम्। शान्तिपर्वणि, अनुशासनपर्वण्यपि चोल्लेखो विद्यते। अनेनेदं ज्ञायते यदि वयं बहुप्राचीनतर ऋग्वेदकाले पराशरस्य रचनां न स्वीकुर्मस्तदापि महाभारतकाले तु सा सिध्यत्येवास्य प्रमाण-रूपाः श्लोका अपि पुस्तके समुपलभ्यन्ते।

अस्मिन् योगे हरिश्चन्द्रो मानवश्चोत्तमस्तथा।
बलिर्वैश्वानरो राजा अन्ये चैव तु चक्रपाः॥
कलौ युगे च भविता तथा राजा युधिष्ठिरः।
भविता शालिवाहश्च तथा विजयाभिनन्दनः॥
नागार्जनस्तथा भूपस्तदन्ये चैव गोपुरे।
पारावतांशकेऽन्ये च जाता मन्वादयस्तथा॥[2]

एषु राजयोगाध्यायीयपद्येषु मन्वादयो जाता हरिश्चन्द्रादयोऽपि जाता एवाङ्किता एवं च युधिष्ठर-शालिवाहनादीनां नामानि भवितेति शब्देन कथिताः सन्ति। येनेदं प्रतीयते यदिदं पुस्तकं युधिष्ठिरस्य जन्मनः प्रागेव लिखितम्। परं च काशी-संस्करणे पाठभेदो दृश्यते—

वर्तमानयुगे जातस्तथा राजा युधिष्ठिरः।
भविता शालिवाहाद्यस्तथैव द्विजसत्तम॥[3]

अत्र नागार्जुनस्यानुल्लेखः। युधिष्ठिरस्य वर्तमानकालेन कथनम्। हरिश्चन्द्रमनुबलिवैश्वानरादीनां भूतकालेन प्रतिपादनम्। शालिवाहाद्यस्य भविष्यत्कालेन वर्णनं विद्यते। अनेनापीदमेव सिध्यति यदस्य महाभारतकाले युधिष्ठिरसमये एव रचना सञ्जाता।

---

१. महाभारत आदिपर्व १७७।१, १७५।४०, १७६।१५, १७७।३, ५-६, ११.
२. बृ० पा० पू० भा० २६।४४-४६, (मुम्बई-सं०)
३. बृ० पा० ४१।३२.

युधिष्ठिरकालस्य निर्णयस्तु वराहमिहिरविरचितायां बृहत्संहितायां स्पष्टरूपेणोपलभ्यते ।

**आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ ।**[1]

वृद्धगर्गवचनमपि—

**कलिद्वापर-सन्धौ तु स्थितास्ते पितृ-दैवतम् ।**
**मुनयो धर्मनिरताः प्रजानां पालने रताः ॥**[2]

सुप्रसिद्धेन ज्योतिषाचार्येण पण्डितेन्द्रनारायणद्विवेदिमहोदयेनाप्यस्य समर्थनं कुर्वता निम्नाङ्कितानि प्रमाणानि प्रदत्तानि ।

यथा हि दशगीतिकापादस्य तृतीयश्लोके आर्यभट्टस्य वचनं दृश्यते ।

**काहो मनवोढ मनुयुग पूरव गतास्ते तमनुयुगछ्ना च ।**
**कल्पादेर्युग पादा ग च गुरुदिवसाच्च भारतात्पूर्वम् ॥**

अनेनार्यभट्टस्य वचनेनापि कलियुगस्यारम्भे एव महाभारतयुद्धस्यारम्भः कथितः ।

श्रीमद्भागवतेऽपि सप्तर्षिचारस्योल्लेखः—

**तेनैत ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ।**
**ते त्वदीये द्विजाः काले अधुना चाश्रिता मघा ॥**
***यदा देवर्षयः सप्त मघासु विचरन्ति हि ।***
**तदा प्रवृत्तस्तु कलिर्......द्वादशात्मकः ॥**

अपि च सुधन्वनृपस्य दानपात्रे (संस्कृत चन्द्रिका, खण्ड १४, संख्या २,३) नृपस्य सर्वजिद्वर्मणो दानपात्रेऽपि (संस्कृत-चन्द्रिका, खण्ड १४, सं० २,३ पृ० ४,५)

---

१. अच्युतानन्द झा बृहत्संहिता १३।३, चौखम्बा विद्याभवन, चौक वाराणसी ।

२. तत्रैव पृ० ११६ टीकायाम् ।

कलिसंवत्सरस्य वर्णनं विद्यते। एहोलीके पर्वते जैनमन्दिरशिलालेखे महाभारत-युद्धात् ३७३५ वर्षाणि शकनृपेभ्यश्च ५५६ वर्षाणि परतः उक्तमन्दिरस्य निर्माणं सञ्जातम्। (भारतीय प्राचीन लिपिमाला पृ० १६१)। अनेन कलिसंवत्सरस्य भारतीय-संवत्सरस्य चाभेदो दृश्यते। अत एवाविच्छिन्नरूपेण पञ्चाङ्गेषु युधिष्ठिर-संवत्सरः कलिसंवत्सरश्चैकरूपेणैव प्रचलतः। अत एव पूर्वोक्तप्रमाणेन महाभारत-युद्धकालः ख्रिष्टात् पूर्वं ३१०२ वर्षाणि सिध्यति।[1]

सुप्रसिद्धेन राजतरङ्गिणीकारेणाचार्येण कल्हणेनापि कलिसंवत्सरस्येयमेव प्रणाली स्वीकृता। तन्मतानुसारेणापि ३१०१ वर्षाणि ख्रिष्टाब्दात्पूर्वं कलिसंवत्सरस्यारम्भो निगदितः।[2]

श्रीरायबहादुर सी० व्ही० वैद्यमहोदयेन सुप्रसिद्धे स्वकीय-महाभारत-मीमांसानाम्नि पुस्तके मेगस्थिनीज़लेखमधिकृत्य महाभारतकालस्य निर्णयो विहितः। मैगस्थिनीज़महोदयश्चन्द्रगुप्तमौर्यराजसभायां राजदूत आसीत्। तेनेदं लिखितं यत् संड्रकोटस्डायानिसासमध्ये १५३ वंशाः व्यतीताः। एवञ्च ६०४२ वर्षाणि व्यतीतानि। तेन हरक्लीज़नाम्ना श्रीकृष्णस्याप्यत्र ग्रहणं कृतम्। डायानिसासतः श्रीकृष्णपर्यन्तं १५ वंशा भवन्ति। तेषां न्यूनीकरणेनैकस्य वंशस्य च विंशतिवर्षग्रहणेन १५३-१५=१३८×२०=२७६० वर्षाणि भवन्ति। तेन ख्रिष्टात् ३०३२ वर्षाणि पूर्वं श्रीकृष्णस्य कालो भवति। इतिहासस्य दृढप्रमाणैः सिध्यति यदयं कालः कलियुगस्यारम्भकालनिकटवर्ती विद्यते।[3]

छान्दोग्योपनिषदि कृष्णाय देवकीपुत्रायेति वचनेन छान्दोग्योपनिषदः श्रीकृष्णस्य पूर्ववर्तित्वं सिध्यति। श्रीशङ्करबालकृष्णदीक्षितमतानुसारेणोपनिषदां कालः १४१० वर्षाणि ख्रिष्टात्पूर्वं भवति। तेनापि पूर्वोक्तः काल एव महाभारतस्य

---

१. उद्धरणम्, महाभारतपर्व ३ संख्या ११, पृ० ११६, गीताप्रेस, गोरखपुर।

२. एम० ए०, सीन; कल्हणाज़ राजतरङ्गिणी, प्रथम भागः, पृ० ६१, मोतीलाल बनारसीदास, दिल्ली।

३. बालकृष्ण पाण्डुरंग ठकार, महाभारत मीमांसा, पृ० ६०-६१, इण्डियन प्रेस लिमिटेड, प्रयाग।

कालो भवतीति निश्चितम् ।[1] अपि च तेन वैदिक-कालमाश्रित्य भारतीयानां पाश्चात्यानां मतावमर्शेनापि ख्रिष्टात्पूर्वं ३१०१ वर्षाणि महाभारतकालो निर्णीतः ।[2]

अथ चास्मिन् पुस्तके नक्षत्रदशाया विंशोत्तर्या एव प्राधान्यम् विंशोत्तरी-दशाक्रमस्य कृत्तिकानक्षत्रादारम्भो भवति ।[3]

अथर्ववेदेऽपि कृत्तिकामारभ्य नक्षत्रगणनाक्रमो विद्यते ।[4] महाभारतेऽप्यनु-शासनपर्वणि नक्षत्राणां क्रमेण दानमहिमा वर्णितः । तत्र च कृत्तिकामारभ्यैव नक्षत्रगणनाक्रमः ।[5] सम्प्रति चाश्विनीमारभ्य नक्षत्रगणना भवति । विंशोत्तरी-दशाया आविष्कर्ता पराशर एव प्रोक्तः । यथा च फलदीपिकायां मन्त्रेश्वरः—

ख्यातां तेन पराशरेण कथितां सङ्गृह्य होरागमात् ।
सारं भूरिपरीक्षयातिफलितां वक्ष्ये महाख्यां दशाम् ।।[6]

अनेनेदं स्पष्टं सिध्यति यन्महाभारतकाल एव पराशरस्य काल इति ।

अत एव सुप्रसिद्धेन ज्योतिषाचार्येण वी० सूर्यनारायणरावमहोदयेन तत्पौत्रेण वी० वी० रमणमहोदयेन च बृहज्जातकस्याङ्गलभाषाटीकायां सुतरामस्य समर्थनं विहितम् । प्रतिपादितञ्च यत्सहस्रत्रयं वर्षाणां पूर्वं ख्रिष्टाब्दात्पराशरस्य कालः । तेनाद्य वर्तमानकाले पञ्चसहस्रवर्षेभ्योऽप्यधिकं पराशरस्य प्राचीनत्वं

---

१. बालकृष्ण पाण्डुरंग ठकार, महाभारत मीमांसा, पृ० ६१-६२, इण्डियन प्रेस लिमिटेड, प्रयाग ।

२. तत्रैव पृ० १०६-११६ ।

३. बृ० पा० ४६।१२, (काशी-सं०)

४. अथर्ववेद संहिता, १६।८।२, वैदिक यन्त्रालय, अजमेर ।

५. महाभारत अनुशासन पर्व ६४।५, गीता प्रेस, गोरखपुर ।

६. वी० सुब्रह्मण्यम् 'फलदीपिका' १६।१, के० एस० कृष्णमूर्ति, ६५ फर्स्ट क्रास रोड, बासावांगुदी ।

सिध्यति ।[१] अयमेव महाभारतस्य कालः कलिसंवत्सरारम्भो वा पूर्वं कथितः ।

सम्प्रति वयं बाह्यप्रमाणान्यनुसरामस्तदा वयं फलदीपिकायामाचार्यमन्त्रेश्वरस्योद्धरणं पश्यामः ।

**संक्षिप्यात्रिपराशरादिकथितान् मन्त्रेश्वरो दैववित् ।**
**वक्ष्येऽहं फलदीपिकां सुविमलां ज्योतिर्विदां प्रीतये ॥[२]**

अपि च—

**ख्यातां तेन पराशरेण कथितां सङ्गृह्य होरागमात् ।[३]**

अत्र च स्पष्टं पराशरस्य होराशास्त्रस्योल्लेखः ।

मन्त्रेश्वरस्य कालोऽत्र भूमिकायां वी० सुब्रह्मण्यशास्त्रिणा षोडशशती ख्रिष्टाब्दस्य निश्चिता[४] षोडश्यां शत्यां पराशरहोराशास्त्रस्यास्तित्वं सिध्यति ।

ततश्च श्रीवैद्यनाथाचार्यरचिते जातकपारिजातेऽपि फलदीपिकावद्ग्रन्थस्य मङ्गलाचरणपद्ये एव पराशरहोराशास्त्रस्य स्पष्टचर्चामवलोकयामः ।

**नत्वा गर्गपराशरादिरचितं सङ्गृह्य होरा-फलम् ।**
**वक्ष्ये जातकपारिजातमखिलं ज्योतिर्विदां प्रीतये ॥[५]**

कपिलेश्वरशास्त्रिणा जातकपारिजातस्य भूमिकायां वैद्यनाथस्य १३४७ शकाब्दासन्नः कालो लिखितः यश्च १४२६ ख्रिष्टाब्दतुल्यो भवति । अनेन परा-

---

१. वी० वी० रमण, वराहमिहिराज्, बृहज्जातक, पृ० ३४, रमण पब्लिकेशनज्, बंगलोर ।

२. वी० सुब्रह्मण्य शास्त्री, फलदीपिका १।२, के० एस्० कृष्णमूर्ति, ६५ थर्ड क्रास रोड, बासावांगुडी, बंगलोर ।

३. तत्रैव, १६।१.

४. तत्रैव, भूमिकायां, पृ० २ ।

५. कपिलेश्वर-शास्त्री जातक-पारिजातः, १।१, चौखम्बा संस्कृत सीरिज़, बनारस ।

शरस्य होराशास्त्रस्य खिष्टाब्दपञ्चमशत्यामप्युल्लेखो भवति ।[1]

बृहज्जातकादिवराहमिहिर-प्रणीत-ग्रन्थानां सुप्रसिद्धेन टीकाकारेणाचार्य-भट्टोत्पलेनापि बृहज्जातक-टीकायां प्रतिपादितम् ।

पाराशरीया संहिता केवलमस्माभिर्दृष्टा न जातकम्, श्रूयते स्कन्धत्रयं पराशरस्येति ।[2]

अत्र भट्टोत्पलेन पराशरहोराशास्त्रस्योल्लेखो विहितः । लिखितं च यत्तेन पराशरस्य होराशास्त्रं श्रुतं परं न दृष्टम् । इदं भवितुमर्हति यत्तदा मुद्रणादिकस्याभावात्तेन पराशरजातकं न दृष्टं भवेत् । यथा महामहोपाध्यायसुधाकरद्विवेदिना सपरिश्रमं ज्योतिषाचार्याणां कालक्रमोद्बोधकं 'गणकतरङ्गिणी' पुस्तकं लिखितम् । तत्र च प्रायः सर्वेषां ज्योतिषाचार्याणां चर्चा विहिता परं सुप्रसिद्धस्य जातकपारिजातग्रन्थलेखकस्य वैद्यनाथस्योल्लेखो न विहितः । अत्रापि चेदं सम्भाव्यते सुधाकरस्य काले जातकपारिजातस्य मुद्रणाभावात्तेन न दृष्टं भवेत्तस्मादेवास्य चर्चा न कृता भवेदिति । अस्तु भट्टोत्पलस्य कालात्पूर्वमपि पराशरहोराशास्त्रस्यास्तित्वमासीदिति ध्वन्यते ।

भट्टोत्पलस्य कालः ८८८ शकाब्दा इति प्रायः सर्वैरपि स्वीकृतम् ।[4]

सारावल्यां कल्याणवर्मणापि पराशरहोराशास्त्रस्य चर्चा विहिता—

**गर्गपराशरजीवा एतैरन्यैश्च विस्तरं रचितम् ।**
**कथयति शास्त्रेषूक्तं जातकमिति चित्रगुप्तकृतम् ॥**[5]

---

१. कपिलेश्वर-शास्त्री, जातक-पारिजातः, भूमिका, पृ० ५, चौखम्बा संस्कृत सीरिज, बनारस ।

२. भट्टोत्पलः, बृहज्जातकम् पृ० ६६, खेमराज श्री कृष्णदास, वेंकटेश्वर स्टीम् प्रेस, मुम्बई ।

३. तत्रैव, पृ० ३२६ ।

४. सुधाकर-द्विवेदी, गणकतरङ्गिणी, पृ० २१, मास्टर खेलाड़ीलाल एण्ड संस, बनारस ।

५. सीताराम-झा 'सारावली' ५४।१२, मास्टर खेलाड़ीलाल एण्ड संस बनारस ।

गणकतरङ्गिण्यां महामहोपाध्यायेन सुधाकर-द्विवेदिना ५०० शकाब्दः कल्याणवर्मणः कालो निर्णीतः।[1] अयमेव नेमिचन्द्र-शास्त्रिणापि भारतीयज्योतिष-पुस्तके समर्थितः।[2]

वराहाचार्येणापि पराशरहोराशास्त्रस्य चर्चा बृहज्जातके कृता विद्यते—

'मययवनमणित्थशक्तिपूर्वैः।'[3]

अत्र भट्टोत्पलमारभ्य सर्वैष्टीकाकारैः शक्तिशब्देन पराशर एव गृहीतः।

वराहमिहिरस्य कालः ४२७ शब्दाब्दः सुधाकरद्विवेदिना स्वीकृतः।[4] तस्यैव समर्थनं शङ्करबालकृष्ण-दीक्षितेनापि कृतम्।[5] वेरूनीमहोदयेनापि अयमेवकालोऽ-ङ्गीकृतः।[6] परं च बी० वी० रमणमहोदयेन प्रो० सूर्यनारायण-राव-महोदयेन च वराहमिहिरस्य ख्रिष्टाब्दात्पूर्वं प्रथमशती (१०० ई० पू०) स्वीक्रियते।[7]

अतश्च बृहत्पाराशर-होराशास्त्रस्य ख्रिष्टाब्दात्पूर्वं प्रथमशत्यामस्तित्व-मासीदिति स्पष्टं भवति।

पराशरस्य नामोल्लेखस्तु पाणिनीयाष्टाध्याय्यामपि दृश्यते 'पाराशर्य-

---

१. सुधारक-द्विवेदी 'गणकतरंगिणी', पृ० १६, मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

२. नेमिचन्द्र-शास्त्री 'भारतीय ज्योतिष', पृ० १३७, भारतीय ज्ञानपीठ, काशी।

३. अच्युतानन्द-झा बृहज्जातकम् ७।१, चौखम्बा संस्कृत सीरिज् आफिस, बनारस।

४. सुधारक द्विवेदी, गणकतरङ्गिणी, पृ० ११, मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

५. श्री-शिवनाथ-झारखण्डी, भारतीय ज्योतिष, पृ० २६२, प्रकाशन ब्यूरो, सूचना विभाग, उत्तर प्रदेश।

६. तत्रैव, पृ० २६७, टिप्पण्यां।

७. बी० वी० रमण, वराहमिहिराज् बृहज्जातक पृ० ६८, रमण पब्लिकेशनज्, बंगलोर।

शिलालिभ्यां भिक्षुनटसूत्रयोः'।[1] अस्य सूत्रस्य व्याख्याने तत्त्वबोधिनोटीकाकारेण पाराशर्यो व्यास इति लिखितम्।[2] पाणिनेः कालश्च डा० भण्डारकरमतेन ७०० वर्षाणि *ख्रिष्टाब्दात् पूर्वं स्वीक्रियते।*[3] *सी० वी० वैद्यस्य मते* ख्रि० पू० ८०० वर्षाणि पाणिनेः कालो ज्ञेयः।[4] मैकडानलमहोदयस्य मते ख्रि० पू० ५०० वर्षाणि ग्रियर्सनस्य मते च ख्रि० पू० ४०० वर्षाणि पाणिनेः कालोऽङ्गीक्रियते।[5] वासुदेवशरण-अग्रवालेन ख्रि० पू० ४८० *वर्षाणि पाणिनेः कालः स्वीकृतः।*[6] अनेन ख्रि० पू० ५०० वर्षाणि पराशर ग्रन्थानां चर्चासीदित्यवगम्यते।

नन्वस्मिन् ग्रन्थे बौद्धसंन्यासिनः चर्चा दृश्यते। यथा हि मन्दे बौद्धे वाग्मी स्यात् इत्यादि।[7] अनेनोल्लेखेन बौद्धधर्मप्रचारकालादूर्ध्वमेवास्य ग्रन्थस्य रचना स्यात्। समस्येयं न केवलमस्यैव ग्रन्थस्य विषयेऽस्ति। अपि तु महाभारतादीनामपि विषये समापतति। महाभारतमीमांसायां सी० व्ही० वैद्यमहोदयेन समाधानमस्य सुन्दररूपेण प्रस्तुतमस्ति।

यन्महाभारतादौ बौद्धशब्देन शाक्यसिंहप्रवर्तितस्य बौद्धमतस्योल्लेखो नार्हति *भवितुम्। यत एतस्मात्पूर्वमपि तादृशानि जैन-बौद्धमतानि प्रचलिता*न्यासन्। यदि वर्तमानबौद्धमतमेवैतद्बौद्धमतमिति स्वीकुर्मस्तदा ख्रिष्टाब्दात्पूर्वं

---

१. वासुदेव शर्मा, तत्त्वबोधिनी-समाख्या-व्याख्यासहिता, सिद्धान्त-कौमुदी, पृ० २६४, सूत्रम् ४।३।११०, निर्णयसागर प्रेस, मुम्बई।

२. तत्रैव, टीकायाम् पृ० २६४।

३. *श्री शिवनाथ झारखण्डी, भारतीय ज्योतिष, पृ० १२६, प्रकाशन ब्यूरो,* सूचना विभाग, उत्तर प्रदेश।

४. सी० व्ही० वैद्य, हिस्ट्री आफ् संस्कृत लिट्रेचर, प्रथम भाग, श्रुति खण्ड, पृ० १५५, ३१४, सदाशिव पेठ, पूना।

५. वासुदेवशरण अग्रवाल, 'पाणिनिकालीन भारतवर्ष', पृ० ४३८, मोतीलाल बनारसीदास, नेपाली खपरा, बनारस।

६. तत्रैव, पृ० ४७६।

७. *वृ० पा० उ० भा० १४।८४* (मुम्बई-स०)

४०० वर्षाणि महाभारतकालो भवति।[1] अयमेव न्यायोऽत्र पाराशरहोराशास्त्रस्य काल-निर्णयेऽपि प्रयोक्तव्यः।

श्रीशङ्करबालकृष्णदीक्षितेन प्रतिपादितं यदस्य ग्रन्थस्य पूर्वखण्डः पराशरस्यैव रचनेति न युक्तं वक्तुम्।[2] तत्तु ग्रन्थस्य वर्तमान-स्वरूप-विषये ज्ञेयम्। उत्तर-खण्डस्य तु प्राचीनत्वं तेनापि स्वीक्रियत एव। उत्तरखण्डे च यत्संमिश्रणं सञ्जातं तच्च शकाब्दात् ५०० वर्षाणि पश्चाद्बोध्यमित्यपि तेन प्रतिपादितम्।[3]

ग्रन्थस्य प्रकाशकेन श्रीधर-महोदयेनाप्युत्तरखण्डस्य प्राचीनत्वं स्वीक्रियते। अतश्च बृहत्पाराशरहोराशास्त्रस्य प्राचीनत्वं स्वतः सिद्धमेव। परं च वर्तमान-कालिकपुस्तकविषये वयमपि कथयितुमिदमेव शक्ता यदस्य प्राचीन-खण्डस्यास्तित्वं ख्रिष्टाब्दात् २०० वर्षाणि पूर्वमासीत्।[4]

### निष्कर्षः

ग्रन्थस्य बाह्याभ्यन्तरप्रमाणानां सामञ्जस्यस्थापनमप्यावश्यकम्। अभ्य-न्तरप्रमाणानुसारेणायं ग्रन्थो वसिष्ठपौत्रस्य शक्तिपुत्रस्य व्यासजनकस्य पराशरस्यैव रचना विद्यते। परम्परयापीदमेव सिध्यति। ग्रन्थे यत्र तत्र प्रयुक्ता अपाणिनीयाः प्रयोगा अप्यस्यार्षत्वं प्रतिपादयन्ति। शालिवाहननागार्जुनयोर्बौद्धस्य च नामोल्लेखेन परिष्कृतभाषया च तथान्येषां प्रमाणानामाधारेण ख्रिष्टाब्दात्पूर्वं प्रथमशतीतो द्वितीयशतीतोऽर्वागस्य ग्रन्थस्य रचना सञ्जातेत्यत्र संदेहो भवति। अतश्चास्य ग्रन्थस्य मुहुर्मुहुरनुशीलनेनात्र प्राचीनतया सह नवीनताया अपि सन्निवेशो दृश्यते। इदं सम्भाव्यते यन्मूलग्रन्थस्तु पराशरस्यैव स्यात्परतश्च समये समये प्रक्षेपादिकस्य संमिश्रणं सञ्जातं भवेदिति। यथा पुराणादिग्रन्थेष्वपि मन्यते। अस्य ग्रन्थस्योपलब्ध-

---

१. सी० व्ही० वैद्य, महाभारत मीमांसा, पृ० ६७ इण्डियन प्रेस, इलाहाबाद।

२. श्री शिवनाथ झारखण्डी, भारतीय ज्योतिष, पृ० ६३४, प्रकाशन ब्यूरो, सूचना विभाग, उत्तर प्रदेश।

३. तत्रैव, पृ० ६३४।

४. बृ० पा० भूमिकायां, पृ० ५ (मुम्बई-सं०)

संस्करणद्वये एव सम्यक्तया सारूप्यं न दृश्यते। प्रबन्धस्य विषयविवेचनावसरे यथास्थानं भेदादिकं निरूपितम्। कतिपयस्थानेषु च प्रक्षेपांशाः सुस्पष्टतया दृश्यमानाः स्वीक्रियन्ते एव। परमनेन ग्रन्थस्य प्राचीनत्वे संदेहो न विधेयः। येन रूपेण ग्रन्थोऽधुना दृश्यते तस्य मूलं तु ख्रिष्टाब्दात्पूर्वकालिकमित्यत्र न कोऽपि संदेहः। उत्तरखण्डस्य प्राचीनत्वं तु स्वतः स्पष्टमेव। अतश्चात्रास्माभिरपि ह्विटने महोदयस्य मतस्यानुसरणं क्रियते यत्तेन कथितं प्राचीन-भारतीयवाङ्मयस्य रचना-कालनिर्णये निर्णीतानां तिथीनां पुनर्विचारस्यावश्यकता विद्यते। एवञ्च यदि निखिलस्यैव संस्कृतवाङ्मस्य कालनिर्धारणं न सम्यगस्ति तत्रापि संशोधनस्या-वश्यकता वरीवर्ति तदधिकृत्यैव कृतस्यास्य ग्रन्थविषयककालनिर्णयस्यापि तेनैव न्यायेन युक्तायुक्तत्वं बोध्यमित्यलमतिविस्तरेण।

* * * *

## द्वितीयोऽध्यायः

# ग्रहस्वरूपनिरूपणम्

### (क) विषयावतरणम्

अस्मिन् ज्योतिषशास्त्रे ग्रहाणामेव महत्त्वपूर्णं स्थानं विद्यते। ग्रहाणां गत्यादिकस्य ज्ञानमेव ज्योतिषशास्त्रम्। तदधिकृत्यैव होराशास्त्रे ग्रहाणां स्वरूपादिकस्य ज्ञानं प्रोक्तम्। यदधिकृत्य फलकथनं भवति। बृहत्पाराशरहोराशास्त्रे प्रथमाध्यायादारम्यैव ग्रहचर्चा दृश्यते। अत्र च ग्रहनिरूपणाध्याये पूर्वभागस्य प्रथमद्वितीयषष्ठसप्तमचतुस्त्रिंशाध्यायानामुत्तरभागस्य च द्वितीयतृतीयनवमाध्यायानां विचारो विहितः। प्रथमाध्याये भगवतः परमात्मनो येऽवताराः शास्त्रेषु कथितास्तेऽपि सूर्यादिग्रहाणामेव अवतारा बोध्याः। यतो हि ग्रहा अपि परमात्मन एवांशा इति प्रतिपादितम्। द्वितीयाध्याये ग्रहाणां संज्ञास्वरूपादिकस्य स्पष्टीकरणप्रकारस्य च वर्णनं दृश्यते। षष्ठेऽध्याये प्रकाशकग्रहफलकथनं विद्यते। चतुस्त्रिंशेऽध्याये फलकथनार्थं ग्रहाणां जाग्रदाद्यवस्थानां निरूपणं फलकथनञ्चोपलभ्यते। उत्तरखण्डे द्वितीयाध्याये षड्बलनिरूपणं तृतीये इष्टकष्टबलवर्णनं नवमे ग्रहेभ्यो विचार्यवस्तूनां निर्देशश्च दृश्यते। अत्र यत्र कुत्र ग्रहाणां वर्णनमन्यत्राध्यायेषु विद्यते तस्य तत्रैव सन्निवेशो विहितः। यत्र चान्यपुस्तकेषु पराशराद्विशेषो दृश्यते तत्र तेषां ग्रन्थानामुद्धरणानि प्रदत्तानि। काशी-संस्करणे यत्र न्यूनाधिक्यं वर्तते तस्यापि प्रसङ्गेन निर्देशः कृतः।

## (अ) ग्रहाणां गुणस्वरूपादिकथनम् ।

गृह्णाति गतिविशेषानिति यद्वा गृह्णाति फलदातृत्वेन जीवानित्यर्थे विभाषा-ग्रहः,[1] इति पाणिनीयेन सूत्रेणाचि प्रत्यये सति ग्रहशब्दः सिध्यति। वेदेऽपि 'यद्-गृह्णाति तस्माद्ग्रहः' इति निर्दिष्टम्।[2] आकाशे ज्योतिर्बिम्बानि अनन्तसंख्यकानि दृश्यन्ते। सर्वाणि तानि स्थिरस्थानानि नक्षत्राणीति कथ्यन्ते। ग्रहास्तु पूर्वाभिमुखं गच्छन्ति, तानि नक्षत्राणि सततं गृह्णन्ति अत एवैते ग्रहा इति प्रोच्यन्ते।[3] ग्रहाणामपि प्रकाशकाप्रकाशकरूपेण भेदद्वयं पराशरेणाङ्कितम्। ग्रहाणां नवसंख्या महाभारते[4] दृश्यते। अस्मिन् ग्रन्थे नवग्रहानधिकृत्य नवावतारा: प्रतिपादिताः। यत्र ग्रहाणां सप्त संख्या प्रोक्ता तत्र राहुकेतू विहाय बोध्या। होराशास्त्रे फलकथनार्थं ग्रहाणां वर्णलिङ्गादिज्ञानमावश्यकमतोऽत्र निरुप्यते।

तत्रादौ सूर्यः—

सरति आकाशे सुवति कर्मणि लोकं प्रेरयति वा इति सूर्यः। वेदेऽपि—

**'एष वै ग्रहः य एष तपति, येनेमाः प्रजाः गृहीताः।'**[5]

इत्युपलभ्यते। अयं सूर्यः कालपुरुषस्यात्मा, विश्वस्य राजा, रक्तश्यामवर्णोऽग्नि-देवताकः पुल्लिङ्गः, क्षत्रियवर्णः, सत्त्वप्रकृतिको मधु-पिङ्गलनेत्रः, चतुरस्र-शरीरः, शुचिः, पित्तस्वभावः, धीमान्, अल्पकेशः, अस्थिस्वामी, देवालयाधिपः, समयेऽयनाधिपतिः, कटुरसः, दक्षिणदिशि, दिवसे च बलवान्, स्थूलवृक्षोत्पादकः, रक्तक्षौमवस्त्रः, ग्रीष्मर्तुस्वामी, मूलसंज्ञकः, सिंहराश्यधिपतिः, मेषराशेर्दशांशपर्यन्तमुच्चः, तुलाराशेश्च दशांशान्तं नीचः, सिंह-

---

१. अष्टाध्यायी ३।१।१४३, वासुदेव शर्मा, सिद्धान्त कौमुदी, निर्णय सागर प्रेस, बम्बई।

२. शतपथ-ब्राह्मणम् १०।१।१।५, हंसराजः, वैदिक-कोषः, पृ० १५७, दयानन्द महाविद्यालय, संस्कृत-ग्रंथमाला, लाहौर।

३. बृ० पा० ३।४ (काशी-सं०)।

४. महाभारत, सभापर्व ११।२६, गीता प्रेस, गोरखपुर।

५. शतपथ-ब्राह्मणम् ४।६।५।१, हंसराजः, वैदिक-कोषः, पृ० ६०३, दयानन्द महाविद्यालय, संस्कृत ग्रंथमाला लाहौर।

राशेर्विंशत्यंशपर्यन्तं मूलत्रिकोणसंज्ञकः। चन्द्रमङ्गलगुरवोऽस्य मित्राणि, बुधः समः, शनिशुक्रौ च शत्रू। राज्यविद्रुमरक्तवस्त्रमाणिक्यराजवर्णपर्वतक्षेत्रपितृपति-व्रतास्त्रीप्रभृतिवस्तूनां कारकः द्वाविंशे वर्षे भाग्योदयप्रदश्च प्रोक्तः। भगवान् श्रीरामचन्द्रोऽस्यावतारः।

अथ सोमः—

सोमो हि कालपुरुषस्य मनः, गौरगात्रः, जलदेवताकः, वश्यः, स्त्रीलिंगः, सत्त्वस्वभावः, बहुवातकफः, प्राज्ञः, शरीरे रक्ताधिपतिः, जलस्थानस्वामी, समये मुहूर्त्ताधिपः, लवणरसः, उत्तरदिशि निशायां च बलवान्, दुग्धवृक्षोत्पादकः, वर्षर्तुस्वामी, क्षौमवस्त्रः, धातुसंज्ञकः, कर्कराश्यधिपतिः, वृषराशेरंशत्रयान्तमुच्चो वृश्चिकराशेश्चांशत्रयपर्यन्तं नीचस्तथा वृषराशेस्त्रिंशदंशान्तं मूलत्रिकोणसंज्ञकश्चास्ति। सूर्यबुधावस्य मित्रे मङ्गलगुरु-शनिशुक्राश्च समाः सन्ति। अयं पुनः मातृमनः पुष्टिगन्धरसेक्षुनुगोधूमक्षारकदिवजशक्तिकार्यसस्यरजतविवाहप्रभृतिकानां वस्तूनां कारकः, चतुर्विंशाब्दे च भाग्योदयप्रदो भवति। भगवान् श्रीकृष्णो हि अस्यावतारः।

अथ मङ्गलः—

मङ्गलग्रहः कालपुरुषस्य सत्त्वम्, रक्तवर्णः, कार्तिकेय-देवताकः, सेनापतिः क्षत्रियः, तमःस्वभावः, क्रूरो रक्तनेत्रश्चञ्चलः, पित्तप्रकृतिकः, क्रोधी, कृशो मध्य-देहश्चोदारहृदयः, अग्निस्थानस्वामी, समयेऽहोरात्राधिपः, तिक्तरसः, दक्षिणे रात्रौ च बलवान्, कटुवृक्षोत्पादकः, रक्तवस्त्रः, ग्रीष्मर्तुस्वामी, मेषवृश्चिकराश्यधिपतिः, मकरराशेरष्टाविंशत्यंशान्तमुच्चस्तथा मेषराशेरष्टाविंशत्यंशपर्यन्तं नीचो मेषराशौ द्वादशांशान्तं मूलत्रिकोणसंज्ञकश्चास्ति।

अस्य हि रविचन्द्रगुरवो मित्राणि, शनिशुक्रौ समौ, बुधश्च शत्रुः। अग्नितत्त्वः, धातुसंज्ञकश्चायं सत्त्वभूमिपुत्रशीलशौर्यरोगग्रह्यभ्रातृपराक्रमाग्निसाहस-राजशत्रुकुलटास्त्रीप्रभृतीनां वस्तूनां कारकः, अष्टाविंशतितमे वर्षे भाग्यप्रदो भवति। भगवान् नृसिंहश्चास्यावतारः प्रोक्तः।

अथ बुधः—

बुधस्तु कालपुरुषस्य वाणी, दूर्वाश्यामवर्णः, विष्णुदेवताकः, नपुंसकः,

वैश्यः, श्रेष्ठशरीरः, श्लिष्टवाक्यः, हास्यप्रियः वातपित्तकफदोषत्रययुतः, शरीरे त्वक्स्वामी, क्रीडास्थलस्वामी, मिश्रितरसः, पूर्वदिशि चाहोरात्रे बलवान्, निष्फल-वृक्षोत्पादकः, कृष्णक्षौमवस्त्रः, शरदृतुपः, रजःस्वभावः, मूलसंज्ञकः, युवराजश्च कथितः। ज्योतिर्विद्यामातुलगणितकार्यनर्तनवैद्यहास-शिल्पविद्याविवाह-प्रभृतिकानां वस्तूनां कारकः, मिथुनकन्याराशिपतिः, कन्याराशेः पञ्चदशान्तमुच्चस्तथा मीन-राशेः पञ्चदशपर्यन्तं नीचः, कन्याराशौ पञ्चदशांशानन्तरं विंशत्यंशान्तं मूल-त्रिकोणः, मूलसंज्ञकः, भूमितत्त्वश्चास्ति।

अस्य हि रविशुक्रौ मित्रे शनिगुरुभौमाः समाः, चन्द्रश्च शत्रुः। अयं पुनः द्वात्रिंशत्तमे वर्षे भाग्यप्रदः। भगवान् बुद्धोऽस्यावतारः।

अथ गुरुः—

कालपुरुषस्य ज्ञानसुखात्मकः, गौरगात्रः, इन्द्रदेवताकः, मन्त्री, ब्राह्मणः, विशालदेहः, पिङ्गलकेशनेत्रः, कफप्रकृतिकः, धीमान्, सर्वशास्त्र-विशारदः, शरीरे वसास्वामी, कोशस्थानाधिपः, समये मासाधिपतिः, मधुररसः, पूर्वस्यां दिशि दिने च बलवान् सफलवृक्षोत्पादकः, पीताम्बरः, धनुर्मीनस्वामी, कर्कस्य पञ्चांशपर्यन्त-मुच्चस्तथा मकरस्य पञ्चांशान्तं नीचः, धनुषि च दशांशान्तं मूलत्रिकोणः, हेम-न्तर्तुस्वामी, सत्त्वस्वभावः, आकाशतत्त्वः।

स्वकर्मयजनदेवब्राह्मणधनगृहकाञ्चनवस्त्रपत्रमित्रान्दोलनविवाहप्रभृतिकानां वस्तूनां कारकः, मूलसंज्ञकश्चास्ति।

अस्य हि रविचन्द्रमङ्गला मित्राणि, शनिः समः, बुधशुक्रौ शत्रू। अयं पुनः षोडशे वर्षे भाग्योदयकारको भवति। भगवान् वामनश्चास्यावतारः प्रोक्तः।

अथ शुक्रः—

शुक्रो हि कालपुरुषस्य वीर्यात्मको मन्त्री श्यावशरीरः स्त्रीलिङ्गश्चेन्द्राणी-देवताको जलतत्त्वो ब्राह्मणः, रजःप्रकृतिकः, सुखी, कान्तवपुः, श्रेष्ठः, सुलोचनः, काव्यकर्ता, कफवातप्रकृतिकः, वक्रकेशः, शरीरे शुक्रस्वामी, शयन-स्थानाधिपः, समये पक्षात्मकोऽम्लरसः, उत्तरदिशि दिने च बलवान्, पुष्पवृक्षोत्पादकः, क्षौम-

वस्त्रः, वसन्तर्तुस्वामी, मूलसंज्ञकः, वृषतुलाधिपः, मीनराशौ सप्तविंशतिसंख्यकांशान्तमुच्चः, कन्यायां सप्तविंशत्यंशान्तं नीचः, तुलायां पञ्चदशांशान्तं मूलत्रिकोणः।

कलत्रकार्मुकसुखगीतशास्त्रकाव्यपुष्पसुकुमारयौवनाभरणरजतयानगर्वलोकमौक्तिकविभवकवितारसविवाहादीनां वस्तूनां कारकः।

शनिबुधौ चास्य मित्रे, गुरुभौमौ समौ, रवि-चन्द्रौ शत्रू स्तः। अयं हि पञ्चविंशे वर्षे भाग्योदयप्रदो भवति। भगवान् परशुरामोऽस्यावतारः।

अथ शनिः—

अयं हि कालपुरुषस्य दुःखस्वरूपः, कृष्णवर्णः, ब्रह्मदेवताकः, नपुंसकः, मृत्युः, वायुतत्त्वः, शूद्रः, स्थूलदन्तोऽलसः, पङ्गुः, खररोमकचः, कृशो दीर्घतनुः, पिङ्गलनेत्रः, वातप्रकृतिकः, शरीरे स्नायुस्वामी, उत्करवल्मीकस्थानाधिपतिः, समये वर्षपः, कषाय-रसः, पश्चिमे रात्रौ च बलवान्, कुत्सितवृक्षोत्पादकः, चित्रपट्टवस्त्रः, शिशिरर्तुस्वामी, मूलधातुसंज्ञकः, सर्वग्रहेषु वृद्धस्तथायुर्वृद्धिप्रदायकः, मकरकुम्भाधिपतिः, तुलाराशौ विंशत्यंशान्तमुच्चस्तथा मेषे विंशत्यंशान्तं नीचः, कुम्भे च विंशत्यंशपर्यन्तं मूलत्रिकोणः, तमःस्वभावो, महिषहयगजतैलवस्त्रशृङ्गार-प्रयाणसर्वराज्यदार्वायुधगृहयुद्धसंचारशूद्रनीलमणिविघ्नकेशशल्यशूलरोगदासदासीजना—युष्यमृत्युप्रभृतिकानां वस्तूनां कारकः, षट्त्रिंशत्तमे वर्षे भाग्यप्रदो भवति।

शुक्रबुधौ चास्य मित्रे गुरुः समो रविचन्द्रभौमाः शत्रवः सन्ति। भगवान् कूर्मोऽस्यावतारः प्रोक्तः।

अथ राहुः—

भगवान् वराहोऽस्यावतारः। सेनास्वरूपः, धूम्राकारो नीलशरीरो वनवासी, भयङ्करो वातप्रकृतिको धीमान्, चाण्डालजातिकः, वल्मीक-स्थानाधिपः सीसधातुपः, चित्रकन्याः, समये चाष्टमासाधिपः, धातुसंज्ञकः, प्रयाणसमयसर्परात्रिसकलसुप्तार्थद्यूतकारकः। मिथुने विंशत्यंशान्तमुच्चः कुम्भे मूलत्रिकोणश्च प्रोक्तः। अस्य गृहं कन्याराशिर्ज्ञेयः। अस्य शनिशुक्रौ मित्रे सूर्यचन्द्रभौमाः

शत्रवः प्रोक्ताः ।

अथ केतुः—

भगवान् मत्स्योऽस्यावतारः । शेषन्तस्य राहुवदेव स्वरूपम् । समये मासत्रयाधिपतिर्जीवसंज्ञकः, छिद्रयुतवस्त्रः, नीलमणि-स्वामी, व्रणरोगचर्मार्तिशूलस्फुटक्षुधार्त्तिकारकः, धनुषि षडंशान्तमुच्चः सिंहे मूलत्रिकोणश्च प्रोक्तः । अस्य गृहं मीनराशिर्ज्ञेयः । शनि-शुक्रौ शत्रू सूर्यचन्द्रभौमा मित्राणि गुरुबुधौ च समौ प्रोक्तौ ।

अत्र वैशिष्ट्यम्—

क्रूरग्रहाः कृष्णपक्षे दक्षिणायने शुभग्रहाश्च शुक्लपक्षे उत्तरायणे बलिनो भवन्ति ।

वर्षमास-दिनहोराणां स्वामिनः क्रमादुत्तरोत्तरं बलिनः सन्ति ।

शनिमङ्गलबुधगुरुशुक्रचन्द्रादित्याश्चैतेऽप्युत्तरोत्तरं बलिनो निगदिताः ।

तात्कालिक-मैत्री-विचारः—

ग्रहाः स्वाधिष्ठित-स्थानात् द्वितीयतृतीयचतुर्थैकादशद्वादशस्था मित्राणि, प्रथमपञ्चमषष्ठसप्तमाष्टमनवमदशमस्थाश्च शत्रवः भवन्ति ।

राश्यादीनामधिपतित्वे विशेष :—

चन्द्रबुधशुक्रसूर्यपरिवेषकार्मुकगुरुव्यतिपातशनिकेतवश्च क्रमान्मेषादीनां राशीनामधिपतयः सन्ति ।

पञ्चधा मैत्रीविचारः—

मित्रे मित्रेऽतिमित्रम् । समे मित्रे मित्रम् । शत्रौ मित्रे समः । समे शत्रौ शत्रुः । शत्रौ शत्रौ चाति-शत्रुः । अयं भावोऽत्र नैसर्गिको यदि कश्चिद्ग्रहो मित्रं तात्कालिकेऽपि मित्रं तदातिमित्रम् । एवमेव यदि नैसर्गिके समस्तात्कालिके च मित्रन्तदा मित्रमित्यादि ज्ञेयम् ।

फले बलविचारः—

उच्चस्था ग्रहाः पूर्णं, त्रिकोणस्थाः पादोनं, स्वगृहस्थाः पादमात्रं शुभं फलं

प्रयच्छन्ति। एवं वैपरीत्ये नीचस्थाः शत्रुगृहस्थाश्च पूर्णं, समस्थाः स्वगृहस्थाश्च पादोनं, मित्रस्था अर्द्धमुच्चस्थाः शून्यमशुभं वा फलं प्रयच्छन्ति।

ग्रहाणां दृष्टि-विचारः—

सर्वे ग्रहास्तृतीयदशमस्थाने पाददृष्ट्या, नवमपञ्चमस्थाने द्विपाददृष्ट्या, चतुर्थाष्टमस्थाने त्रिपाददृष्ट्या, सप्तमस्थानञ्च पूर्णदृष्ट्या पश्यन्ति।

अत्र विशेषः—

तृतीयदशमस्थाने शनिः, नवमपञ्चमस्थाने गुरुः, चतुर्थाष्टमस्थाने भौमश्च पूर्णदृष्ट्या पश्यन्ति।

भावानुसारेण ग्रहाणां शुभफलम्—

पञ्चमे गुरुस्तृतीये भौमः षष्ठे शनिरेकादशे च सर्वे ग्रहाः शुभाः सन्ति। शनेरुच्चत्वं शुभम्। नवमे शुभा ग्रहाः शुभाः पापाश्चाशुभाः स्वगृहं विना ज्ञेयाः। स्वगृहस्थश्च पापोऽपि शुभः प्रोक्तः।

ग्रहाणां फलज्ञाने विशेषः—

दृश्यचक्रार्धगाः (सप्तमभावादूर्ध्वं द्वादशभावान्तं लग्नभुक्तांशावधि) ग्रहाः प्रत्यक्षफलदायकाः। एवं चादृश्यगाः (लग्नादूर्ध्वं सप्तम-भावान्तं भुक्तांशावधि-पर्यन्तं) ग्रहाः परोक्षफलदायका भवन्ति।

अन्यत्र वैशिष्ट्यम्—

ग्रन्थान्तरे शिवशिवाकार्तिकेयविष्णुब्रह्मेन्द्रकाला एते क्रमात्सूर्यादिग्रहाणामधिदेवताः प्रोक्ताः।[1]

जातिविचारेऽपि सारावल्यां चन्द्रो वैश्यानां बुधः शूद्राणां शनिरन्त्यजानां राहुश्च म्लेच्छानां स्वामी निर्दिष्टः।[2]

---

१. बृ० पा०, पृ० ६ टिप्पण्याम् (काशी-सं०)

२. सीताराम झा, सारावली ४।१४, मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

सर्वार्थचिन्तामणौ राहुश्चाण्डालः केतुश्च वर्णसङ्करो निगदितः।[1]

नारदपुराणे पूर्वाग्निदक्षिणनैऋत्यपश्चिमवायव्योत्तरेशानानां दिशानां सूर्य-शुक्र-मङ्गल-राहु-शनि-चन्द्र-बुध-गुरवश्च क्रमात्स्वामिनः प्रोक्ताः।

ताम्र-मणि-सुवर्ण-कांस्य-रजत-मौक्तिक-लोहानां धातूनामपि क्रमात्सूर्यादयो ग्रहा अधीशा ज्ञेयाः।[2]

बृहज्जातके स्थूलनवीनाग्निदग्धार्द्रमध्यमसुदृढजीर्णानि च वस्त्राणि क्रमात्सूर्यादीनां प्रोक्तानि।[3]

राजनीत्यामपि साम्नो गुरु-शुक्रौ, दण्डस्य रवि-भौमौ, दानस्य सोमः, भेदस्य राहुकेतुशनिबुधाश्च स्वामिनो ज्ञेयाः।[4]

वेदलोकाधिपतिविचारोऽपि दृश्यते—

ऋग्यजुस्सामाथर्वणां गुरुशुक्रभौमबुधाः क्रमात्स्वामिनः प्रोक्ताः।

एवं स्वर्गस्य गुरुः, पितृलोकस्य चन्द्र-शुक्रौ, मर्त्यस्य रवि-भौमौ, नरकस्य शनि-बुधौ स्वामिनौ भवतः।[5]

बलविचारे विशेषः—

सारावल्याम् पुरुषग्रहा रविमङ्गलगुरवो राश्याः प्रथमभागे, स्त्रीग्रहौ चन्द्र-शुक्रौ तृतीय-भागे तथा नपुंसकौ शनिबुधौ मध्यभागे बलिनः सन्ति।

चन्द्रो निशायाः प्रथमभागे, शुक्रो मध्यभागे, भौमश्चान्तिमे भागे बली

---

१. महीधर-शर्मा, सर्वार्थचिन्तामणिः, १।७४, गंगाविष्णु श्रीकृष्णदास, बम्बई।

२. नारदमहापुराणम्, १।२।५५।१७,२१, कल्याण, नारदविष्णुपुराणांकम्, जनवरी १९५४, गीता प्रेस, गोरखपुर।

३. सीताराम-झा, बृहज्जातकम् २।१२, मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

४. ज्योतिष-तत्त्वसुधार्णवः, १।३६, खेमराज श्रीकृष्णदास, मुम्बई।

५. प० महेश, रणवीरज्योतिर्महानिबन्ध, २।७२, जम्मू काश्मीर सरकार, जम्मू।

भवति। बुधो दिनस्य प्रथमे भागे, रविर्मध्यमे, शनिश्चान्तिमे भागे बलवान् भवति। गुरुश्चाहोरात्रे एव बली भवति।[1]

सर्वार्थचिन्तामणावपि विशेषः—

गुरुबुधौ लग्ने पूर्वे च, सूर्यभौमौ दशमे दक्षिणे च, शनिः सप्तमे पश्चिमे च, चन्द्रशुक्रौ चतुर्थे चोत्तरे च बलिनौ स्तः।[2]

सारावल्यां देशविचारोऽपि ग्रहाणां प्रोक्तः। कलिङ्गयवनावन्तिकामगध-सैन्धवसमतटसौराष्ट्रद्रविडदेशानां क्रमात्सूर्यादयो ग्रहाः स्वामिनो ज्ञेयाः।[3]

वर्णविचारे नारदपुराणे वैशिष्ट्यम्—

**ताम्रशुक्लरक्तहरितपीत-चित्रकृष्ण-वर्णाः क्रमात्सूर्यादीनाम्।**[4]

स्थानविशेषेण ग्रहाणां विफलत्वं रणवीरज्योतिर्महानिबन्धे—

सूर्ययुतश्चन्द्रः, चतुर्थस्थानस्थितो बुधः, पञ्चमस्थो गुरुर्द्वितीयस्थो भौमः, षष्ठस्थः शुक्रः, सप्तमस्थः शनिश्च निष्फलो भवति।[5]

पुनश्च तत्रैव—

राहोर्दोषं बुधो हन्ति, राहुबुधयोर्दोषं शनिर्हन्ति, राहुबुधशनिदोषं भौमो हन्ति, राहुबुधशनिभौमानां दोषं शुक्रो हन्ति। एवमेतेषां पञ्चानां दोषं गुरुस्तथै-तेषां षण्णां चन्द्रस्तथैतेषां सप्तानामुत्तरायणस्थः सूर्यो हन्ति।[6]

---

१. सीताराम झा, सारावली, ४।३८,३९. मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

२. महीधर शर्मा, सर्वार्थ-चिन्तामणि १।१००,१०१, गंगाविष्णु श्रीकृष्णदास, लक्ष्मी वेङ्कटेश्वर स्टीम् प्रेस, कल्याण, बम्बई।

३. सीताराम झा, सारावली, ७।१४, १५, मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

४. नारदमहापुराणम् १।२।५५।१६, कल्याण, नारदविष्णुपुराणांकम् जनवरी, १९५४, गीता प्रेस, गोरखपुर।

५. पं० महेश, रणवीर ज्योतिर्महानिबन्ध, २।७९, जम्मू काश्मीर सरकार, जम्मू।

६. तत्रैव, २।८०, ८१।

## (इ) ग्रहाणां स्पष्टीकरणप्रकारः ।

ग्रहाणां स्पष्टीकरणार्थमेव गणितज्योतिषस्योपादेयत्वमस्ति । ग्रहाणां स्पष्टीकरणज्ञानमेव ज्योतिषशास्त्रमिति सम्यगुच्यते ।

पाराशरहोराशास्त्रं केवलं होराशास्त्रमधिकृत्य निरूपितम् । होराशास्त्रे जन्मकुण्डलीमाश्रित्य ग्रहाणां योगायोगेन दशादिभिः फलकथनस्यैव वैशिष्ट्यम् । अतोऽस्मिन् ग्रन्थे ग्रहस्पष्टीकरणज्ञानप्रकारस्य विशदचर्चा नोपलभ्यते । स प्रकारः सूर्यसिद्धान्तादिग्रन्थेषूह्य इति स्वतः स्पष्टम् । सूर्यसिद्धान्तग्रहलाघवज्योतिर्गणितादिकरणग्रन्थानाश्रित्य पञ्चाङ्गानां निर्माणं भवति । अत एवात्र पञ्चाङ्गमधिकृत्य ग्रहाणां स्पष्टीकरणप्रकारो निर्दिष्टः । स प्रकारोऽत्र मूलग्रन्थीयोऽथवा प्रक्षिप्त इति प्रश्न उत्पद्यते । स च प्रक्षिप्त इत्येव विज्ञेयम् । यतः पञ्चाङ्गस्य चर्चेयं ग्रन्थेऽन्यत्र कुत्रापि नास्ति । पञ्चाङ्गे तिथिवारनक्षत्रयोगकरणानां सन्निवेशः । पराशरात्परवर्तिषु मानसागरीप्रभृतिकेषु ग्रन्थेषु पञ्चाङ्गमाश्रित्य फलप्रकारोऽप्युपलभ्यते । अतश्चात्रापि पञ्चाङ्गमाश्रित्यैव स्पष्टीकरणप्रकारो निरूप्यते । इदमेव सौकर्यम् । वैशिष्ट्यन्तु करणग्रन्थेष्वेव द्रष्टव्यम् ।

**स्वेष्टादग्रे भवेत्पङ्क्तिः पङ्क्तौ स्वेष्टं विशोधयेत् ।**<br>
**स्वेष्टात्पृष्ठे भवेत्पङ्क्तिः स्वेष्टे पङ्क्तिं विशोधयेत् ॥**<br>
**ऋणं धनं तथा ज्ञेयं चालने विधिरेव हि ।**

अर्थाद्यस्मिन् दिवसे ग्रहसाधनमपेक्षेत, तस्मिन् दिवसे जन्मकालेष्टं घट्यादिकं यदि पञ्चाङ्गस्थग्रहस्पष्टपङ्क्तितः पूर्वं स्यात्तदा पञ्चाङ्गपङ्क्तौ इष्टं विशोधयेत् । एवञ्च यदि पञ्चाङ्ग-पङ्क्तिजन्मेष्टकालात्पूर्वं स्यात्तदा पञ्चाङ्गपङ्क्तिं जन्मकालेष्टे विशोधयेत् । विशुद्धं चांशकलादिकं क्रमेण ऋणेन धनेन वा युक्तं विहीनं वा कुर्यात्तेन चेष्टकालानुरूपं ग्रहाणां स्पष्टादिकं भवतीति भावः ।

काशी-संस्करणे त्वत्र टीकायां विशदा क्रिया वर्तते ।

तत्रायं प्रकारः—

पञ्चाङ्गे वा ग्रहाणां स्पष्टा पङ्क्तिर्विद्यते सा पङ्क्तिरिति कथ्यते । तथा च यस्मिन् काले ग्रहसाधनापेक्षा भवेत् स चेष्टकाल इति कथ्यते ।

इष्टकालात्पङ्क्तिरग्रे भवेत्तदा ऋणचालनं भवति । यदि च पङ्क्तिः पृष्ठे भवेत्तदा धनचालनं कथ्यते । एवं च इष्ट-पङ्क्त्योर्दिनघटीपलादिकस्यान्तरं भवति तच्च चालनं प्रोच्यते ।

तच्च चालनं यदि धनचालनं भवेत्तदा पङ्क्तिस्थग्रहस्य गत्या गुणीकृत्य षष्टिसंख्यया विभजेत् लब्धञ्चांशादिकं पङ्क्तिस्थे ग्रहे युञ्जीत ततश्च तात्कालिको ग्रहः स्पष्टो भवति ।

यदि च ऋणचालनं भवेत्तदा ऋणचालने ग्रहस्य गतिं गुणीकृत्य षष्टिसंख्यया विभजेत् । लब्धांशादिकं पङ्क्तिस्थग्रहे हीनं कुर्यात् । ततश्च तात्कालिको ग्रहः स्पष्टो जायते ।

अत्रायं विशेषः—

यत्रान्तरे दिनसंख्यायां दिनसंख्याहीना न भवेत्तत्र दिनसंख्यायां सप्तसंख्यां संयोज्य तां हीनां कुर्यात् । एवं च राशिसंख्यायां राशिसंख्या हीना न भवेत्तदा द्वादशसंख्यां संयोज्य तां हीनां कुर्यादिति ज्ञेयम् । पङ्क्तिस्थग्रहस्य स्पष्टकालोऽर्धरात्रौ भवति तस्य मिश्रमानमिति संज्ञा ज्ञेया । अत्र कल्पितोदाहरणम्—

माघशुक्लषष्ठ्यां सोमवासरे सूर्यस्पष्टस्य पङ्क्तिः पञ्चाङ्गे एवं विद्यते सूर्यः १०।२।१६।१३, गतिः ६०।५६ मिश्रमानम् ४३।४९ । अत्रेष्टकालघटिकापलादिकम् ७।३।२५॥

२।४३।४९　दिन-मिश्र-मानादिके
७। ३।२५　इष्ट-दिन-घटिकापलादिके न्यूनीकृते

२।४०।२४　इति

इदं च ऋणचालनम् । अतः पंक्तिस्थसूर्यस्य ६०।४३ गत्या गुणीकृतम्

२।४०।२५×६०=१२० । २४०० । १५००

२।४०।२५×४३=　　८६ । १७०० । १०७५

योगे कृते　१२० । २४८६ । ३२०० । १०७५

सवर्णीकृते　२ । ४२ । १६ । ५७=२० इति जातम् ।

अत्रान्तिमे भागे स्वल्पान्तरे सति पूर्णं ग्राह्यमिति न्यायेन १६।५७ अस्य २० इति ग्राह्यम्। तेन २।४२।२० इति भवति। इयं पङ्क्तिः ऋणचालनत्वात्। पञ्चाङ्गस्थायां सूर्यपङ्क्तौ १०।२।१६।१३ हीना कृता तेन १०।२।१६।१३-२।४२।२०=९।२९।३६।५३

इति सूर्यस्पष्टः सञ्जातः।

चन्द्रस्पष्टीकरण-प्रकारः—

वर्तमाननक्षत्रादारम्य जन्मेष्टकालान्तं व्यतीतः समयो भयातमिति कथ्यते। नक्षत्रस्य सर्वभोगकालो भभोग इत्युच्यते।

भयातभभोगानयन-ज्ञानम्—

यदि जन्मेष्टं नक्षत्रादधिकं स्यात्तदा इष्टकाले नक्षत्रं न्यूनीकार्यम् शेषे च द्वितीयदिननक्षत्रस्य घट्यादिकं संयोज्यम्। भयातं भवति। यदि चेष्टकालो नक्षत्रादधिको भवेत्तदा पूर्वदिननक्षत्रं षष्टि-घटिकाभ्यो हीनः कार्यः। शेषे च जन्मेष्टकालघटीपलादिकं संयोज्यम्। भयातं भवति।

भयातस्य पलादिकं षष्टिसङ्ख्यया गुणीकृत्य भभोगपलैर्विभजेत् लब्धौ षष्टिसङ्ख्यया गुणितां नक्षत्रसङ्ख्यां युञ्जीत तां सङ्ख्यां द्विभिर्गुणीकुर्यात् ततश्च नवभिर्विभजेत् लब्धांशादिकं चन्द्रस्पष्टो भवति।

कल्पितोदाहरणम्—

अत्र भयातम् ५८।१५ पलीकृते ३४९५ षष्टिसङ्ख्यया गुणिते २०९७०० भभोगपलैः ३५७१ विभक्ते लब्धिः ५६।४३।२३ सञ्जाता। अत्र गतनक्षत्रं रोहिणी *तस्यासङ्ख्या ४ तस्यां षष्टिभिर्गुणितायां २४० लब्धिर्भवति। अत्र पूर्वा लब्धिः* ५८।४३।२३ युक्ता कृता। ततश्च २९८।४३।२३ इति सञ्जातम्। अस्मिन् द्विगुणिते ५९७।२६।४६ नवसङ्ख्याविभक्ते च ६६।२२।५८ इति सञ्जातम्। अस्यांशादिकस्य राश्यादिकृते २।६।२२।५८ इति चन्द्रस्पष्टः।

## (उ) ग्रहाणां षड्बलनिरूपणम्[1]

---

1. बृ० पा० उ० भा०, द्वितीयोऽध्यायः सकलः। (मुम्बई-सं०)

ग्रहाणां षड्वर्गवत् षड्बलस्यापि महत्त्वं विद्यते। षड्वर्गबलीग्रहएव बलवानिति जातक-शास्त्रे सुप्रसिद्धम्। दृग्बलं, स्थान-बलं, दिग्बलं, कालबलं, निसर्गबलं, चेष्टाबलमिति षड्विधं बलं प्रोक्तम्।

पूर्वं दृग्बलमाह। यश्च ग्रहोऽन्यग्रहं भावं वा पश्यति स द्रष्टेति कथ्यते। यश्च ग्रहो भावो वान्येन ग्रहेण भावेन वाऽवलोक्यते स ग्रहा भावो वा दृश्य इति प्रोच्यते। द्रष्टारं (ग्रहं भावं वा) दृश्यात् (भावात् ग्रहाद् वा) न्यूनीकुर्यात्। अत्र यदि शेषं षड्राश्यधिकं भवेत्तदा शेषं दशराशिभ्यो न्यूनीकृत्य तच्छेषमंशात्मकं विधाय द्विभिर्विभजेत् लब्धिश्च दृष्टिस्पष्टो भवति। एवञ्च यद्यत्र द्रष्टुर्दृश्यश्चान्तरं पञ्चराश्यधिकन्तदा राशिं विहायांशादिकं द्विभिर्गुणीकुर्यात् तच्च स्पष्टदृष्टिर्भवति। यद्यत्रान्तरं राशिचतुष्टयाधिकं भवेत्तदा पञ्चराशिभ्यो न्यूनीकुर्यात् शेषांशादिकं दृष्टिस्फुटमिति। यद्यत्रान्तरं राशित्रयाधिकन्तदा राशिचतुष्टयान् न्यूनीकुर्यात् शेषांशादिकमर्धं विधाय त्रिंशत्सङ्ख्यायां युञ्जीत तदेव दृष्टि-स्फुटं भवति। यद्यन्तरं राशि-द्वयाधिकं-भवेत्तदा राशिं विहाय पञ्चदशसङ्ख्यायां युञ्जीत। तच्चापि दृष्टि-स्पष्टमिति। यद्यन्तरमत्र राश्येकाधिकन्तदा राशिं परित्यज्यांशादिकं द्विभिर्विभजेत् लब्धिश्च स्पष्टदृष्टिरिति भावः। अत्र काशीसंस्करणे टीकायां विशेषः।

यद्यत्रान्तरं राशिदशाधिकमथवा राश्येकान्यूनन्तदा दृष्टिस्पष्टं शून्यं ज्ञेयम्।[1]

उदाहरणम्—

लग्नसाधनप्रकरणे सूर्यस्पष्टो ६।२६।३६।५३ लग्नस्पष्टश्च १०।२६।२८।५। अत्र द्रष्टा सूर्यो लग्नं च दृश्यम्। अतः स्पष्टसूर्यं स्पष्टे लग्नान् न्यूनीकुर्यात्। अन्तरञ्च ०।२६।५१।१२। इदं चैकराशितो न्यूनमतोऽत्र दृष्टिशून्यमिति।

अत्र शनिदृष्टि-विशेषमाह—

अत्र शनिदृष्टि-विशेषं कथयन् पूर्वोक्तस्यापवादमुपस्थापयति। अर्थाद्यदि शनिश्च द्रष्टा भवति तदान्यो ग्रहो भावो वा दृश्यो भवति तदा द्वयोरन्तरे विहिते

---

१. बृ० पा० पृ० १४७, पृ० ३ (काशी-सं०)

यद्यत्र राशिस्थाने चैकसङ्ख्या शेषा भवति तदाग्रे ये भुक्तांशा भवेयुस्ते द्विगुणिताः कार्याः। यदि च नवसंख्या राशिस्थानेऽवशिष्टाः स्यात्तदा भोग्यांशा द्विगुणिताः कार्याः। अथ च यदि राशिस्थाने द्विसङ्ख्या भवेत्तदा भुक्तांशानामर्धं विधाय षष्टि-सङ्ख्याया न्यूनीकुर्यात्। एवञ्च राशिस्थानेऽष्टसङ्ख्यायामवशिष्टायां भुक्तांशान् त्रिशत्सङ्ख्यायां युञ्जीतेति शनिदृष्टौ विशेषः। शेषं पूर्ववदेवेति भावः।

मङ्गलदृष्टौ विशेषमाह—

मङ्गलश्चेद्द्रष्टा स्यात्तदा तस्य दृश्यान्न्यूनीकृते राशिस्थाने सङ्ख्या त्रि.सप्त वा भवेत्तदा भुक्तांशान् षष्टिसङ्ख्याया न्यूनीकुर्यात्। यदि सङ्ख्या द्वि शिष्टा स्यात्तदा भुक्तांशान् सार्द्धीकृत्य पञ्चदशसंख्याया युञ्जीत। यदि च षट्-सङ्ख्या शिष्टा भवेत्तदा पूर्णं (६०) बलं भवतीति विशेषः। शेषं पूर्ववदेवेति ज्ञेयम्।

गुरुदृष्टौ विशेषमाह—

गुरुश्चेद्द्रष्टा तथा दृश्यान्न्यूनीकृते तस्मिन्यदि त्रिः सप्त वा संख्या शेषा भवेत्तदा युक्तांशानामर्द्धं पञ्चचत्वारिंशत्सङ्ख्यायां युञ्जीत। अथ च चत्वारि अष्ट वा सङ्ख्या शेषा स्यात्तदा भुक्तांशान् षष्टिसङ्ख्याया न्यूनीकुर्यात्। शेषं पूर्ववदिति भावः। इति काशी-संस्करणे विशेषो ज्ञेयः।[1]

मुम्बई-संस्करणे तु[2] शनि-गुरु-मङ्गलानामयं विशेषः—

शनेस्तृतीये दशमे च पूर्णदृष्टौ पञ्चचत्वारिंशत्सङ्ख्यायोगो, गुरोश्च नव-पञ्चमीये दृष्टौ सति त्रिंशत्सङ्ख्यायोगः, भौमस्य चतुर्थाष्टमदृष्टौ सत्यां पञ्च-दशसङ्ख्यायोगश्च पूर्वोक्त-दृष्टिफले कार्यं इति ज्ञेयम्।

उच्चबलमाह —

स्पष्टग्रहे तस्य नीचांशादिकं हीनं कुर्यात्। शेषं यदि षड्राशिन्यूनं स्यात्तदा तस्यैवांशादिकं निर्माय त्रिसङ्ख्यया विभजेत् तच्चोच्चबलं ज्ञेयम्। अथ च शेषं

---

१. बृ० पा० २६। १०-१२ (काशी-सं०)
२. बृ० पा० उ० भा० २। ६, ७ (मुम्बई-सं०)

यदि षड्राश्यधिकं स्यात्तदा तच्च द्वादशराशिशोधितं कृत्वा तस्यांशादिकं त्रिसङ्ख्यया विभक्तं चोच्चबलं भवतीति बोध्यम् ।

उदाहरणम् । अत्र सूर्यस्पष्टः ९।२९।३६।५३ इति अत्र सूर्यनीचांशादिकम् ६।१० न्यूनीकृते ३।१९।३६।५३ इत्यवशिष्टम् । इदं च षड्राशितोऽल्पमतोऽस्यैवां-शादिकं विहितम् १०९।३६।५३ एतस्मिन् त्रिसङ्ख्यया विभक्ते ३६।३२ इदमुच्च-बलं सूर्यस्य स्फुटमिति ज्ञेयम् ।

सप्तवर्गजं बलमाह—

*यदि ग्रहो मूलत्रिकोणस्तदा तस्य ४५ कलात्मकं बलम् । स्वगृहस्थश्चेत्तदा* ३० कलात्मकं बलम् । अधिमित्रस्थस्तदा २० कलात्मकं बलम् । मित्रस्थस्य च १५ कलात्मकं समस्थस्य १० कलात्मकं शत्रुस्थस्य ४ कलात्मकमधिशत्रुस्थस्य २ कलात्मकं बलञ्च क्रमशो बोध्यम् ।

अनेनात्र सूर्यः शनिगृहस्थः शनिश्च सूर्यस्य समोऽतोऽत्रास्य १० कलात्मकं बलमायातम् ।

युग्मायुग्मबलमाह—

सूर्यभौमबुधगुरुशनयश्च पञ्चग्रहाः विषमराशिस्था विषमनवांशीया भवे-युस्तदा पादमेकं पञ्चदश-कलात्मकमिति बलं धारयन्ति । समराशीया समनवां-शीयाश्च स्युस्तदाशून्यबलप्रदा भवन्ति ।

चन्द्रशुक्रयोर्विशेषः । चन्द्रशुक्रौ तु समराशिस्थौ च पादमेकं पञ्चदश-कलात्मकं बलं धारयतः । अन्यथा विषमराशिस्थौ विषमनवांशीयौ च भूत्वा शून्यबलप्रदौ भवत इति बोध्यम् ।

केन्द्रादिबलमाह—

केन्द्रस्थाः (१-४-७-१०) ग्रहाः पूर्णं (६० कलात्मकम्) पणफरस्था (२-५-८-११) अर्द्धं (३० कलात्मकम्) आपोक्लिमस्था (३-६-९-१२) पादमेकं (१५ कलात्मकम्) बलं धारयन्तीति । अत्र गर्गवचनमपि—

**'केन्द्रस्थः पूर्णबलो मध्यबलः पणफरस्थितस्तद्वत् । आपोक्लिमगः प्रोक्तो हीनबलः खेचरो मुनिभिरिति"** ।

द्रेष्काणबलमाह—

पुरुषग्रहाः (सूर्यभौमगुरवः) प्रथमद्रेष्काणे (राशेराद्य-दशांशात्मके) नपुंसकौ ग्रहौ (शनि-बुधौ) द्वितीय-द्रेष्काणे (राशेरेकादशांशादारभ्य विंशत्यंशात्मके, स्त्रीग्रहौ (चन्द्र-शुक्रौ) तृतीय-द्रेष्काणे (राशे-रेकविंशत्यंशादारभ्य त्रिंशांशात्मके) पादमेकं पञ्चदशकलात्मकं बलं धारयतः । अन्यथा (भिन्नद्रेष्काणेषु भावः) शून्यबलप्रदा ज्ञेयाः ।

मुम्बई-संस्करणे विशेषः—

**'स्वषड्वर्गगतास्त्रिंशदेवं स्थानबलं विदुः'**

अर्थाद्ये ग्रहाः षड्वर्गविभागेन स्ववर्गगताः स्युस्ते त्रिंशत्कलात्मकमर्द्धबलं धारयन्तीति विशेषेण बोध्यम् ।

दिग्बलमाह—

सूर्यमङ्गलयोः स्पष्टराश्यादिके चतुर्थभावस्पष्टं गुरुबुधयोः स्पष्टराश्यादिके सप्तमभावस्पष्टं शुक्रचन्द्रयोः स्पष्टराश्यादिके दशमभावस्पष्टं शनेः स्पष्टराश्यादिके च लग्नस्पष्टं हीनं कुर्यात् । शेषं यदि षड्राश्यधिकं न स्यात्तस्यांशादिकं निर्माय त्रिभिर्विभजेत् लब्धं दिग्बलं भवति । षड्राश्यधिकश्चेत्तदा द्वादशराशितो विशोध्यांशादिकं निर्माय त्रिभिर्विभक्ते दिग्बलं ज्ञेयमिति भावः ।

कालबलमाह—

अत्र पूर्वं नतोन्नतानुसारं ग्रहाणां बलं निरूप्यते । मध्याह्नादर्धरात्रपर्यन्त-मिष्टकालश्चेत्तदा नतं कार्यम् । अर्धरात्रादारभ्य मध्याह्नान्तमिष्टकालः स्यात्तदा

---

१. सीताराम-झा, जातक-पद्धतिः पृ० २१, मास्टर खेलाड़ीलाल एण्ड संस, बनारस ।

२. बृ० पा० उ० भा० २।१२ (मुम्बई-सं०)

नतस्योन्नतं कार्यम् । सूर्यगुरुशुक्राः दिवा बलशालिनः। शनिचन्द्रभौमाश्च रात्रि-बलशालिनः ।

उन्नतं द्विगुणितं रविगुरुशुक्राणां दिवाबलं भवति तदेव बलं षष्टि-सङ्ख्याया न्यूनीकृतं स्यात्तदा शेषं रात्रिबलं भवति ।

एवञ्च नतं द्विगुणितं शनिचन्द्रभौमाणां रात्रिबलं भवति षष्टिसङ्ख्याया न्यूनीकृतञ्च दिवाबलं ज्ञेयम् ।

बुधस्य विशेषः—

बुधस्तु सदैव रात्रौ दिवा वा पूर्णबली भवति ।

अत्र कल्पितोदाहरणम्—

इष्टं ८।१६ (अर्धरात्रादारभ्यमध्याह्नान्तमिति चोन्नतसंज्ञकम्) अतश्च दिनमानम् २७।४८ दिनार्धम् १३।५४ दिनार्धेष्टयोरन्तरम् ५।३८ अस्योन्नतम् २४।२२ द्विगुणितम् ४८।४४। एतदत्र रविशुक्रगुरूणां दिवाबलम् । अस्य षष्टिसङ्ख्याया न्यूनीकृते ११।१६ शेषं जातमेतदेव चन्द्रभौमशनीनां दिवाबलमिति भावः । अतोऽन्यथा वैपरीत्ये ४८।४४ चन्द्रभौमशनीनां ११।१६ सूर्यशुक्रगुरूणाञ्च रात्रिबलमिति बोध्यम् ।

पक्षबलमाह—

चन्द्रस्य स्पष्टराश्यादिके सूर्यस्य स्पष्टराश्यादिके हीने कृते शेषं यदि षड्राश्यधिकं न स्यात्तदा, तस्यांशादिकं निर्माय त्रिभिर्विभजेत् लब्धं शुभग्रहाणां पक्षबलं भवति । यदि शेषं षड्राश्यधिकं भवेत्तदा तस्य द्वादशराशितो विशुद्धं चांशादिकं निर्माय त्रिभिर्विभज्य च बलं ज्ञेयम् । शुभग्रहाश्चात्र चन्द्रबुधशुक्र-गुरवश्च बोध्याः । शुभग्रहाणां बलस्य षष्टिसङ्ख्याया हीने कृते लब्धमंशादिकं पापग्रहाणां (सूर्यशनिभौमानाम्) पक्षबलं भवतीति ।

दिनरात्रिभागबलमाह—

अत्र दिनस्य रात्रेश्च भागत्रयं कुर्यात् । दिनस्य प्रथमभागे बुधो द्वितीयभागे सूर्यस्तृतीयभागे शनिश्च पूर्णबलं (६० कलात्मकम्) धारयन्ति । एञ्च रात्रौ प्रथम-

भागे चन्द्रो द्वितीयभागे शुक्रस्तृतीयभागे भौमः पूर्णं बलं (६० कलात्मकम्) धारयन्ति ।

अत्र गुरोर्विशेषः । गुरुश्च सदैव पूर्णबलं (६० कलात्मकं) विधत्ते ।

मुम्बई-संस्करणेऽत्र विशेषः ।

दिनरात्रिविभागे यथा पूर्णबलस्य (६० कलात्मकस्य) विचारो विहित एवमाधानलग्नेऽर्धबलं (३० कलात्मकम्) चित्प्रवेशे (चैतन्यप्रवेशकाले) पादोनबलस्य (४५ कलात्मकस्य) विचारो विधेयः । तथा हि ।

आधाने चित्प्रवेशे तु त्रिंशद्भूतार्णवा बलम् ।
ज्ञार्कमन्देन्दुशुक्रारा: पतयः सर्वदा गुरुः ॥[1]

अत्र गुरुस्तु पूर्ववदाधाने त्रिंशत्कलात्मकं चित्प्रवेशे च पञ्चचत्वारिंशत्कलात्मकं दिवा रात्रौ बलं विधत्ते ।

वर्षमासदिनहोरेशबलमाह—

वर्षपतेः पादमेकं (१५ कलात्मकम्) मासपतेश्चार्द्धम् (३० कलात्मकम्) दिनपतेः पादोनं (४५ कलात्मकं) होरापतेश्च पूर्णं बलं (६० कलात्मकम्) ज्ञेयम् ।

वर्षमासदिनहोरेशा नामानयनप्रकारस्तु सूर्यसिद्धान्तादिग्रन्थेषु ज्ञेयम् । तथा हि काशी-संस्करण-टीकायाम् ।

सावनो द्युगणः सूर्याद् दिनमासाब्दपास्तथा ।
सप्तभिः क्षयितः शेषः सूर्याद्यो वासरेश्वरः ॥
मासदिनसङ्ख्याप्तं द्वित्रिघ्नं रूपसंयुतम् ।
सप्तोद्धृतावशेषौ तु विज्ञेयौ मासवर्षपौ ॥

होरेशस्य ज्ञानमपि मुहूर्त-चिन्तामणौ—

---

१. बृ० पा० उ० भा० २।१९ (मुम्बई-सं०)

वारादेर्घटिका द्विघ्नाः स्वाक्षहृच्छेषवर्जिताः ।
सैकास्तदा नगैः कालहोरेशा दिनपात् क्रमात् ॥'[1]

अयनबलमाह—

अत्रायनबलज्ञानार्थं पूर्वखण्डत्रयं ४५, ३३, १२ इति बोध्यम् । अयनांशयुतस्य ग्रहस्पष्टस्य भुजं कुर्यात् । (यदि राशित्रयाधिकः स्यात्तदा षड्राशितः शोध्यः । एवं यदि षड्राश्यधिकस्तु नवराशितः शोध्यः । नवराश्यधिकश्चेत्तदा द्वादशराशितः शोध्यः ।) अथ च राशि-स्थाने शून्यन्तदा ४५ ध्रुवाङ्केन गुणनीयम् । यदि च राशिस्थाने सङ्ख्यैका तदा ३३ सङ्ख्यया गुणीकृत्य ४५ सङ्ख्या योज्या । यदि भुजराशौ द्विसङ्ख्या विद्यते तदा १२ सङ्ख्यया गुणीकृत्य ३० सङ्ख्यया विभजेत् लब्धांशादिके गतखण्डं योज्यम् । ततश्च लब्धेः राश्यंशादिकं कार्यम् । यदि तच्च तुलादिराशिषट्के स्यात्तदा तत्र राशित्रयं हीनं कार्यम् । अथ मेषादिराशिषट्के स्यात्तदा राशित्रयं युञ्जीत । अत्र च शनिचन्द्रयोरयनबलं वैपरीत्यमर्थाद्यदि मेषादिकषट्के स्यात्तदा राशित्रयं वर्ज्यम् । तुलादिषट्के सञ्योज्यम् ततश्च त्रिभिर्विभजेत् । लब्धमयनांशबलं ज्ञेयम् बुधे विशेषः । द्वादशराशिषु बुधश्च कुत्रापि स्यात्तदा राशित्रयं संयोज्यं न तु हीनं कार्यमिति भावः ।

सूर्यस्य चानीतं बलमत्र द्विगुणीकृतमेवायनबलमिति विशेषेण बोध्यम् । उदाहरणम् । सूर्यः ६।२६।३६।५३ अयनांशः २१।२५।३ अत्र सूर्यः ६।२६।३६।५३ अयनांशे (२१।२५।३) युक्ते १०।२१।१।५६ सायनः सूर्यः सञ्जातः । अस्य भुजः १।८।५८।४ अत्र राश्येकत्वात् प्रथमखण्डः ४५ भवति । अंशादिके (८।५८।४) ४५ संख्यायां युक्ते ५४।५१।५२ अंशादिकं सञ्जातम् । अस्य राश्यादिके कृते १।२४।५१।५२ स्पष्टो भवति । सायनः सूर्योऽत्र तुलादिषट्केऽस्ति । अतश्च राशित्रयात् न्यूनीकृतम् १।५।८।८ लब्धञ्च भवति । अस्य कृतांशादिकस्य (३५।८।८) तृतीयांशे (११।४२।४३) द्विगुणिते २३।२५।२६ सूर्यस्यायनबलं भवति ।

ग्रहयुद्धबलज्ञानमाह—

---

१. बृ० पा० पृ० १५२ टीकायाम् (काशी-सं०) ।

भौमादिपञ्चग्रहाणां मध्ये यदि ग्रहद्वयस्य अंशकलादिकं तुल्यं स्यात्तदा तस्य ग्रहद्वयस्य युद्धं ज्ञेयम् । युध्यतो ग्रहयोः षड्बलैक्यस्यान्तरं कुर्यात् ।

अत्र बलहीनो निर्जितो ग्रहो ज्ञेयः । अधिकबलश्च विजेता । ततश्च निर्जितग्रहस्य बलैक्ये विजेतुर्ग्रहस्य बलैक्यान्तरं न्यूनीकुर्यात् । न्यूनीकृते निर्जितस्य बलं दक्षिणगतं भवति । विजेतुश्च बलमुत्तरगतं ज्ञेयम् ।

उदाहरणम्—

जन्मकाले भौमः ४।२।७।५ गुरुश्च ४।२।७।५ । भौमबलैक्यम् ३।२।१ गुरुबलैक्यं २।५।३ । अनयोरन्तरम् ५६।५८ । एतत्पराभूतस्य न्यूनबलस्य गुरोश्च बलमध्यात् २।५।३ हीनं कृतम् १।८।५ गुरुबलं तदेवान्तरं ०।५६।५८ जितस्य भौमस्य बलैक्ये ३।२।१ योजितं ३।५८।५९ इति जेतुर्भौमस्य बलमिति ज्ञेयम् ।

अथ प्रसङ्गप्राप्तं ग्रहाणां गतिबलमाह—

अत्र ग्रहाणां गतिबलज्ञानार्थं पूर्वं गतिभेदानाह । अष्टौ भेदा ग्रहगतेश्च । तासां गतीनामिमानि नामानि । (१) वक्रा, (२) अनुवक्रा, (३) विकला, (४) समा, (५) मन्दा, (६) मन्दतरा, (७) शीघ्रा, (८) शीघ्रतरा ।

क्रमेणैतासामिदं बलं ज्ञेयम्—

वक्रग्रहस्य ६०, अनुवक्रस्य ३०, विकलस्य १५, समस्य ३०, मन्दस्य १५, मन्दतरस्य ७।३०, शीघ्रस्य ४५, अतिशीघ्रस्य च ३० इति ।

चेष्टाबलमाह—

चेष्टाबलानयनार्थं पूर्वं मध्यमग्रहस्य स्पष्टग्रहस्य (अस्य मध्यमस्पष्टत्वं ग्रहस्य ग्रहलाघवादिकरणग्रन्थेषु ज्ञेयम्) चोभयोरन्तरं कुर्यात् । तस्यान्तरस्याप्यर्धं कुर्वीत । अत्र यदि मध्यमग्रहः स्पष्टग्रहादधिकस्तदा तदन्तर मध्यमग्रहे युञ्जीत । अथ च स्पष्टग्रहान्मध्यमग्रहो न्यूनस्तदा पूर्वोक्तान्तरार्द्धं मध्यमग्रहात् हीनं कृत्वा पुनस्तच्छीघ्रोच्चफलात् हीनं कुर्वीत लब्धं चेष्टाकेन्द्रबलम् । चेष्टाकेन्द्रबलस्यांशादिकं निर्माय त्रिभिर्विभजेत् । लब्ध चेष्टाबल भवति । (अत्र शीघ्रोच्च-फल-विचारोऽपि सूर्यसिद्धान्तादिकरणग्रन्थेष्वेव ज्ञेयम्) ।

सूर्यचन्द्र योरत्र विशेषः—

लब्धे सूर्यचन्द्रयोश्चेष्टाकेन्द्रबले त्रिसङ्ख्याविभागस्थाने त्रिराशिमेलनंकार्यम्।

काशीसंस्करणेऽत्र भेदः । अत्र मध्यमस्पष्टग्रहयोरन्तरस्यार्धस्थाने मध्य-मस्पष्टग्रहयोगस्यार्द्धमिति निर्दिष्टम् । प्रकारोऽपि भिन्नः । यथा हि ।

मध्यमस्पष्टग्रहयोगस्यार्द्धं कृत्वा स्वस्वशीघ्रोच्चात् हीनं कुर्यात् । तच्च भौमादिपञ्चग्रहाणां चेष्टाकेन्द्रबलम् । यदि तच्च षड्राश्यधिकं स्यात्तदा द्वादश-राशितः संशोध्यांशादिकं निर्माय त्रिभिर्विभजेत् । लब्धं चेष्टाबलं भवति । यदि षड्राश्यधिकं न स्यात्तदा तस्यैव चेष्टा-केन्द्रबलस्यांशादिकं निर्माय त्रिभिर्विभजेत् । लब्धं चेष्टाबलमिति भावः ।[1]

ग्रहाणां नैसर्गिकबलमाह—

ग्रहाणां नैसर्गिकबलं सूर्यस्य ६०, चन्द्रस्य ५१, भौमस्य १७, बुधस्य २३, गुरोः ३४, शुक्रस्य ४३, शनेश्च ६ इति ज्ञेयम् ।

काशी-संस्करणे भिन्नः प्रकारः । ६० सङ्ख्यां ७ सङ्ख्यया विभजेत् । लब्धम् ८।३४।१७ इति सूर्यस्य बलम् । एतच्च द्विगुणितं चन्द्रस्य, त्रिगुणितं भौमस्य, चतु-र्गुणितं बुधस्य, पञ्चगुणितं गुरोः, षड्गुणितं शुक्रस्य, सप्तगुणितं च शनेर्नैसर्गिकं बलं बोध्यम् ।[2]

षड्बलानयनप्रकारमाह—

अत्र पूर्वोक्तपञ्चविधबलैक्यं कुर्यात् । पुनश्च पापग्रहदृष्टियोगस्य शुभग्रह-दृष्टियोगस्य चोभयोरन्तरं कार्यम् । पापग्रहदृष्टियोगाधिक्ये तस्यान्तरस्य चतुर्थांशं बलैक्ये न्यूनीकुर्यात् । शुभग्रहदृष्टियोगाधिक्ये चान्तरस्य चतुर्थांशं बलैक्ये युञ्जीत । तदेव षड्बलं भवतीति ज्ञेयम् ।

काशी-संस्करणेऽस्य प्रकारान्तरं नामान्तरं च विद्यते । अस्य नाम तु दृग्बल-

---

१. बृ० पा० पृ० १५५ टीकायाम् (काशी-सं०)

२. बृ० पा० पृ० १५२ टीकायाम् (काशी-सं०)

मिति। प्रकारश्चायम्। शुभग्रहदृष्टियोगस्य चतुर्थांशो बलैक्ये संयोज्यः। पापग्रहदृष्टियोगस्य चतुर्थांशो बलैक्यात् न्यूनीकर्तव्य इति।[1]

अथ भावबलानयनमाह—

यस्य भावस्य बलमानेयं स्यात्तस्य स्वामिनः पूर्वोक्तं बलैक्यं गृह्णीत। तत्र शुभग्रहदृष्टेः पापग्रहदृष्टेश्चान्तरं कर्तव्यम्। शुभग्रहदृष्टिबलाधिक्ये चान्तरस्य चतुर्थांशं युञ्जीत। पापग्रहदृष्टिबलाधिक्ये अन्तरस्य चतुर्थांशो हीनः कार्यः। लब्धं भावबलं ज्ञेयम्।

अत्र विशेषमाह—

*यस्मिन् भावे गुरुर्बुधो वा स्यात्तत्र पूर्वोक्तानीतभावबलमध्ये एकं योजयेत्।* शनिना भौमेन वा युतस्य भावस्य पूर्वोक्तभावबलमेकेन हीनं कार्यम्।

भावविशेषे कालबलमाह—

दिवसे जन्म चेत्तदा शीर्षोदयाः मिथुनतुलासिंहकन्यावृश्चिककुम्भाख्या राशयो बलिनो भवन्ति। अन्ये निर्बला इति। रात्रौ चेज्जन्म तदा पृष्ठोदयाः मेषवृषकर्कमकरधनूंषि बलिनोऽन्ये च निर्बला इति। सायं प्रातः सन्ध्याद्वयकाले जन्म चेत्तदोभयोदयी मीनराशिर्बलवान् भवति। शेषा निर्बला इति भावः।

भावानां दिग्बलम्—

मिथुनतुलाकन्याधनुःपूर्वार्द्धकुम्भराशीनां लग्नानि यदि स्युस्तदा तत्र सप्तमभावस्पष्टो हीनः कार्यः। शेषस्य षड्राश्यधिके सति द्वादशराशितः संशोधनं कुर्यात्। तस्य चांशादिकं निर्माय त्रिभिर्विभजेत्। लब्धं दिग्बलं ज्ञेयम्। षड्राश्यधिकं न चेत्तदा तस्य द्वादशराशितः संशोधनस्याभाव इति। एवमेव मकरस्य पूर्वार्द्धं धनुषश्चोत्तरार्द्धं स्यात्तथा मेषसिंहवृषभा राशयो भवेयुस्तदा तत्र चतुर्थभावस्पष्टो हीनः कार्यः। वृश्चिककर्कौ चेत्तदा लग्नस्पष्टो हीनः कार्यः। मकरस्यो-

---

[1] बृ० पा०, २७।१६ (काशी-सं)

त्तरार्द्धं मीनराशिश्च स्यात्तदा दशमभावस्पष्टो हीनो विधेयः। शेषा क्रिया पूर्वव-द्विधेया।

अथ च वलप्रकरणमुपसंहरन् ग्रहाणां षड्वलैक्ये सुबलित्वादिभेदमाह—

सूर्यस्य ३९०, चन्द्रस्य ३६०, भौमस्य ३००, बुधस्य ४२०, गुरोः ३९०, शुक्रस्य ३३०, शनेश्च ३००। षड्बलैक्ये ध्रुवांकाः सुबलित्वे प्रोक्ताः। एभ्योऽङ्केभ्यो यदि ग्रहाणामधिका अङ्का बलैक्ये भवेयुस्तदा ते पूर्णबलिनो भवन्ति। यदि न्यूनाः स्युस्तदा केवलं बलिन एव ज्ञेयाः। सूर्यादिग्रहाणां षड्बलैक्ये सुबलित्वमुक्त्वा षड्बलस्य पृथक् पृथग् रूपेण सुबलित्वमाह।

पूर्वं स्थान-बलम्—

सूर्यस्य १६५, चन्द्रस्य १३३, भौमस्य ९६, बुधस्य १६५, गुरोः १६५, शुक्रस्य १३३, शनेः ९६ इति स्थानबलं ज्ञेयम्।

दिग्बलम्—

सूर्यस्य ३५, चन्द्रस्य ५०, भौमस्य ३०, बुधस्य ३५, गुरोः ३५, शुक्रस्य ५०, शनेश्च ३० इति दिग्बलं प्रोक्तम्।

चेष्टाबलम्—

सूर्यस्य ५०, चन्द्रस्य ३०, भौमस्य ४०, बुधस्य ५०, गुरोः ५०, शुक्रस्य ३०, शनेश्च ४० चेष्टाबलं कथितम्।

कालबलम्—

सूर्यस्य ११२, चन्द्रस्य १००, भौमस्य ६७, बुधस्य ११२, गुरोः ११२, शुक्रस्य १००, शनेश्च ६७ इति कालबलं ज्ञेयम्।

अयनबलम्—

सूर्यस्य ३०, चन्द्रस्य ४०, भौमस्य २०, बुधस्य ३०, गुरोः ३०, शुक्रस्य ४०, शनेश्च २० इत्ययनबलं प्रोक्तम्।

अत्रापि पूर्ववदिति ज्ञेयं यदिमे ग्रहाः स्थानदिग्बलादिषु पूर्वोक्तध्रुवाङ्कानु-

सारं बलाङ्कयुताः सुबलिनो ज्ञेयाः। आधिक्ये पूर्णबलिनः। न्यूनत्वे बलिनो भवन्तीति बोध्यम्।

बलयुक्तेषु बहुषु ग्रहेषु योगकारकत्वयुक्तेषु कस्य बलाधिक्यमिति विचारमाह।

राजयोगादियोगकारकेषु ग्रहेषु यो ग्रहः स्वोच्चमूलत्रिकोणादिस्थस्तस्य बलत्वमुक्तम्। अर्थात् स्वगृहस्थान्मूलत्रिकोणस्थस्तस्मादुच्चस्थ इत्यादिकं निगदितम्। पुनश्चापि षड्वर्गसप्तवर्गदशवर्गषोडशवर्गादिशुद्धो ग्रहो बलवानिति। परं षड्बलैक्ययुतो बलवान् ग्रहः सर्वोपरि बलवान् भवतीति विशेषेण ज्ञेयम्। अर्थात् षड्बलैक्यं बलं ग्रहस्य बलाबलविचारे सर्वोपरि बलमिति भावः। यः षड्बलाधिक्यवान् ग्रहः स एव योगदीनां कारकत्वे विशेष-फलप्रद इति बोध्यम्। अयमेव विचारो ग्रहवद्भावबलेष्वपि ज्ञेयः।

## (ऋ) ग्रहाणामिष्टकष्टबलवर्णनन्तत्फलकथनञ्च।[1]

ग्रहाणां भाव-दशाफलस्य शुभाशुभत्वज्ञानायेष्टकष्टज्ञानप्रकारे रश्मि-साधनमाह।

इष्टकष्टज्ञाने ग्रहाणामुच्चचेष्टाशुभाशुभरश्मिज्ञानमावश्यकमतश्च पूर्वं रश्मि-साधनविधिर्निरूप्यते।

उच्चरश्मिसाधनम्—

ग्रहस्पष्टात् ग्रहस्य नीचांशादिकं हीनं कार्यम्। शेषं यदि षड्राश्यधिकं न भवेत्तदा तस्मिन्नेकसङ्ख्यया युक्तं विधायांशादिकं द्विगुणितं कार्यम्। तदेव ग्रह-स्योच्चरश्मिरिति। यदि शेषं षड्राश्यधिकं भवेत्तदा तद्द्वादशराशितः विशोधयेत्। ततश्च पूर्ववदेक-संख्यया युक्तं कृत्वांशादिकं द्विगुणितं कार्यमिति भावः।

उदाहरणम्। सूर्यः ६।२६।३६।५३। नीचम् ६।१०। हीने कृते ३।१६।३६।-५३ (अत्र षड्राश्यधिकं नास्ति द्वादश-राशि-संशोधनाभावः) एक-सङ्ख्या-योगे ४।१६।३६।५३। अंशादिके द्विगुणिते ४।३३।१३।४६ सूर्यस्योच्चरश्मिस्पष्टः।

---

१. बृ० पा० उ० भा० तृतीयोऽध्यायः (मुम्बई-स०)

चेष्टारश्मिसाधनम्—

षड्बलस्पष्टप्रकरणे भौमादिपञ्चग्रहाणां चेष्टा-केन्द्र-ज्ञान-प्रकार उक्तः। षड्राशितो न्यूने चैकसङ्ख्यायुक्तांऽशादिके द्विगुणिते चेष्टारश्मिस्पष्टो भवति। षड्राश्यधिकं स्यात्तदा द्वादशराशितः संशोध्यैक-संख्यया संयुज्यांशादिके द्विगुणित चेष्टारश्मिर्भवति।

सूर्यचन्द्रयोरत्र विशेषः।

सायने सूर्ये राशित्रयमेलनं कार्यम्। तदेव सूर्यस्य चेष्टाकेन्द्रम्।

सूर्यस्पष्टात् चन्द्रस्पष्टो हीनः कार्यः। तदेव चन्द्रस्य चेष्टाकेन्द्रम्।

अत्र मुम्बई-संस्करणेऽप्ययमेव पाठः। तथा हि।

**इन्दुश्च सत्रिभो भानुर्वर्जितः।[1]**

परञ्च काशी-संस्करणे।

**"व्यर्केन्दुश्च विधोस्तथा"**

इति पाठः।[2] तस्य हिन्दी-टीकायामर्थोऽयं यच्चन्द्रस्पष्टात् सूर्यस्पष्टो हीनः कार्यः। अत्र मूलं मृग्यम्।

ततश्च सूर्यचन्द्रयोरपि चेष्टाकेन्द्रात्पूर्ववदुच्चरश्मिसाधनं बोध्यम्।

उदाहरणम्—

सूर्यः ६।२६।३६।५३ अयनांशः २१।२५।३ सायनः। १०।२१।१।५६ राशित्रययुते १।२१।१।५६ चेष्टाकेन्द्रं सञ्जातम्।

षड्राश्यधिकाभावः। अतश्च द्वादश-राशिसंशोधनाभावः। राशित्रय-मेलनम् ४।२१।१।५६ अंशादिकस्य द्विगुणिते ४।४२।३।५२ इति चेष्टारश्मिः सञ्जातः।

---

१. बृ० पा० उ० भा० ३।२ (मुम्बई-सं०)

२. बृ० पा० २८।४ (काशी-सं०)

शुभाशुभरश्मिसाधनम्—

पूर्वोक्तचेष्टारश्म्युच्चरश्मियोगः कार्यः। तस्यार्द्धं शुभ-रश्मिः। तस्याष्ट-सङ्ख्यया विभक्ते लब्धिरशुभरश्मिर्भवति।

उदाहरणम्—

सूर्यस्योच्चरश्मिः ४।३६।१३।४६। चेष्टारश्मिः २।४२।३।५२। उभयोर्योगे ७।२१।१७।३८। अस्यार्द्धम् ३।४०।३८।४६ शुभरश्मिः। योगस्याष्टसङ्ख्यया विभक्ते ४।१६ अशुभरश्मिः।

इष्टकष्टसाधनविधिमाह—

उच्चरश्मेः चेष्टारश्मौ चैकं हीनं कृत्वा दशभिर्गुणीकुर्यात्। पुनश्चोभयोर्योगो विधेयः। तस्यार्द्धमेवेष्टबलम्। तस्य ६० सङ्ख्यया संशोधिते शेषं कष्टबलमिति ज्ञेयम्।

उदाहरणम्—

सूर्यस्योच्चरश्मिः ४।३६।१३।४६ सङ्ख्यैकहीने ३।३६।१३।४६ दशभिर्गुणिते ३०।३६०।१३०।४६० सूर्यस्य चेष्टारश्मिः। २।४२।३।५२ संख्यैकहीने १।४२।३।५२ दशभिर्गुणिते १०।४२०।३०।५२०।

उभयोः सवर्णीकृते ३६।३२।१७।४० उच्चरश्मिः १०।००।३८।४० चेष्टारश्मिः। उभयोर्योगे ५३।३२।५६।२० योगस्यार्द्धम् २६।४६।२८।१० इष्टबलम्।

योगस्य ५३।३२।५६।२० षष्टि-सङ्ख्याया हीने कृते ३३।१४ कष्टबलमिति।

उच्चादिस्थानवशाद्ग्रहाणां सप्तवर्गजं शुभाशुभफलम्—

उच्चस्थस्य ग्रहस्य ६०, मूलत्रिकोणस्थस्य ४५, स्वगृहस्थस्य ३०, अधिमित्र-गृहस्थस्य २२, मित्रस्थस्य १५, समराशिस्थस्य ८, शत्रुगृहस्थस्य ४, अधिशत्रु-गृहस्थस्य ० (शून्यम्)। इति च ग्रहाणामिष्टबलम्। तदेव षष्टिसङ्ख्याया हीनं कार्यम्। शेषञ्च कष्टबलं भवति।

पूर्वोक्तबलं शेषे होरादिषड्वर्गेऽपि ज्ञेयम्। इष्टकष्टानयनञ्च पूर्ववदिति भावः। यथाद्यदि सूर्यः होराद्रेष्काणादिकेषूच्चस्थस्तदा तस्य ३०, मूलत्रिकोणस्थ-

स्तदा २२।३० इत्यादि ज्ञेयम् । इत्थं सर्वबलमिष्टकष्टात्मकं पृथक् पृथग् वर्गेषु निष्कास्यम् । ततस्तस्यैकत्र योगः कार्यः ।

उच्चादिनवविधस्य ग्रहस्य फलमाह—

उच्चस्य, मूलत्रिकोणस्थस्य, स्वगृहस्थस्य, मित्रस्थस्य, अधिमित्रस्थस्यैवं पञ्चविधस्य ग्रहस्य बलं शुभम् । समगृहस्थस्य, समं बलम् । नीचस्य, शत्रुस्थस्य, अधिशत्रुस्थस्य च बलमशुभम् ।

दिग्बलाद्यनुसारमिष्टकष्टबलमाह—

दिग्बलमेव दिक्फलं ज्ञेयम् । दिनबलमेव दिनफलं ज्ञेयम् ।

तदेव शुभबलम् (इष्ट-बलम्)

तच्च षष्टिसङ्ख्याया हीनं-कार्यम् । शेषं कष्टबलमिति ।

शुभाधिक्ये ग्रहस्य दशादिषु शुभं फलं वाच्यम् ।
अशुभाधिक्ये वाशुभं फलमिति भावः ।

अत्र सर्वबलैक्ये विशेषमाह—

पूर्वं होराद्रेष्काणादिकानां यद्बलं पृथक् पृथग् आनीतं विद्यते तस्यैक्यं कार्यम् । (इष्ट-कष्टात्मकमिति भावः) पुनश्च तद्बलं षड्बलैक्य-योगबलेन विभजेत् । लब्धिश्च बृहदिष्टबलं बृहत्कष्टबलञ्च भवति । अर्थादिष्टबलैक्यं षड्बलैक्येन विभक्तं स्याल्लब्धिरिष्टबलम् । यदि च कष्टबलैक्यं षड्बलैक्येन विभक्तं स्याल्लब्धिश्च कष्ट-बलम् ।

अत्र दृष्टिवशाद्बले वैशिष्ट्यमाह—

अत्रैवेष्टबलेन दृष्टिस्पष्टं गुणीकुर्यात् । तदा च शुभदृष्टि-स्पष्टो भवति ।

कष्टबलेन गुणितो दृष्टिस्पष्टोऽशुभदृष्टिस्पष्टो भवति । एवमेव शुभबलम-शुभबलमपि ज्ञेयम् । अर्थादिष्टबलेन गुणितं बलं शुभम् । कष्ट-बलेन गुणितं बलमशुभम् ।

ग्रहवद्भावानामपि शुभाशुभफलमाह । यथा ग्रहाणामत्र शुभाशुभफलं निरूपितम्, एवं भावानामपि ज्ञेयम् ।

भावस्य भावेशस्य चोभयोः फलस्य योगः कार्यः । तदेव फलं भवति । यदि भावस्थः शुभग्रहस्तदा तस्य भावस्य फलं शुभफले संयोज्यम् । तदेव वास्तविकं शुभं फलम् । अशुभफले भावस्य फलं हीनं कार्यम् । शेषमेवाशुभफलं भवति ।

यदि भावस्थः पापग्रहस्तदा वैपरीत्यं कार्यम् । अर्थाद्भावस्य फलं शुभाद्धीनं कार्यम् शेषं शुभफलम् । अशुभफले भावफलं संयोज्यम् । तदेवाशुभफलमिति भावः ।

एवमेव दृष्टिबलेऽपि ज्ञेयम् ।

यदि ग्रहश्चोच्चादिराशिस्थस्तस्यापि पूर्ववच्छुभफलं शुभफले संयोज्यम् । अशुभफलं चाशुभफलाद्धीनं कार्यम् । यदि ग्रहश्च नीचादिस्थानस्थस्तदा वैपरीत्यं विधेयम् । अर्थाच्छुभफलाद्धीनं कार्यम् । अशुभशुभफले संयोज्यमिति ।

एवमष्टवर्गफलेऽपि शुभस्थाने फलं संयोज्यम् । अशुभस्थानाच्च हीनं कार्यम् ।

यद्येकस्मिन् भावे राशिद्वयमापतेत्तदा तस्य राशिद्वयस्य राशीशानुसारं फलं वाच्यम् । यस्मिन् राशौ रेखाधिक्यं तस्य भावफले लाभो ज्ञेयः । यदि राशिद्वये एव रेखाधिक्यन्तदा द्वयोरेव राशीशयोः फलयोगस्यार्द्धं फलं वाच्यम् ।

एवं शुभाशुभं ज्ञात्वा होराशास्त्रे शुभाशुभात्मकं फलं वाच्यम् ।

## (लृ) ग्रहाणामुच्चरश्मिसाधनम्, तत्फलञ्च ।[1]

अत्र रश्मिसङ्ख्यया च ग्रहाणां शुभाशुभं फलं भवति । साधन-प्रकारः । रश्मिसाधने ग्रहाणां ध्रुवाङ्काः सूर्यस्य १०, चन्द्रस्य ११, भौमस्य ५, बुधस्य ५, गुरोः ७, शुक्रस्य ८, शनेश्च ५ क्रमाद्ग्रहाणां ध्रुवाङ्का अत्र प्रोक्ताः सन्ति । एते ध्रुवाङ्काः ग्रहाणामुच्चराशिस्थानां सन्ति । नीचस्य ध्रुवाङ्काभावः ।

---

१. बृ० पा० उ० भा० ३।१-३ (मुम्बई-सं०)

ग्रहस्पष्टान्नीचं हीनं कृत्वा शेषे षड्राश्यधिके सति द्वादशराशितो विशोधयेत् (षड्राश्यधिकाभावे संशोधनाभाव इति)। शेषं ग्रहस्य ग्रुवाङ्कसङ्ख्यया गुणयेत्। ततश्च ६ सङ्ख्यया विभजेत्। लब्धमुच्चरश्मिस्पष्टमिति भावः।

उदाहरणम्—

सूर्यस्पष्टम् ६।२६।३६।५३ नीचम् ६।१०।०।० हीने कृते ३।१६।३६।५३ यतश्चेदं षड्राश्यधिकं नास्त्यतोऽत्र द्वादशराशितः संशोधनम्। अत्र ६ सङ्ख्यया विभक्ते ५।३३ लब्धमुच्चरश्मिस्पष्टः सूर्यस्य।

अत्र विशेषसंस्कारमाह—

रश्मिस्पष्टज्ञाने ग्रहस्य द्वादशांशराशिज्ञानं कार्यम्। तदनुसारं च विशेषसंस्कारोऽत्र विधेयः।

अर्थाद्यदि ग्रहस्य द्वादशांशे चोच्चराशिः स्यात्तदा स्पष्टसूर्यरश्मिं ६ सङ्ख्यया गुणीकुर्वीत। स्वे क्षेत्रस्थे ४ सङ्ख्यया, मित्रस्थे २ सङ्ख्यया गुणीकुर्यादिति भावः। द्वादशांशे नीचराश्यादिके वैपरीत्यमर्थाद्यदि नीचस्थोऽथवा शत्रुराशिस्थः स्यात्तदा षोडशांशो हीनः कार्यः।

अत्र च यदिलब्धोच्चरश्मिको ग्रहो नवांशद्रेष्काणहोरात्रिंशांशान्यतमवर्गे मूलत्रिकोणस्थस्तदा चोच्चरश्मिस्पष्टमष्टसङ्ख्यया गुणीकृत्य द्विसङ्ख्यया विभजेत्। लब्धमुच्चरश्मिस्पष्टं विजानीयात् मित्रराशिस्थश्चेत्तदा षड्सङ्ख्यया गुणीकृत्य पञ्चसङ्ख्यया विभजेत्। शत्रुराशिस्थो यदि तदा द्विगुणीकृत्य चतुर्भिर्विभजेत्। अतिशत्रुस्थश्चेत्तदा द्विगुणीकृत्य पञ्चभिर्हरेदिति बोध्यम्।

अत्र नीचराशिस्थस्य विशेषसंस्काराऽभावो ज्ञेयः।

अत्र मतान्तरमाह—

शुक्रं शनिञ्च विना यदि भौमादिग्रहा अस्तङ्गतास्तदा तेषां रश्मिहीनत्वमिति ज्ञेयम्।

एवञ्च यदि रश्मिपतिर्ग्रहो वक्रारम्भस्थस्तदा रश्मिस्पष्टो द्विगुणितः कार्यः। वक्रान्तस्थस्तदा रश्मिस्पष्टमष्टभिर्विभजेत्। वक्रमध्यस्थस्तदा त्रैराशिकगणितेन साधयेत्। रश्मिपतिग्रहो मन्दगतिस्थस्तदा रश्मिस्पष्टस्य दशांशं रश्मिस्पष्टाद्धीनं कुर्यात्। अतिमन्दगतिकश्चेत्तदाऽष्टमांशं हीनं कुर्यात् शीघ्रगतिकश्चेत्तदा षडंशं हीनं कुर्यात्। एवमेव शीघ्रतरगतिकः स्यात्तदा चतुर्थांशं हीनं कुर्यात्।

ग्रहगतेरष्टभेदानाह—

अष्टौ वक्रानुवक्रविकलशीघ्रशीघ्रतरमन्दमन्दतरसमाख्या ग्रहगतेर्भेदा ज्ञेयाः।
काशीसंस्करणे विशेषः।

अस्य पाठस्य काशी-संस्करणे नोल्लेखः। अपि प्रकारान्तरेण वर्णनमुपलभ्यते। तथा हि। ग्रह उच्चराशिस्थश्चेत्तदा रश्मिस्पष्टः त्रिगुणितः कार्यः। मूलत्रिकोणस्थे द्विगुणितः। स्वराशिस्थे त्रिगुणीकृत्य द्विसङ्ख्यया विभजेत्। मित्रस्थश्चेत्तदा षड्सङ्ख्यया गुणीकृत्य पञ्चभिर्विभजेत्। शत्रुस्थश्चेत्तदा रश्मिस्पष्टस्यार्द्धं कार्यम्। अधिशत्रुस्थस्तदा द्विगुणीकृत्य पञ्चभिर्विभजेत्। समस्थश्चेत्तदा रश्मिस्पष्टे संस्काराभावः।[1]

राजयोगदरिद्रयोगादिविशेषरश्मिस्पष्टे विशेषसंस्कारमाह—

अथ च राजयोगकारकस्य दरिद्रयोगकारकस्य ग्रहस्यैकराशिसम्बन्धश्चेत्तदा दरिद्रयोगकरस्य रश्मि-स्पष्टं राजयोगकरस्य ग्रहस्य रश्मि-स्पष्टान्न्यूनीकुर्यात्। शेषो रश्मिस्पष्टो भवति। एवमेव शुभाशुभग्रहयोगेन शत्रुमित्रादिग्रहाणामेकराशिसम्बन्धे सति पूर्वोक्त-प्रकारेण साधनं कुर्यादिति विज्ञेयम्।

अथ चोच्चादीनां पापानां च ग्रहाणां रश्मीनाह—

ये पूर्वोक्तोच्चादिकनवस्थानस्था ग्रहास्तेषां रश्मिस्पष्टः पूर्ववदेव बोध्यः। पापानां च बलतारतम्येन न्यूनातिरिक्तं ज्ञेयम्।

पुनरपि राजयोगकारकेषु ग्रहेषु विशेषसंस्कारमाह—

---

१. बृ० पा० ७१।१-७ (काशी-सं०)

ग्रहाणां पूर्वोक्तरश्मिस्पष्टे राजयोग-कारकाणां ग्रहाणां कृते वैशिष्ट्यमाह। राजयोगकरग्रहाणा ध्रुवाङ्काः सूर्यस्य ५, चन्द्रस्य ८, भौमस्य ६, बुधस्य ६, गुरोः ८ शुक्रस्य ६, शनेः ४ प्रोक्तः। अत्र क्रमादेषां ग्रहाणां राजयोगकरत्वे सति ध्रुवाङ्केन रश्मिस्पष्ट गुणयेत्। पुनश्च चतुर्भिर्गुणितं कुर्वीत। स्पष्टश्च राजयोगकराणां ग्रहाणां रश्मिस्पष्टो भवति।

अथ द्विग्रहादियोगानुसारं भावानुरूपञ्च रश्मिसाधनमाह—

यदि कस्मिश्चिद्भावे ग्रहद्वयं ग्रहत्रयं ग्रहचतुष्टयादिकं वा स्यात्तदा ग्रह-स्पष्ट भावस्पष्टञ्च पृथक् पृथक् संस्थाप्य पूर्वोक्त-ग्रहध्रुवाङ्केन भाव-स्पष्टं गुण-येत्। ६० संख्यया च विभजेत्। ततश्च यदि त्रिंशत्सङ्ख्याधिकं भवेत्तदा त्रिंश-द्धीनं कार्यम्। स च ग्रहाणां रश्मि-स्पष्टो भवतीति भावः।

उदाहरणम्—

सूर्यस्पष्टः १०।४।१४। गुरुस्पष्ट. १०।१५।३६। अनयोर्ग्रहयोरेकत्र स्थितिः कुम्भराशाविति। अतश्च भावस्पष्ट. १०।२।५३। अत्र पूर्वं सूर्यरश्मिज्ञानार्थं तस्य ध्रुवाङ्केन ५ सङ्ख्यया गुणितम्। ५०।२।२६५ षष्टिसङ्ख्यया विभक्तम् ५०।१४।२५ त्रिंशसङ्ख्यया न्यूनीकृतम्-२०।१४।२५ अयमेव सूर्यरश्मिस्पष्टः। एवमत्र गुरुरश्मिस्पष्टोऽपि ज्ञेयः।

इष्टकष्टबलानुसार ग्रहाणा रश्मिस्पष्टमाह—

इष्टकष्टबलानुसार रश्मिस्पष्टज्ञानार्थं पूर्वरश्मिस्पष्टमिष्टबलमानेतुमिष्ट-बलेन कष्टबलमानेतुञ्च कष्ट-बलेन गोमूत्रिकान्यायेन गुणीकुर्यात्। लब्धश्च इष्ट-बलरश्मिस्पष्ट' कष्टबलरश्मिस्पष्टश्च भवति।

उदाहरणम्—

सूर्येष्टबलम् ०।२८।२५ सूर्यरश्मिस्पष्टः ५।४०।२३ गोमूत्रिकान्यानेन गुणि-तम् ००।०।१४०।११२०।६४४।१२५।१०००।५७५।।

षष्टिसङ्ख्यया विभक्ते २।४१।११२। इदमेव सूर्यस्येष्टबल रश्मिस्पष्टश्च।

इत्यमेव सूर्यस्य कष्टबलम् ०।३१।३५ सूर्यरश्मिस्पष्ट. ५।४०।२३ गोमूत्रिका-

मश्वगजगोमनुष्यादिकानां पोष्याणां सङ्ख्या भवति।

अत्र कलियुगमाश्रित्य राजयोगादिषु विशेषमाह—

अत्र ये राजयोगा उक्ताः सन्ति ते कलियुगे शूद्राणां म्लेच्छधर्मिणां यवनादीनाञ्च कृते ज्ञेया न तु ब्राह्मणानां कृते सन्ति। यदीमे योगा विप्राणां जन्मकाले स्युस्तदा न ते राजानो भवन्ति। अपि तु ते सौभाग्ययुक्ताः श्रीमन्तो यज्ञयाग-क्रियापरायणाः (अपरजन्मनि च स्वर्गराज्यभोक्ता इति टीकाकारस्य विशेषः) भवन्ति।

अत्र मूलपाठे क्षत्रियवैश्ययोर्नोल्लेखः। तेनात्र टीकाकारेण विशेषो निर्दिष्टः। यत्कलियुगे क्षत्रियवैश्ययो राज्यसत्तानिर्वाहकलाभावो ध्वनितः।

अतश्च केवलं कलियुगे शूद्रादयो म्लेच्छाश्च राजधर्मपरा इति स्पष्टमेव।

अत्र रश्मिफलस्य विशेषमाह—

पूर्वं ये राजयोगाः नाभसयोगाश्चोक्तास्ते रश्मियोगेनैव फलप्रदा भवन्ति। इत्थं बोध्यं यद्राजयोगादिकेषु रश्मियोगे च सति पूर्वं राजयोगादीनां शुभं फलं वाच्यम्। अन्यथा रश्मियोगाऽभावे न पूर्णं फलमिति भावः।

भाग्यकर्मफलेऽपि रश्मिफलवैशिष्ट्यमाह—

भाग्यभावफलं कर्मभावफलञ्च यत्पूर्वमुक्तं तत्रापि रश्मियोगानुसारमनुपातेन शुभाशुभफलं वाच्यम्।

अथ सप्तबलानुसारं पृथक्-पृथग् बले सति पृथक्-पृथक् फलमाह—

स्थानबलस्याधिक्ये मनुष्यो देशमुख्यो दिग्बलाधिक्ये विजयी चेष्टाबलाधिक्ये प्रभुतायुक्तः कालबलाधिक्ये कार्यकुशलः अयनबलाधिक्ये च सदोत्साही भवति।

एवञ्चोच्चबलाधिक्ये वंशमुख्यो नैसर्गिकबलाधिक्ये स्वजातिधर्मपरश्च जायते इति विशेषः।

अत्र काशी-संस्करणे फलभेदः—

३१ रश्मितः ४० पर्यन्तं १०० सङ्ख्यात आरभ्य १००० सङ्ख्याकानां मनु-

त्रयस्त्रिंशद्रश्मित आरभ्य सन्तति-विचारः—

अत्र मुम्बई-संस्करणे चोत्तरखण्डे चतुर्थाध्याये रश्मिविचारो वर्णितः। इतः पूर्वमेकरश्मित आरभ्य द्वात्रिंशद्रश्मिपर्यन्तं फले सामान्यविचारो विहितः। परञ्च त्रयस्त्रिंशद्रश्मित आरभ्यैकोनपञ्चाशद्रश्मिपर्यन्तं सन्ततिविचारः प्रोच्यते। तथा हि—

त्रयस्त्रिंशद्रश्मियोगे दशपुत्रा उक्ताः। चतुस्त्रिंशद्रश्मिषु द्वादशपुत्रा भवन्ति। पञ्चत्रिंशत्सु पञ्चदश, षट्त्रिंशत्सु सप्तत्रिंशत्सु च षोडश, अष्टत्रिंशत्सु सप्तदश, ३९ रश्मिषु ४० रश्मिषु चाष्टादश ४१ रश्मिषु विंशति ४२ रश्मिषु चैकविंशति, ४३ रश्मिषु चतुर्विंशति ४४ संख्याकासु पञ्चविंशति ४५ रश्मिषु त्रिंशत् ४६ सङ्ख्याकासु द्वात्रिंशत् ४७ रश्मिषु पञ्चाशत् ४८ रश्मिषु षष्टि ४९ संख्याकासु शतसंख्याकाः पुत्रादयो भवन्ति। अत्र पुत्रादिशब्देन सन्तति-सङ्ख्या बोध्या यत्र कन्या-पुत्रयोरुभयोरपि समावेशोऽस्ति। अत्र टीकाकारेण त्रिंशद्रश्मिसङ्ख्यातः पूर्वमेकरश्मित आरभ्य द्वात्रिंशद्रश्मिसङ्ख्यापर्यन्तमनुपातेनैव पुत्रादयो ग्राह्या इति लिखितम्।

सन्ततिविचारमुक्त्वा सामान्यविचारमाह—

द्वात्रिंशद्रश्मितः पञ्चचत्वारिंशद्रश्मि यावत् सङ्ख्यया तदनुपातेनैव आपञ्चाशतसहस्रान्तं सङ्ख्याकानां जनानां पालको राजा वा भवति।

रश्मिसङ्ख्यानुसारं राजयोगमाह—

४१ रश्मिषु चैकदेशस्य, ४२ रश्मिषु जनपदद्वयस्य, ४३ रश्मिषु राज्यत्रयस्य, ४४ रश्मिषु राज्यचतुष्टयस्य, ४५ रश्मिषु जनपदपञ्चकस्य, ४६ रश्मिषु राज्यषट्कस्य, ४७ रश्मिषु जनपदसप्तकस्य च क्रमशोऽधिपतिर्जायते। ४८, ४९ एवं ५० रश्मिषु सार्वभौमो भवति। पञ्चाशद्रश्मित ऊर्ध्वमिन्द्रतुल्यो जायते।

रश्मिफलज्ञाने विशेषसंस्कारेण विशिष्टं फलमाह—

उच्चरश्मिस्पष्टस्य चेष्टारश्मिस्पष्टस्य योगं कृत्वार्धं कुर्यात्। तेनार्द्धेन चोच्चचेष्टरश्मियोगं गोमूत्रिकान्यायेन गुणयेत्। षष्टिसङ्ख्यया च विभजेत्। लब्ध-

मश्वगजगोमनुष्यादिकानां पोष्याणां सङ्ख्या भवति।

अत्र कलियुगमाश्रित्य राजयोगादिषु विशेषमाह—

अत्र ये राजयोगा उक्ताः सन्ति ते कलियुगे शूद्राणां म्लेच्छधर्मिणां यवनादीनाञ्च कृते ज्ञेया न तु ब्राह्मणानां कृते सन्ति। यदीमे योगा विप्राणां जन्मकाले स्युस्तदा न ते राजानो भवन्ति। अपि तु ते सौभाग्ययुक्ताः श्रीमन्तो यज्ञयाग-क्रियापरायणाः (अपरजन्मनि च स्वर्गराज्यभोक्ता इति टीकाकारस्य विशेषः) भवन्ति।

अत्र मूलपाठे क्षत्रियवैश्ययोर्नोल्लेखः। तेनात्र टीकाकारेण विशेषो निर्दिष्टः। यत्कलियुगे क्षत्रियवैश्ययो राज्यसत्तानिर्वाहकलाभावो ध्वनितः।

अतश्च केवलं कलियुगे शूद्रादयो म्लेच्छाश्च राजधर्मपरा इति स्पष्टमेव।

अत्र रश्मिफलस्य विशेषमाह—

पूर्वं ये राजयोगाः नाभसयोगाश्चोक्तास्ते रश्मियोगेनैव फलप्रदा भवन्ति। इत्थं बोध्यं यद्राजयोगादिकेषु रश्मियोगे च सति पूर्वं राजयोगादीनां शुभं फलं वाच्यम्। अन्यथा रश्मियोगाऽभावे न पूर्वं फलमिति भावः।

भाग्यकर्मफलेऽपि रश्मिफलवैशिष्ट्यमाह—

भाग्यभावफलं कर्मभावफलञ्च यत्पूर्वमुक्तं तत्रापि रश्मियोगानुसारमनुपातेन शुभाशुभफलं वाच्यम्।

अथ सप्तबलानुसारं पृथक्-पृथग् बले सति पृथक्-पृथक् फलमाह—

स्थानबलस्याधिक्ये मनुष्यो देशमुख्यो दिग्बलाधिक्ये विजयी चेष्टाबलाधिक्ये प्रभुतायुक्तः कालबलाधिक्ये कार्यकुशलः अयनबलाधिक्ये च सदोत्साही भवति।

एवञ्चोच्चबलाधिक्ये वंशमुख्यो नैसर्गिकबलाधिक्ये स्वजातिधर्मपरश्च जायते इति विशेषः।

अत्र काशी-संस्करणे फलभेदः—

३१ रश्मितः ४० पर्यन्तं १०० सङ्ख्यात आरभ्य १००० सङ्ख्याकानां मनु-

ष्याणा पालक ।४१ सख्यात ५० सख्यापर्यन्त राजा भवति। ५१ सख्यात ऊर्ध्वं चक्रवर्ती भवति।

अत्र विशेष —

५० सख्यात ऊर्ध्वं रश्मिषु क्षत्रियश्चेत्तदा राजा चक्रवर्ती वैश्यश्चेत्तदा राजा। शूद्रश्चेत्तदा धनवान् ब्राह्मणश्च विद्वान् यज्ञपरायणो भवति।

रश्मिज्ञानप्रशसा चात्र प्रकारान्तरेण निर्दिष्टा[1]—

रश्मिज्ञानं विना सम्यक् न फलं ज्ञातुमर्हति।
तस्माद्रश्मीन् प्रसाध्यैव फलं वाच्यं विचक्षणैः॥

मुम्बई-सस्करणे निर्दिष्टस्य शेषफलस्य नोल्लेख —

## (ए) ग्रहाणामवस्थानिरूपणम् तदनुरूपं द्वादशभावफलकथनञ्च[2]—

ज्योतिषशास्त्रे ग्रहाणा विविधप्रकारेणाऽवस्थाना विवरणमुपलभ्यते तत्-न्नामानुसारञ्च ग्रहाणा फलकथनेऽपि विशेषो दृश्यते। अत्र तासा दशाना षण्णवति सख्यका भेदा प्रोक्ता सन्ति। तथा हि—

भास्रादिग्रहाणाञ्च ह्यवस्था विविधापि च।
षण्णवत्यामितावस्था सारभूतं वदाम्यहम्॥[3]

काशीसस्करणे सख्याया नोल्लेख । यथा—

अवस्था विविधाः सन्ति ग्रहाणा द्विज-सत्तम।
सारभूताश्च यास्तासु बालाद्यास्ता वदाम्यहम्॥[4]

---

१ बृ० पा० ७३।१७ २३ (काशी स०)

२ बृ० पा० पू० भा० ३४ तमोऽध्याय सकल (मुम्बई-स०)

३ तत्रैव, ३४।२

४ बृ० पा० ४५।२ (काशी-स०)

तत्रादौ जाग्रदाद्यवस्थामाह—

इयमवस्था त्रिधा जाग्रत्स्वप्नसुषुप्तिभेदेन।

जाग्रदाद्यवस्थानयनप्रकारमाह—

विषम (१,३,५,७,९,११) राशिषु दशांश-पर्यन्तं क्रमशो जाग्रत्स्वप्नसुषुप्त्यवस्था ज्ञेयाः। अर्थात् प्रत्येकराशेर्दशांशभेदेन भेदत्रयमतश्चैकराशाववस्थात्रयमुपलभ्यते। समराशिषु च (२,४,६,८,१०,१२) वैपरीत्यमर्थात्प्रथमदशांशात्मके भागे सुषुप्तिर्द्वितीये दशांशात्मके स्वप्ना तृतीये च भागे जाग्रदिति ज्ञेयम्। ज्योतिस्तत्त्वेऽस्यैवानुकरणम्।[1] अन्यत्रापि दृश्यते।

परं च काशी-संस्करणे तु भिन्नं स्वरूपम्। तत्र स्वोच्चस्थो ग्रहो जाग्रत् मित्रस्थः समस्थो वा ग्रहः स्वप्नस्थस्तथा शत्रुराशिस्थो नीचो वा सुषुप्तिङ्गत इति प्रतिपादितम्। अस्य स्वरूपस्यान्यत्र चोल्लेखाभावाद्युक्तियुक्तत्वं न प्रतीयते।

फलमाह—

जाग्रत्स्थो ग्रहः पूर्णफलदायकः स्वप्नस्थश्च मध्यमफलप्रदः सुषुप्तिङ्गतश्च निष्फल इति बोध्यम्।

दीप्ताद्यवस्थामाह—

इयमवस्था नवधा प्रोक्ता।

लक्षणं भेदांश्चाह।

दीप्तस्वस्थप्रमुदितशान्तदीनदुःखितविकलखलकोपीति नवभेदा ग्रहस्य।

उच्चस्थो दीप्तः, स्वगृहस्थः स्वस्थः, अधिमित्रस्थो मुदितः, मित्रस्थः शान्तः, समगृहस्थो दीनः, शत्रुस्थो दुःखितः, पापस्थो विकलः, खलग्रहराशिस्थः खलः, अस्तङ्गतः कोपी। इति लक्षणानि ज्ञेयानि।

फलमाह—

---

१. चक्रधर शर्मा, ज्योतिस्तत्त्वम्, ६।५, श्री लक्ष्मीधर विद्यामन्दिर, देवप्रयाग।

राज्योत्साहैश्वर्यधनवाहनस्त्रीपुत्रादिकसुखं राजसम्मानञ्च दीप्तग्रहस्य दशाकाले भवति ।

आरोग्यधनविद्यायशः प्रीतिस्त्रीपुत्रधर्मादिकसुखं स्वस्थस्य फलं कथितम् ।

वस्त्रसुगन्धपुत्रधनैश्वर्यपुराणश्रवणधर्मवाहनाभरणादिकसुखं मुदितस्य फलं प्रोक्तम् ।

सुखधर्मस्त्रीपुत्रवाहनादिकं शास्त्रचिन्तनराजसम्मानञ्च शान्तस्य फलं ज्ञेयम् ।

स्थानभ्रंशबन्धुविरोधकुत्सितवृत्तिजीवनबन्धुजनपरित्यागरोगपीडादिकञ्च दीनस्य फलं निगदितम् ।

विविधकष्टविदेशभ्रमणबन्धुवियोगचौराग्निराजभयादिकञ्च दुःखितस्य फलं कथितम् ।

वैकल्यमनोविकारमित्रादिकमरणस्त्रीपुत्रवाहनादिकपीडाचौरभयञ्च विकलस्य फलं प्रोक्तम् ।

कलहपितृवियोगशत्रुकृतधननाशस्वजनकृतनिन्दादिकञ्च खलस्य परिणामो ज्ञेयः ।

पापकर्म-प्रवृत्तिः, विद्याधनस्त्रीपुत्रबन्धुनाशो नेत्ररोगश्च कोपान्वितस्य ग्रहस्य दशाकाले फलमिति ज्ञेयम् ।

अयं पाठोऽत्र काशी-संस्करणे न मूले प्रदर्शितः। अपि चाचार्याणां मतमन्यत्रेत्युल्लिख्य प्रक्षेपकरूपेणाङ्कितम् । कारणञ्चाज्ञातम् ।[1]

बालाद्यवस्थामाह—

ग्रहाणां बालकुमारयुववृद्धामृताख्याः पञ्चावस्थाभेदाः ।
विषमराशिषु षडंशपर्यन्तं प्रतिराशि बालादिक्रमेण पञ्चावस्था ज्ञेया ।
समराशिषु वैपरीत्यक्रमेण मृताद्यवस्था ज्ञेयाः

---

१. बृ० पा०, पृ० २६४ (काशी-सं०)

अयं भावो विषमराशिषु प्रत्येकं षडंशपर्यन्तं बालकुमारयुववृद्धामृताख्या अवस्थाः प्रोक्ताः ।

समराशिषु तु प्रत्येकं षडंशपर्यन्तमुत्क्रमेण मृतवृद्धयुवकुमारबालाख्या अवस्था बोध्याः ।

फलमाह—

बाल्ये चैकपादफलं कौमारे द्विपादफलं यौवने पूर्णं वार्द्धक्येऽल्पं मृतायाञ्च शून्यं फलमिति भावः ।

प्रवासाद्यवस्थामाह—

प्रवासा, नष्टा, मृता, जया, हास्या, रति, मुंदा, सुप्ता, मुक्ता, ज्वरा, कम्पा, सुस्थितिरिति द्वादश भेदा अवस्थायाः प्रोक्ताः ।

आनयनप्रकारमाह—

अश्विनीनक्षत्रादारम्य गतनक्षत्राणि षष्टिसङ्ख्यया गुणीकुर्यात् वर्तमाननक्षत्र-भुक्तघटिकादिकं युञ्जीत । पुनश्च चतुर्भिगुंणनं कुर्वीत । ततश्च पञ्चचत्वारिंश-त्सङ्ख्यया विभजेत् । लब्धसंख्यैव दशासङ्ख्या द्वादशाधिक्येऽङ्के द्वादशभिर्विभजेत् शेषाङ्कसङ्ख्यया च क्रमशः प्रवासाद्यवस्थां विजानीयादिति भावः । तथा हि—

> षष्टिघ्नं गतभं भुक्तघटीयुक्तं युगाहतम् ।
> शराब्धिहृल्लब्धतोऽर्काच्छेषावस्था द्विजोत्तम ॥'[1]

फलञ्चासां नामानुरूपमेव यथा प्रवासे प्रवासो नष्टेऽर्थनाश इत्यादि बोध्यम् । आसामवस्थानां काशी-संस्करणे नोल्लेखः ।

लज्जिताद्यवस्थामाह—

षड्भेदाश्चात्र ग्रहस्यैतदवस्थानुरूपाः । लज्जितगर्वितक्षुधिततृषितमुदित-क्षोभितभेदेन । पञ्चमभावस्थो राहुणा केतुना वा युतो ग्रहो लज्जितः । उच्चस्थो

---

१. बृ० पा० पू० भा० ३४।२१ (मुम्बई-सं०)

मूलत्रिकोणस्थो वा गर्वितः, शत्रुणा युतो दृष्टो वा शनियुतश्च क्षुधितः, जलराशिस्थः, शत्रुणा दृष्टः, शुभग्रहदृष्टिशून्यश्च तृषितः, मित्रस्थो मित्रेण युतो दृष्टो वा गुरुणा युतश्चापि मुदितः, सूर्येण युतः पापैः शत्रुणा वा दृष्टश्च क्षोभितो ग्रह इति विज्ञेयम् ।

फलमाह—

यस्मिन् भावे क्षुधितः क्षोभितो वा ग्रहस्तिष्ठति तद्भावस्य नाशो विज्ञेयः ।

अत्र ग्रहाणां बलाबलविचारानुसारमेव फलं वाच्यम् । मिश्रग्रहेषु मिश्रमेव फलमिति ।

अर्थाद्बलहीने ग्रहे फलमप्यल्पं, बलवति चाधिकं शुभमशुभं वेति ज्ञेयम् ।

यथा हि दशमस्थाने यदि लज्जितः क्षुधितः क्षोभितस्तृषितो वा ग्रहस्तिष्ठेत्तदा जातको दुःखितो भवति ।

एवं पञ्चमस्थाने यद्येषु चैकस्तिष्ठेत्तदा पुत्रनाशः । एवं सप्तमस्थे स्त्रीनाश इति बोध्यम् ।

नवगृहारामसुखं राज्यं कलापाण्डित्यं धनलाभो व्यवहारवृद्धिश्चेति गर्वितस्य ग्रहस्य दशायां फलं भवति ।

गृहवस्त्रभूषणस्त्रीबन्धुप्रीत्यादिसुखं राजगृहवासो बुद्धिविद्याप्रकाशः शत्रुनाशश्चेति मुदितग्रहदशाफलम् ।

ईश्वरे श्रद्धा बुद्धिनाशः सन्ततिपीडा कलहे रुचिर्धर्मेऽरुचिर्वृथा भ्रमणञ्चेति लज्जितस्य फलम् । दारिद्र्यकुबुद्धिकष्टधननाशपादपीडादिकं राजकोपेन धनहानिश्चेति क्षोभितस्य ग्रहस्य दशायां पाकः कथितः । शोकमोहशरीरव्यथाशत्रुकलहधननाशपरिजनसन्तापविषादबुद्धिनाशादिकञ्चेति क्षुधितस्य परिणामः । स्त्रीरोगः कुकर्मप्रवृत्तिर्निजजनपरिवादाद्धननाशो मानहानिः कृशत्वं दुष्टकृतपरितापश्चेति तृषितग्रहदशायां परिपाको भवति ।

अथ शयनाद्यवस्थामाह—

शयनमुपवेशनं नेत्रपाणिः प्रकाशनं गमनमगमनं सभावास आगमं भोजनं नृत्यलिप्सा कौतुकं निद्रा चेति द्वादशावस्थानुसारेण ग्रहचेष्टानामानि बोध्यानि ।

आनयनप्रकारमाह—

यस्मिन् नक्षत्रे ग्रहस्तिष्ठेत्तन्नक्षत्रसङ्ख्यया ग्रहसङ्ख्यया (सूर्यादिक्रमेण

सूर्यस्य १ चन्द्रस्य २ भौमस्य ३ इत्यादिना ) गुणीकुर्यात् । तां गुणीभूतां सङ्ख्यां ग्रहनवांशसङ्ख्यया (यथा यदि सूर्यः मेषराशौ मिथुननवांशस्थस्तदा मिथुनस्याङ्क-सङ्ख्या ३ इति भावः) भूयो गुणीकुर्यात् । ततश्च तत्र जन्मकालिकनक्षत्रसङ्ख्या-मिष्टकालिकघटिकासङ्ख्यां जन्मलग्नराशिसङ्ख्याञ्च युञ्जीत । तां युक्तां सङ्ख्यां द्वादशभिर्विभजेत् शेषसङ्ख्यया शयनाद्यवस्थाक्रमेणावस्थां विजानीयात् ।
कल्पितोदहारणम्—

सूर्यः मृगशिरोनक्षत्रस्थः । अत्र नक्षत्रसङ्ख्या ५ सूर्यसङ्ख्या १ गुणने ५ मिथुनराशेर्द्वितीयांशके सूर्योऽतः संख्यया २ गुणने १० इष्टघटिका ६ जन्मनक्षत्र कृत्तिकासङ्ख्या ३ कर्कलग्नसङ्ख्या ४ एषां योगे संख्या २३ द्वादशभिर्विभक्ता शेषं ११ शयनादिगणनया कौतुकावस्थायां सूर्य इति भावः ।

पुनश्चास्या अवस्थाया दृष्टिचेष्टाविचेष्टाप्रकारत्रयेण फलकथने विशेषमाह ।
आनयनप्रकारः—

शेषसङ्ख्यां (यथात्र ११ इति) शेषसङ्ख्ययैव गुणीकृत्य पुनश्च जातकनाम स्वराङ्क-सङ्ख्यां युञ्जीत । ततश्च सूर्यादिग्रहाणां क्षेपकसङ्ख्ययायुतं कृत्वा त्रिभि-र्विभजेत् । शेषसङ्ख्या यदि चैका तदा दृष्टिसंज्ञा द्विसङ्ख्या चेत्तदा चेष्टासंज्ञा त्रिसङ्ख्या स्यात्तदा विचेष्टासंज्ञा बोध्या ।
स्वराङ्कसङ्ख्यानयन-प्रकारस्तथा सूर्यादिग्रहक्षेपकज्ञानप्रकारश्च निम्नाङ्कितचक्र-द्वयेन बोध्यः ।

स्वराङ्क-चक्रम्

| १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|
| अ | इ | उ | ए | ओ |
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | व |
| भ | म | य | र | ल |
| व | श | ष | स | ह |

सूर्यादिक्षेपकाङ्कचक्रम्

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | रा० | के० |
|---|---|---|---|---|---|---|---|---|
| ५ | २ | २ | ३ | ५ | ३ | ३ | ४ | ४ |

कल्पितोदाहरणम्—

अत्र शेषसङ्ख्या ११ शेषसङ्ख्ययैव गुणीकृते १२१ पुनश्च नामाद्यक्षरं शङ्कर इति नाम्नः शकारस्य स्वराङ्कचक्रानुसारं २ सङ्ख्यायोग १२३ अत्र द्वादश-सङ्ख्यया विभक्ते शेषं २ तेन सूर्यस्य कौतुकावस्थायां चेष्टासंज्ञा लब्धा।

फलप्रकारमाह—

दृष्टिसंज्ञायां स्वल्पफलं चेष्टायां महत्फलं विचेष्टायाञ्च फलाभाव इति बोध्यम्। अत्रोदाहरणे चेष्टासंज्ञा तेन महत्फलं स्वत एवेति।

प्रतिग्रहं द्वादशावस्थानुरूपं फलमाह।

तत्रादौ सूर्यस्य फलम्। सूर्ये—

शयनस्थे— मन्दाग्नि-रोगः पादस्थौल्य-भगन्दर-हृदयशूल-पित्त-प्रकोपादिरोगाणामुत्पत्तिर्भवति।

उपवेशनस्थे— दरिद्रो भारवाहको विवादी कठोर-चित्तो धननाशकरश्च जातको भवति।

नेत्रपाणिस्थे— विवेकी परोपकारी धनबलसुखयुतोराजप्रियश्च जायते।

प्रकाशनस्थे— धनधान्यरूपयुत उदारचित्तो बहुपुण्यकर्ता सभासु वक्ता भवति।

गमनस्थे— प्रवासी, दुःखितोऽलसो धनबुद्धिहीनः क्रोधी भयातुरश्च जायते।

आगमनस्थे— परस्त्रीरतः परिजनरहितो गमनशीलः, खलो मलिनः कृपणः, कुबुद्धिश्च प्रोक्तः।

सभास्थे— परोपकारी, धनधान्यगुणान्वितो भूमिनववस्त्रगृहयुतो महाबली, मित्रवत्सलः, कृपाकलाधरश्च निगदितः।

आगमस्थे— शत्रुगणक्षोभितः, कृशः, खलश्चञ्चलो धर्मकर्महीनश्च प्रोक्तः।

भोजनस्थे— पीडिततनुः परदारहृतधनो मिथ्यावादी शिरोव्यथायुतः, कदन्नभोजी कुमार्गरतश्च भवति।

नृत्यलिप्सास्थे—विद्वत्पूजितः काव्यविद्याविशारदः, राजपूज्यः, पण्डितश्च भवति।

कौतुकस्थे— सदानन्दयुतो ज्ञानी यज्ञकर्ता राजभवनाश्रितः, शत्रुभीतः सुमुखः काव्यानुशीलकश्च कथितः ।

निद्रास्थे— निद्रितः प्रवासी नष्टदारो नष्टधनश्च निगदितः ।

चन्द्रस्य फलम् । चन्द्रे—

शयनस्थे— मानी कामी धनविनाशकः शीतप्रधानश्च प्रोक्तः ।

उपवेशनस्थे— रोगी, मन्दबुद्धिः, कठोरचित्तः, कुकर्मकृच्चौरश्च विज्ञेयः ।

नेत्रपाणिस्थे— महारोगी, धूर्त्तः, कुकर्मी, बहुजल्पकश्च बोध्यः ।

प्रकाशनस्थे— नृपाद्धनप्राप्तिः, तीर्थगमनं, ख्यातिः, हस्तिगजवाहनादिकसुखं, स्त्रीभूषणैश्वर्यलाभश्च निगदितः ।

गमनस्थे— कृष्णपक्षीये च विशेषेण क्रूरः सदा नेत्ररोगी । शुक्लपक्षीये च विशेषेण भयातुरो भवति ।

आगमनस्थे— मानी पादरोगी प्रच्छन्नपापकृद् दीनोऽसन्तुष्टश्च विज्ञेयः ।

सभास्थे— राजमान्यः सर्वश्रेष्ठोऽतिसुन्दरः कामिनीनां सन्तोषकरः, सर्वप्रियो गुणज्ञश्च जायते ।

आगमस्थे— वक्ता धर्मनिष्ठश्च भवति । कृष्णपक्षीये सति चन्द्रे द्विभार्यो रोगी हठी दुष्टश्च जायते इति विशेषः ।

नृत्यलिप्सास्थे—शुक्लपक्षीये सङ्गीतज्ञो रसज्ञश्च कथितः कृष्णपक्षीये तु पापीयान् भवति ।

भोजनस्थे— शुक्लपक्षीये मानयानजनतावनितापुत्रैश्वर्यादिकसुखयुतो भवति ।

कौतुकस्थे— राजा वा धनयुतः कामकला-प्रवीणो वेश्यारतिरमणकुशलश्च प्रोक्तः ।

निद्रास्थे— गुरुयुते चन्द्रे प्रतिष्ठावान् भवति गुरुयुतिरहिते क्षीणे च चन्द्रे सञ्चितधनस्य भार्यायाश्च नाशः, शृगालरुदनयुतं गृहञ्च तस्य भवति ।

भौमस्य फलम् । भौमे—

शयनस्थे— व्रणकण्डुदद्रु प्रभृतिकरोगयुतो भवति ।

उपवेशनस्थे— वली, पापी, मिथ्यावादी, निष्ठुरो, धनी, धर्महीनश्च प्रोक्तः ।

नेत्रपाणिस्थे— लग्नस्थे च विशेषतो दरिद्रो भवति लग्नादन्यत्र नेत्रपाणिस्थे ग्रामाधिपो जायते ।

प्रकाशस्थे— राजसम्मानं गुणानां विकासश्च दृश्यते । प्रकाशस्थे पञ्चम भावगते राहुयुते सति च स्त्रीपुत्रवियोगो दारुणनिपातश्च भवतीति विशेषः ।

गमनस्थे— भ्रमणं व्रणकण्डुदद्रु रोगयुतिर्धननाशः स्त्रीकलहश्च प्रोक्तः ।

आगमनस्थे— गुणी रत्नयुतस्तीव्रखड्गी गजतुल्यगतियुतः शत्रुहन्ता स्वजनदुःखहर्ता च जातको निगदितः ।

सभास्थे— उच्चराशिस्थे भौमे युद्धकलानिपुणो धर्मध्वजो भवति । त्रिकोणस्थे च विशेषेण विद्याहीनो भवति । द्वादशस्थे स्त्रीपुत्ररहितः कथितः । अन्यभावेषु च भौमे सभास्थे धनी मानी दानी च दृश्यते ।

आगमस्थे— धर्मकर्महीनः कर्णमूलगुरुशूलरोगयुतः कातरः कुसङ्गरतश्च विज्ञेयः ।

भोजनस्थे वलयुते—मिष्टान्नभोजी निर्बलो नीचश्च जातको दृश्यते ।

नृत्यलिप्सास्थे—नृपाद् वहुधनप्राप्तिः सर्वविधसुखं रत्नागमश्च विज्ञेयः ।

कौतुकस्थे— जातकः कौतुकी मित्रपुत्रैश्वर्ययुतो भवति । उच्चस्थे भौमे तु विशेषप्राज्ञा गुणिजनवन्दितश्च भवति ।

निद्रास्थे— क्रोधी निर्धनो दुर्बुद्धिर्धूर्तो रोगी धर्महीनश्च ज्ञेयः ।

बुधफलमाह—

शयनस्थे— बुधे लग्ने च विशेषेण रक्तनेत्रः क्षुधातुरः खञ्जश्च प्रोक्तः । लग्नादन्यभावेषु च बुधे लम्पटो धूर्तश्च दृश्यते ।

उपवेशनस्थे— लग्ने च विशेषेण गुणी भवति पापदृष्टे युते वा बुधे दरिद्रो ज्ञेयः। शुभयुते दृष्टे वा धनी कथितः।

नेत्रपाणिस्थे— विद्याविवेकहीनो मानी हितसन्तोपरहितश्च निगदितः। पञ्चमभावस्थे नेत्रपाणिङ्गते सति तु स्त्रीपुत्रवियुक्तो नृपाद्धनप्राप्तियुतः कन्याप्रजश्च ज्ञेयः।

प्रकाशस्थे— दानी दयालुः पुण्यात्मा विविधविद्यानिपुणो विवेकी दुष्ट-हन्ता च प्रोक्तः।

गमनस्थे— राजभवनगमनागमनरतो लक्ष्ययुतश्च भवति।

आगमनस्थे— पूर्वोक्तगमनस्थवत्फलं ज्ञेयम्।

सभास्थे— उच्चराशिस्थे तु विशेषेण धनी मानी राजा वा राजमन्त्री पुण्यात्मा प्रभुभक्तो मुक्तश्च भवति।

आगमस्थे— नीचसेवया धनं प्राप्नोति पुत्रद्वयन्तथा चैका प्रतिष्ठा-दायिनी कन्या चास्य भवति।

भोजनस्थे— वादविवादेन धनहानिस्तथा राजभयं शरीरे दौर्बल्यं मनसि चाञ्चल्यं धनस्त्रीसुखनाशश्च भवति।

नृत्यलिप्सास्थे— मानी, प्रतापी पण्डितो रत्नपुत्रमित्रैश्वर्यवाहनादिकसुख-युतो भवति। पापराशिस्थो बुधश्चेत्तदा वेश्यारतो लम्पटश्च प्रोक्तः।

कौतुकस्थे— लग्नगे चापि सङ्गीतज्ञो भवति। सप्तमेऽष्टमे वा स्थिते वेश्यारतो नवमे च पुण्यवृद्धियुतो निगदितः।

निद्रास्थे— सदाधिव्याधियुक्तो निद्रासुखहीनोऽतिसन्तापयुतो निज-जनैर्विवादरतो धनमानरहितश्च भवति।

गुरुफलमाह। गुरौ—

शयनस्थे— बलशाली दीर्घहनुः मनुभययुतोऽतिगौरशरीरो हीनरवश्च प्रोक्तः।

उपवेशनस्थे— वक्ताऽतिगर्वी राजशत्रुजनतप्तः पादजङ्घामुखादिकेषु व्रणयुतश्च जायते।

नेत्रपाणिस्थे— रोगी गीतनृत्यप्रियः कामी गौरवर्णोऽन्यजनप्रीतियुक्तो धनहीनश्च भवति।

प्रकाशस्थे— गुणानामानन्दयुतः सुखी तेजस्वी वृन्दावनगामी च भवति। उच्चस्थे गुरौ तु लोकमान्यो कुबेरसदृशधनयुतश्च प्रोक्तः।

गमनस्थे— साहसी मित्रवर्गयुतः पण्डितो वेदज्ञो विविधैश्वर्ययुतश्च कथितः।

आगमनस्थे— सदा परिजनयुतः सुन्दरभार्यालक्ष्मीसंयुतश्च निगदितः।

सभास्थे— मुक्तामाणिक्यगजाश्वरथवाहनादिकैश्वर्ययुतो विविधविद्याप्रवीणश्च प्रोक्त.।

आगमस्थे— विविधवाहनसुखयतस्त्रीपुत्रभृत्यमित्रादिसुखसम्पन्नो राजतुल्यः सुबुद्धिः श्रेष्ठविद्यागर्वितः काव्यरतः सुमार्गी सर्वत्र मानयुतश्च निगदितः।

भोजनस्थे— सदा गजाश्ववाहनसुभोजनैश्वर्ययुतो विज्ञेयः।

नृत्यलिप्सास्थे— राजमान्यो धनी धर्मात्मा तन्त्रज्ञः पण्डितपूज्य. शब्दशास्त्रज्ञश्च कथितः।

कौतुकस्थे— कुतूहली, महाधनी, सुखी, कुलप्रतापी, कृपालुर्भूमिपुत्रनीतियुतो महाबली राजपण्डितश्च भवति।

निद्रास्थे— मूर्खो दरिद्रः पुण्यहीनश्च प्रोक्त।

शुक्रफलमाह शुक्रे—

शयनस्थे— वली, दन्तरोगी, क्रोधी, धनहीनो वेश्यारतश्च भवति।

उपवेशनस्थे— सुवर्णरत्नधनैश्वर्यराजसम्मानादिकसुखयुतो शत्रुहन्ता च जायते।

नेत्रपाणिस्थे— लग्ने सप्तमे दशमे च विशेषेण धनहानिस्तथा स्थानान्तरे चोत्तमगृहयुतो भवति ।

प्रकाशस्थे— सर्वोच्चमित्रगृहादिस्थे च मदोन्मत्तगजबलशाली राजतुल्यो धनी सुखी काव्यसङ्गीतज्ञश्च प्रोक्तः ।

गमनस्थे— मातृनाशः मानसी व्यथा बन्धुवियोगः शत्रुभयञ्च भवति ।

आगमनस्थे— महाधनी, सत्तीर्थयात्री नित्योत्साही हस्तपादरोगयुतो भवति ।

सभास्थे— प्रतापी, राजमान्यो गुणी, महाधनी, शत्रुहन्ता, दाता, गजाश्ववाहनयुतश्च कथितः ।

आगमस्थे— धनस्त्रीपुत्रजनादिकसुखरहितः शत्रुभीतो रोगी च भवति ।

भोजनस्थे— क्षुधातुरो रोगी शत्रुपीडितश्च भवति । अत्र कन्याराशिस्थे तु विशेषेण महाधनी पण्डितश्च प्रोक्तः ।

नृत्यलिप्सास्थे— कविर्बुद्धिमान् वीणामृदङ्गादिकवाद्यवादनरतो धनवृद्धिकरश्च ज्ञेयः ।

कौतुकस्थे— इन्द्रतुल्यबलशाली सभाचतुरः सदालक्ष्मीयुतश्च भवति ।

निद्रास्थे— परसेवारतः परनिन्दाशीलो वीरो वाचालः सदा भूमिभ्रमणरतश्च प्रोक्तः ।

शनिफलम् । शनौ—

शयनस्थे— क्षुत्पिपासातुरः प्रथमे वयसि रोगी परतश्च महाभाग्ययुतो भवति ।

उपवेशनस्थे— शत्रुपीडितो दद्रुरोगयुतोऽभिमानी राजदण्डितोऽप्यव्ययी च प्रोक्तः ।

नेत्रपाणिस्थे— सुन्दरस्त्रीयुतो मित्रोपकृतो बहुकलाज्ञः प्रियवक्ता च कथितः ।

प्रकाशनस्थे— विविधगुणधनबुद्धियुतस्तेजस्वी दयालुः प्रभुभक्तश्च जायते ।

गमनस्थे— महाधनी पुत्रवान् राजपण्डितो व्ययी शत्रुभूमिहारी च भवति ।

आगमस्थे— पदरोगभययुतः (अत्र काशी-संस्करणे गदशब्दस्थाने गर्दभपाठः । स च नोचितो, गदशब्दस्य रोग इत्यर्थात् । गर्दभस्य च पदशब्देन सहार्थाभावादिति)[1] स्त्रीपुत्रसुखहीनो दीनो निराश्रितो भ्रमणशीलश्च कथितः ।

सभास्थे— सुवर्णधनरत्नयुतो नीतिशीलस्तेजस्वी पूर्णसुखी च निगदितः ।

आगमस्थे— विविधरोगाक्रान्तो मन्दगतिको नृपधनयाचनारहितश्च भवति ।

भोजनस्थे— सरसभोजनप्राप्तिः नयनयोर्मन्दज्योतिर्मोहतापितबुद्धिश्च जातकस्य कथिता ।

नृत्यलिप्सास्थे— धर्मात्मा धनी राजमान्यो धीरो योद्धा च भवति ।

कौतुकस्थे— सुन्दरस्त्रीभूमिधनैश्चर्यसुखरतः काव्यकलानिपुणोऽतिसुखी च प्रोक्तः ।

निद्रास्थे— धनगुणपराक्रमयुतः शत्रुहन्ता वेश्यारतश्च कथितः ।

राहुफलम् । राहौ—

शयनस्थे— क्लेशाधिक्यं प्रोक्तम् । अत्र वृषमिथुनकन्यामेषेषु राशिषु च स्थिते तु धनधान्यसम्पन्नो भवति ।

उपवेशनस्थे— मानी राजमान्योऽपि धनहीनो दद्रुरोगयुतश्च प्रोक्तः ।

---

१. बृ० पा० ४५।११६ (काशी-सं०)

नेत्रपाणिस्थे— दुष्टसर्पशत्रुचोरेभ्यो भयं नेत्ररोगो धननाशश्च कथितः।
प्रकाशस्थे— शुभासनस्थितिः सुयशो धनगुणैश्वर्योन्नतिर्नवमेघाकृतिर्नृपाधिकारित्वं विदेशे उन्नतिश्च प्रोक्ता।

गमनस्थे— बहुप्रजः पण्डितो धनी मानी दानी राजपूज्यश्च कथितः।
आगमनस्थे— क्रोधी बुद्धिधनहीनः कामी कृपणः कुटिलश्च जातको भवति।

सभास्थे— पण्डितः कृपणो विविधगुणयुतो धनी च भवति।
आगमस्थे— व्याकुलता, शत्रुभयं, बन्धुविवादो धनजननाशः, शठता कृशता च दृश्यते।

भोजनस्थे— मन्दबुद्धिरलसः, स्त्रीपुत्रसुखहीनः, भोजनदुःखविकलश्च जातको भवति।

नृत्यलिप्सास्थे— महाव्याधियुतो नेत्ररोगी शत्रुभीतो धनधर्महीनश्च भवति।
कौतुकस्थे— परदाररतश्चोरः स्थानभ्रष्टश्च कथितः।
निद्रास्थे— स्त्रीपुत्रगुणैश्वर्यादिकसुखयुतो गर्वितो महाधनी च भवति।

केतुफलमाह। केतौ—

शयनस्थे— मेषवृषमिथुनकन्याराशिषु च स्थिते जातको धनवान् भवति। अन्यराशिषु स्थिते तु रोगाक्रान्तः कथितः।

उपवेशनस्थे— दद्रुकण्डुरोगशत्रुसर्पचौरेभ्यो भयं प्रोक्तम्।
नेत्रपाणिस्थे— नेत्ररोगदुष्टसर्पशत्रूणाञ्च भयं दृश्यते।
प्रकाशनस्थे— धनी, धर्मात्मा, नित्यप्रवासी सात्त्विको राजसेवक उत्साही च प्रोक्तः।

गमनस्थे— बहुपुत्रो महाधनो पण्डितो गुणवान् दाता च भवति।
आगमनस्थे— विविधरोगयुतः पिशुनः परनिन्दको दन्तरोगी धनहानिकरश्च दृश्यते।

सभास्थे— वक्ता गर्वितः कृपणो लम्पटो धूर्तश्च भवति।

आगमस्थे— पापिनामग्रणीर्बन्धुजनविवादी दुष्टः शत्रुरोगपीडितश्च निगदितः।

भोजनस्थे— सदा क्षुधातुरो दरिद्रो रोगी भ्रमणशीलश्च भवति।

नृत्यलिप्सास्थे— व्याधिपीडितो धूर्तोऽनर्थकारी बुद्बुदाक्षो दुराधर्षश्च प्रोक्तः।

कौतुकस्थे— स्थानभ्रष्टः परदाररतश्चौरश्च निगदितः।

निद्रास्थे— धनधान्यगुणैश्वर्ययुतो धीरः स्त्रीपुत्रयुतो गर्वितो महाधनी च भवति।

सर्वभावफलमधिकृत्यावस्थानुसारेण फले विशेषमाह—

अत्रावस्थानुसारेण पृथक् पृथक् भावानुरूपो फलविशेषोऽपि निरूपितः।

शयनावस्थायां यत्र कुत्र भावेपु स्थितो शुभग्रहस्तत्तद्भाववृद्धिं करोति। भोजनावस्थायाञ्च यत्र कुत्रापि स्थितः पापग्रहस्तत्तद्भावहानिं विधत्ते। निद्रावस्थायाञ्च सप्तमस्थः पापग्रहः शुभफलप्रदः, स यदि पापदृष्टो न भवेत्।

पञ्चमस्थो निद्रायां शयने च निश्चयेन शुभफलकरो भवति। परञ्च शयनावस्थायां निद्रावस्थायां वा यदि चाष्टमस्थः पापग्रहस्तदा राजदण्डादिनापमृत्युयोगः। यदि चात्र शुभग्रहस्य योगो दृष्टिर्वा स्यात्तदा गङ्गादितीर्थे मृत्युयोगो ज्ञेयः।

दशमे भावे कौतुकावस्थायां प्रकाशावस्थायां वा चन्द्रे राजयोगो ध्रुवो ज्ञेयः।

एवं बलाबलानुरूपं सर्वत्र फलं वाच्यमिति भावः।

## (ख) अप्रकाशकग्रहनिरूपणम्

### (अ) अप्रकाशकग्रहाणां स्पष्टीकरण-प्रकारः[1]

---

१. बृ० पा० पू० भा० ३।६७-७०, (मुम्बई-सं०)

प्रथमं धूममाह—

जन्मकालीयसूर्यस्पष्टराश्यंशादिके राशिचतुष्टयस्यांशानां त्रयोदशस्यविंशति-कलानां च योगे धूमनामकस्याऽप्रकाशकग्रहस्य स्पष्टोभवति ।

तथा हि कल्पितसूर्यस्पष्टः २।४।२८।१ अत्र ४।१३।२० योगे ६।१७।४८।१ धूमस्पष्टः ।

व्यतिपातस्पष्टप्रकारमाह—

द्वादशराशितो न्यूनो धूम एव व्यतिपातो भवति ।

तथा हि १२।०।०।० धूम ६।१७।४८।१ न्यूनीकृते ५।१२।११।५९ व्यति-पातस्पष्टः । (अस्यैवापरं नाम पात इति ज्ञेयम्)

परिवेषमाह (अस्यैवापरं नाम परिधिरिति)

व्यतिपातस्पष्ठे षड्राशियोगे परिवेषस्फुटत्वं भवति । अत्र हि व्यतिपातः ५।१२।११।५९ तत्र ६।०।०।० षड्राशियोगे ११।१२।११।५९ परिवेषस्पष्टः ।

इन्द्रचापस्फुटप्रकारमाह—

अस्यैवापरं नाम चाप इति कथ्यते । परिवेष-स्फुटस्य द्वादशराशितो न्यूनी-करणे चापस्फुटत्वम् । अत्र हि ११।१२।११।५९ परिवेषः १२।०।०।० द्वादशराशितो न्यूनीकृते ०।१७।४८।१ इन्द्रचापस्पष्टः ।

ध्वजमाह (अस्यैवापरं नाम केतुरिति)

*इन्द्रचापस्पष्टे षोडशांशानां चत्वारिंशत्कलानां च योगे केतु-स्फुटत्वम् ।* अत्र हि ०।१७।४८।१ चापे ०।१६।४०।० अंशकलादियोगे १।४।२८।१ केतु स्पष्टः ।

गुलिकः—

**गुलिकस्य वैशिष्ट्यमत्र बहुप्रकारेणोच्यते ।**
**अस्यैवापरं नाम च मान्दीति ज्ञेयम् ॥**

गुलिकस्य जैमिनीयसूत्रेऽपि सर्वत्र निर्देशः । नायं शुभग्रहः । अस्य योगेनैवा-धानलग्नस्य स्फुटत्वं भवति तच्चाधानलग्नस्वरूपे द्रष्टव्यम् ।

अन्यत्रापि फलकथनप्रकारे गुलिक-योगेन ग्रहाणां शुभाशुभयोगो भवति। यथा जैमिनीये सूत्रे—

'सगुलिके विषदो विषहतो वा'।[1]

राहुगुलिकाभ्यां क्षुद्रविषाणि[2]

अर्थाद्गुलिकयुते कारकांशे विषदाता विषेण वा हतो भवति। एवमाजीविकानिश्चयेऽप्यस्य महत्त्वम्। जन्मकाल इष्टनिश्चयार्थमप्यस्य प्रयोगो भवति।

गुलिकानयन-प्रकारमाह—

दिनमानस्य घटिकादिकमष्टधा विभजेत्।
(यस्मिन् दिने गुलिकज्ञानस्यावश्यकता भवेदिति)
तद्वारेशात् (अर्थात् रविवासरे सूर्यात्सोमवासरे चन्द्रादिति)
दिनस्य सप्तभागाः क्रमशः सूर्यादिग्रहाणामधिपतयो भवन्ति।
अष्टमश्च भागः स्वामि-विहीनः।
यस्य भागस्याधिपतिः शनिः स एव भागो गुलिकसंज्ञको ज्ञेयः।
रात्रौ गुलिकानयनप्रकारः।

रात्रौ रात्रिमानमष्टधा विभज्य वारेशस्य पञ्चभागामारभ्य क्रमात्सूर्यादिग्रहाणां भागा ज्ञेया इति रात्रौ विशेषः।

अत्राप्यष्टमो भागः स्वामि-हीनस्तथा शनि भाग एव गुलिक इति पूर्ववद्बोध्यम्।[3]

अत्रान्यग्रहाणां भागानामपि नामकरणे विशेषमाह—

शनिभागो गुलिक एवमत्र सूर्यभागस्य कालवेला भौमभागस्य मृत्युः, बुध-

---

१. जैमिनीसूत्राज १।२।२६, रमण पब्लिकेशन बंगलोर।

२. तत्रैव १।२।६५।

३. बृ० पा० पू० भा० पृ० ११ (मुम्बई-सं०)

भागस्य चार्द्धप्रहरोऽर्द्धयाम इति वा गुरुभागस्य यमघण्ट इति नामानि ज्ञेयानि। मतोऽत्र न कश्चिदुल्लेखोऽस्तश्चन्द्रशुक्रौ नामहीनौ ज्ञेयौ। कल्पितोदाहरणे द्वात्रिंश-दूघटिकादिकं दिनमानं सूर्यश्च वासरस्तत्राष्टधा विभागे घटिकाचतुष्टयं प्रत्येकस्य भागः। सूर्यादारम्य प्रथमो भागः कालवेला। द्वितीयश्चन्द्रस्य भागस्तस्य नामा-न्तराभावः। तृतीयो भागो भौमस्य तस्य मृत्युर्नाम। चतुर्थस्य बुधभागस्य चार्द्ध-याम इति। पञ्चमस्य गुरुभागस्य यमघण्ट इति। पष्ठस्य च शुक्रभागस्यापि नामान्तराभावः। सप्तमस्य च शनिभागस्य गुलिक इति नाम। अष्टमभागस्य न कोऽपि स्वामीति नामाभावः। इति स्पष्टम्।'[1]

प्राणपदमाह[2]—

घटिकां चतुर्भिर्गुणीकुर्यात्। पलानि च यदि पञ्चदशाधिकानि भवेयुस्तदा पञ्चदशभिर्विभजेत्। लब्धञ्च चतुर्गुणितासु घटिकासु युञ्जीत। ततश्च द्वादश-भिर्विभजेत्। शेषं प्राणपदं स्मृतम्। पञ्चदशसङ्ख्यया विभक्तशेषपलानि द्वाभ्यां गुणीकुर्यात् लब्धं चांशात्मकं भवति।

कल्पितोदाहरणम्—
इष्टं ५३।७।३०

अत्र ५३ घटिका ४ गुणिता २१२ पलानि ७।३० पञ्चदशभ्योऽल्पानि। अतोऽत्र प्राणपदाभावः। २१२ द्वादशभि (१२) विभक्ता शेषं ८ एतदेव प्राणपदम्। ७।३० पलानि द्वाभ्यां (२) गुणितानि १५ एते एवांशा इति बोध्यम्।

प्राणपदज्ञानप्रकारः—

अत्र यदि जन्मलग्ने सूर्यराशिश्चरः स्यात्तदा तस्मिन् सूर्यस्पष्टे एव लब्धं प्राणपदांशादिकं युञ्जीत। यदि स्थिरराशिः स्यात्तदा तन्नवमराशौ युञ्जीत। द्विस्वभावराशौ तु तत्पञ्चमराशौ युञ्जीत। अत्र राशिस्पष्टश्च सूर्यस्यैव केवलं नवपञ्चमराशिसङ्ख्यायोग इति भावः।

---

१. वृ० पा० पू० भा० पृ० ११. (मुम्बई-सं०)
२. तत्रैव, पृ० १२

कल्पितोदाहरणे सूर्य. वृषराशौ २७ अशात्मक. ।

अतो वृषान्नवमराशौ योग ।

प्राणपदम् ८।१५ नवमराशियुत सूर्य ६।२७ योगे १८।१२ द्वादशराश्यधिकत्वे द्वादशभिर्विभक्ते ६।१२ इति प्राणपदम् । तथा हि ।

घटीचतुर्गु णा कार्या तिथ्या (१५) प्तैश्च पलैर्यु ता ।
दिनकरेणापहृतं शेषं प्राणपदं स्मृतम् ।[1]

काशी-सस्करणे चान्यो विधि —

स्वेष्टकालं पलीकृत्य तिथ्याप्तं भादिकं च यत् ।
चरागद्विभसंस्थेऽर्के भानौ युङ्नवमे सुते ॥
स्फुटं प्राणपदाख्यं तल्लग्नं ज्ञेयं द्विजोत्तम ।[2]

अर्थादिष्टकालघटिकादिकस्य पलानि कुर्यात्, पञ्चदशभिर्विभजेत्, लब्ध राश्यादिक द्वादशाधिक्ये द्वादशभिर्विभजेत्, लब्ध पूर्ववत्सूर्यराशौ युञ्जीत, एव प्राणपदलग्नस्पष्ट ।

अत्र पूर्वोक्त कल्पितोदाहरणम्—

इष्ट ५३।७।३० पलीकृतम् ३१८७ पञ्चदशभक्तम् लब्धि। २१२ शेष ७।३० लब्धौ द्वादशाधिक्यात् द्वादशभिर्विभक्ते शेष ८ शेषपलेषु त्रिशद्भिर्गु णितेषु २१० शेषविपलेषु त्रिशद्भिर्गु णितेषु ९०० सवर्णीकृते १० पूर्वयुक्ते २२० पञ्चदशभक्ते लब्धि १५ पूर्ववत् प्राणपद ८।१५ उभयत्र साम्य प्रकारद्वय परिणामश्चैक एव । ज्योतिस्तत्त्वेऽपि विधिरयमेव ।[3]

तथा हि—

---

१. बृ० पा० पू० भा० २।७१ (मुम्बई-स०)

२ बृ० पा० ३।७२-७३ (काशी स)

३ चक्रधरशर्मा 'ज्योतिस्तत्त्वम्' ३।७६, श्रीलक्ष्मीधर विद्यामन्दिर देव प्रयाग ।

**पलीकृताभीष्टघटीदिनैर्हृता गृहादिकः प्राणपदोऽस्फुटोऽर्कयुक् ।**
**चरे स्थिरे द्वन्द्वगृहे गते रवौ क्रमाद्युतो भैः खगजाब्धिसम्मितैः ॥**

ज्योतिषरत्नाकरे सरलप्रकारोऽङ्कितः—[1]

यत्पञ्चदशपलानामेकप्राणपदो भवति । तेनैकस्यां घटिकायां प्राणचतुष्टयम् । तेनेदं स्पष्टं यदि घटिकात्रयादूर्ध्वमिष्टकालघटिकादिकमस्ति तदा त्रिभिर्विभजेत् । शेषं प्राणपदः प्रोक्तः । पूर्वोक्तोदाहरणे ५३।७।३० इष्टघटिकादिकं त्रिभिर्विभक्तं शेषं २।७।३० लब्धिश्च १७ । घटिकाद्वयेऽष्टौ प्राणाः । ७।३० पलेषु सार्द्धप्राणः तेन सार्द्धप्राणपदः पूर्ववज्ज्ञेयः ८।१५ इति सुस्पष्टमिति भावः । सूर्यस्पष्टे शेषा योगक्रिया तु पूर्ववदेव ।

प्राणपदस्य प्रयोजनमाह[2]—

प्राणपदस्य महत्त्वपूर्णं प्रयोजनन्तु इष्टकालशुद्धिज्ञानाय विद्यते । इष्टकाल-शुद्धयर्थं जन्मकालीयचन्द्रस्पष्टस्य गुलिकस्पष्टस्य प्राणपदस्पष्टस्य च सुतरामा-वश्यकता विद्यते । अत्रायं नियमो यदि प्राणपदेऽथवा प्राणपदात्त्रिकोणस्थाने सप्तमस्थाने तन्नवांशान्नवांशस्य सप्तमाद्वा जन्मलग्नं स्यात्तदा मनुष्यस्य जन्म भवति । अन्यथा प्राणपदाद्द्वितीये स्थाने द्वितीयात्त्रिकोणस्थाने वा जन्मलग्नं स्यात्तदा न मनुष्यस्य जन्म भवति । अपि तु पशोर्जन्म ज्ञेयम् । अथ च यदि प्राण-पदात्तृतीयेऽथवा तृतीयात्त्रिकोणस्थानगते जन्मलग्ने जन्म स्यात्तदा विहङ्गादीनां जन्म ज्ञेयम् । एवञ्च यदि प्राणपदाच्चतुर्थेऽथवा चतुर्थात्त्रिकोणे जन्म चेत्तदा कीटसर्पादीनां जन्म बोध्यम् । काशीसंस्करणे तु नायं पाठः । तत्र पाठान्तरम्—

**लग्नाद् द्विकोणं तुर्ये च राज्ये प्राणपदं तदा ॥**

---

१. श्री देवकीनन्दनसिंहः, ज्योतिष रत्नाकरः, पृ० ११६, प्रथम खण्डम्, प्राप्ति-स्थानम् श्री गिरिजाशंकर सिंह, माउर जिला मुंगेर ।

२. बृ० पा० पृ० १२ ((मुम्बई-सं०))

शुभं जन्म विजानीयात्तथैवैकादशेऽपि च।
अन्यस्थाने स्थितं चेत् स्यात् तदा जन्माशुभं भवेत्।[1]

अत्र टीकाकारेण पण्डित सीतारामझामहोदयेन मुम्बई-संस्करणपाठस्य खण्डनं कृतम्। न हि प्राणपदस्य प्रयोजनमिष्टकालशुद्धिज्ञानाय। यतो हि प्राणपदे तत्सप्तमे त्रिकोणे वा मनुष्याणां जन्माऽन्यत्र पशु-पक्षिणां चेत्तदा किमर्थं षष्ठाध्याये द्वादशभावगतस्य प्राणपदस्य पृथक् पृथक् भावानुरूपं फलप्रदर्शनम्। द्वादशभावेषु प्राणपदस्य फलं मनुष्यमधिकृत्यैव लिखितम्। अतोऽत्र यो निर्देशः प्राणपदस्य त्रिकोणे लग्ने सप्तमे वा मनुष्यजन्मेति सोऽनुचितः। अन्यभावेष्वपि मनुष्यमधिकृत्य फलस्योल्लेखात्। अतोऽत्र केवलं त्रिकोणे चतुर्थे दशमे चैकादशे प्राणपदे सति जन्मनः शुभत्वं पराशरेण लिखितं न तु जन्मेष्टकालस्य शुद्धिरथ वा मनुष्यस्य जन्मेति भावः।[2]

अत्र ज्योतिषरत्नाकरकारेण तु मुम्बई-संस्करणपाठानुसारेणैव स्वमतमुद्धृतम्। तत्रायं विशेषः यन्मनुष्यजन्माधिकृत्य यत्प्राणपदस्य सप्तमत्रिकोणस्थत्वं स्वीकृतं तत्प्राणपदे बलवति सति बोध्यं न तु निर्बले सति, द्वादशभावेषु प्राणपदस्य मनुष्यमधिकृत्य पृथक् पृथग् भावानुरूपफलस्य दर्शनादिति।[3]

## (इ) अप्रकाशकग्रहाणां द्वादशभावानुरूपं फलकथनम्।[4]

आदौ धूमग्रहस्य फलमाह—

क्रमशो द्वादशभावेषु स्थितिवशान्निम्नप्रकारेण फलं प्रोक्तम्। धूमे—

लग्नस्थे— जातको, योद्धा, विमलनेत्रः, सुस्तब्धो निर्दयः, क्रूरः, क्रोधी, च भवति।

---

१. बृ० पा० ३।७४ (काशी-सं०)
२. बृ० पा० पृ० ३१ (काशी-सं०)
३. श्री देवकीनन्दनसिंह, ज्योतिषरत्नाकर, प्रथमखण्डः, पृ० १५६, श्रीगिरिजाशंकर सिंह, माउर जि० मुंगेर।
४. बृ० पा० पू० भा०, षष्ठोऽध्यायः सकलः। (मुम्बई-सं०)

द्वितीयस्थे— रोगी, धनी हीनाङ्गो राज्यापहृतमानसो मन्दबुद्धिर्नपुंसकश्च प्रोक्तः ।

तृतीयस्थे— बुद्धिमान्, शूरः, प्रियम्वदः, हृष्टचित्तश्च, भवति ।
चतुर्थस्थे— नित्यं दुःखितः, स्त्रीपरित्यक्तः, सर्वशास्त्रचिन्तकश्च भवति ।
पञ्चमस्थे— स्वल्पापत्यो धनमित्रमन्त्रहीनः, सर्वभक्षी च जायते ।
षष्ठस्थे— बली, शत्रुहन्ता, बहुतेजोयुतः, ख्यातो, रोगरहितश्च प्रोक्तः ।
सप्तमस्थे— परदाररतः, कामी, निर्धनो निस्तेजाश्च ज्ञेयः ।
अष्टमस्थे— विक्रमहीनः, सोत्साही, सत्यप्रतिज्ञो प्रियवक्ता, निष्ठुरः, स्वार्थी च निगदितः ।

नवमस्थे— पुत्रधनसौभाग्यमानदयाबन्धुयुतो निगदितः ।
दशमस्थे— सन्तोषी, बुद्धिमान्, सुखी, पुत्रधनसौभाग्यान्वितश्च कथितः ।
एकादशस्थे— धनधान्यसुवर्णान्वितो रूपवान्, कलाविद्, विनीतो गीतज्ञश्च भवति ।

द्वादशस्थे— पतितः, पापकर्मा, परदाररतो व्यसनी, निर्घृणः, शठश्च भवति ।

द्वादशभावस्थपातग्रहफलम् । पाते—
लग्नस्थे— दुःखी, प्रपीडितः, क्रूरो मूर्खो, बन्धुजनद्वेषी, घातकश्च भवति ।

द्वितीयस्थे— जिह्मोऽतिपित्तयुतो, भोगी, निर्घृणो कृतज्ञो दुष्टः, पापकरश्च प्रोक्तः ।

तृतीयस्थे— स्थितप्रज्ञो, रणी, दाता, धनी, मानी, सेनापतिर्नृपप्रियो
चतुर्थस्थे— भवति । बन्धनस्थो रोगी, पुत्रैश्वर्यहीनः, पापश्च जातको
पञ्चमस्थे— निगदितः । दरिद्रः, सुन्दरः, कफपित्तवायुदोषत्रयपीडितो निर्लज्जो निष्ठुरश्च कथितः ।
षष्ठस्थे— शत्रुहन्ता, सुपुष्टः, सर्वास्त्रचालकः, कलानिपुणः, शान्तश्च जायते ।

सप्तमस्थे— धनस्त्रीपुत्रपरित्यक्तः, स्त्रीजितो दुःखी, कामी, निर्लज्जश्च भवति।

अष्टमस्थे— विकलनेत्रो विरूपो दुर्भगो ब्राह्मणनिन्दको रक्तपीडितश्च कथितः।

नवमस्थे— नानाव्यापाररतो बहुमित्रो बहुश्रुतः, प्रियम्वदः, स्त्रीप्रियश्च जायते।

दशमस्थे— श्रीमान्, धर्मकर्मरतः, शान्तो महान्, बुद्धिमांश्च प्रोक्तः।

एकादशस्थे— सत्यवक्ता, दृढव्रतो गीतरतो मानी, बहुधनैश्वर्ययुतश्च कथितः।

द्वादशस्थे— क्रोधी, बहुकर्मकृद्धर्मदूषको निजबन्धुद्वेष्यश्च भवति।

अथ च द्वादशभावस्थपरिधि फलम्। परिधौ—

लग्नस्थे— शान्तः पुत्रधनरूपभोगसुखधर्मान्वितो गुरुवत्सलो दानी च प्रोक्तः।

द्वितीयस्थे— रूपैश्वर्यभोगसुखधर्मयुतः, प्रभुश्च कथितः।

तृतीयस्थे— गुरुभक्तः, स्त्रीप्रियः, सुरूपवान्, देवभक्तः, स्वकुटुम्बरतो भृत्यश्च भवति।

चतुर्थस्थे— गीतज्ञो विस्मयशीलः, शत्रुमङ्गलकर्ता, सरलश्च जायते।

पञ्चमस्थे— स्त्रीप्रियो भोगी, धनी, मानी, रूपवान्, धर्मवत्सलो निगदितः।

षष्ठस्थे— धनपुत्रैश्वर्ययोगयुतः, सर्वभूतहिते रतः, शत्रुहन्ता च प्रोक्तः।

सप्तमस्थे— स्वल्पापत्यः, सुखहीनो मन्दबुद्धिर्निष्ठुरो रुग्णस्त्रीयुतो भवति।

अष्टमस्थे— शान्तो दृढगात्रो धर्मसत्यव्रतान्वितोऽध्यात्मरतश्च कथितः।

नवमस्थे— पुत्रसुखधनयुतधर्ममानयुतोऽल्पसन्तुष्टश्च जायते।

दशमस्थे— भोगी, दृढगात्रो मत्सरः, कलावित्, सर्वशास्त्रज्ञो भवति।

एकादशस्थे— स्त्रीभोगी, गुणवान्, स्वजनप्रियो बुद्धिमान्, मन्दाग्निश्च कथितः।

द्वादशस्थे— गुरुनिन्दारतो व्ययकृत्, दुष्टो दुःखी च भवति।

अथ द्वादशभावेषु स्थितिवशाच्चापस्य फलमाह। चापे—

लग्नस्थे— कृतज्ञः, सर्वदोषपरित्यागी, धनधान्यसुवर्णयुतो भवति।
द्वितीयस्थे— प्रियम्वदो विनीतः, प्रगल्भो विद्वान्, रूपवांश्च प्रोक्तः।
तृतीयस्थे— कृपणश्चौरः, कलाविदङ्गहीनश्च त्यक्तसौहृदो जायते।
चतुर्थस्थे— सुखी, गोधनधान्ययुतो राजवन्दितो नीरोगश्च कथितः।
पञ्चमस्थे— रुचिमान्, दीर्घदर्शी, देवभक्तः, प्रियम्वदः, सर्वकर्मसमृद्धो निगदितः।

षष्ठस्थे— शत्रुहन्ता, धूर्तः, सुखी, सर्वकर्मसमृद्धः, शुचिश्च भवति।
सप्तमस्थे— गुणैश्वर्ययुतः, शास्त्री, धर्मात्मा, प्रियश्च ज्ञातव्यः।
अष्टमस्थे— पापः, क्रूरः, परदाररतो विकलाङ्गश्च ज्ञेयः।
नवमस्थे— तपस्वी, व्रतविद्यामानयुतो लोकप्रसिद्धश्च बोध्यः।
दशमस्थे— बहुपुत्रधनैश्वर्यगोमहिष्यादिसमृद्धो लोकविश्रुतश्च प्रोक्तः।
एकादशस्थे— लाभयुतो नीरोगः, क्रोधी, मन्त्रज्ञः, स्त्रीप्रियोऽस्त्रविद्याविशारदो भवति।

द्वादशस्थे— खलोऽतिमानी, निर्लज्जः, परस्त्रीरतो दुर्बुद्धिश्च जायते।

अथ शिखि(केतु)ग्रहमधिकृत्य तत्स्थितिवशाद्द्वादशभावानां फलमाह। केतौ—

लग्नस्थे— सर्वविद्याकुशलो वाग्मी, सुखी, सर्वकामयुतो भवति।
द्वितीयस्थे— प्रियम्वदः, काव्यकृत्, पण्डितो मानी, विनीतो वाहनयुतश्च ज्ञेयः।

तृतीयस्थे— कृशाङ्गस्तीव्ररोगी कृपणः, क्रूरो निर्धनश्च बोध्यः।
चतुर्थस्थे— रूपगुणसुखसम्पन्नः सात्विको वेदविच्च प्रोक्तः।
पञ्चमस्थे— सुखीभोगी, गुरुभक्तियुतो वाग्मी, बुद्धियुक्तियुतश्च निगदितः।

षष्ठस्थे— बहुबान्धवयुतः सुन्दरः शूरो बुद्धिमान् मातृकुलनाशकरश्च कथितः।

सप्तमस्थे— रक्तपीडायुतः कामी भोगी वेश्यारतो निगदितः।

अष्टमस्थे— नीचकर्मरतः पापो निन्दको निर्लज्जः स्त्रीसुखरहितो ज्ञातव्यः।

नवमस्थे— लिङ्गधारी सर्वभूतहिते रतः धर्मात्मा प्रसन्नश्च कथितः।

दशमस्थे— सुखैश्वर्यसम्पन्नः स्त्रीप्रियो दानी ब्रह्मण्यश्च विज्ञेयः।

एकादशस्थे— नित्यलाभो धनी मानी बुद्धिमान् यज्ञकृद्धर्मरतश्च भवति।

द्वादशस्थे— पापः परस्त्रीरतो रौद्रः श्रद्धालज्जाहीनः शूरश्च जायते।

अथ गुलिकमधिकृत्य द्वादशभावानां स्थितिवशात्फलनिरूपणम्—

लग्नस्थे— खलो मन्दोऽतिदुःखी भवति।

द्वितीयस्थे— निर्धनो विकृतो व्यसनी निर्लज्जः क्षुद्रश्च प्रोक्तः।

तृतीयस्थे— सुन्दरो, ग्रामाधिपः, पुण्यात्मा सज्जनप्रियश्च निगदितः।

चतुर्थस्थे— रोगी, दुःखी, पापो, वातपित्तरोगी, कथितः।

पञ्चमस्थे— निर्धनोऽल्पायुर्नपुंसकः स्त्रीजितो नास्तिकः क्षुद्रश्च ज्ञेयः।

षष्ठस्थे— शत्रुहन्ता सुपुष्टाङ्गः स्त्रीप्रियः सोत्साहः सुहृढश्च ज्ञातव्यः।

सप्तमस्थे— स्त्रीजितः पापः कृशाङ्गः परस्त्रीरतः स्त्रीधनजीवितः सौहृदहीनो निगदितः।

अष्टमस्थे— दुःखी क्षुधापीडितः क्रूरः क्रोधी निर्लज्जो धनगुणहीनो भवति।

नवमस्थे— बहुक्लेशी कृशाङ्गो दुष्टो निर्लज्जः पिशुनश्च जायते।

दशमस्थे— सुखपुत्रभोगैश्वर्ययुतोऽग्निपूजको योगी च विज्ञेयः।

एकादशस्थे— बन्धुहितकरः स्त्रीसुखयुतो भोगी पुत्रवांश्च बोध्यः।

द्वादशस्थे— नीचो नीचकर्मकृत्पापोऽङ्गहीनोऽलसो दुर्भगश्च प्रोक्तः।

द्वादशभावेषु स्थितिवशात्प्राणपदग्रहस्य फलान्याह—

लग्नस्थे— प्राणपदे—मूकोन्मत्तो जडाङ्गो दुःखी कृशो रोगी भवति।
द्वितीयस्थे— धनधान्यभृत्यबहुपुत्रयुतः सुभगश्च जायते।
तृतीयस्थे— हिंसको निष्ठुरोऽहङ्कारी गुरुभक्तिहीनश्च ज्ञेयः।
चतुर्थस्थे— सुखी स्त्रीवल्लभो रूपवान् सत्यवादी गुरुभक्तियुतो बोध्यः।
पञ्चमस्थे— सुखी दयालुः सुकर्मा सर्वकार्यनिपुणश्च प्रोक्तः।
षष्ठस्थे— खलश्छली मन्दाग्निर्निर्दयो बन्धुशत्रुवशोऽल्परोगोऽल्पायुश्च ज्ञातव्यः।

सप्तमस्थे— ईर्ष्यालुः कामी निष्ठुरो भयङ्करवपुर्दुर्बुद्धिश्च कथितः।
अष्टमस्थे— रोगी भृत्यबन्धुपुत्रजैः पार्थिवैश्च दुःखैः पीडितो भवति।
नवमस्थे— धनपुत्रैश्वर्यधर्मयुतो भृत्यः सरलः प्रियदर्शनश्चोक्तः।
दशमस्थे— बुद्धिमान् शूरो राजकार्यदक्षो देवार्चनरतो जायते।
एकादशस्थे—धनगुणभोगैश्वर्ययुतो विख्यातो गौराङ्गो मातृभक्तश्च कथितः।

द्वादशस्थे— क्षुद्रो दुष्टो हीनाङ्गो द्विजबन्धुद्वेषी नेत्ररोगी काणो वा जायते।

द्वादशभावानधिकृत्य प्राणपदस्य फलम्। प्राणपदे—

लग्नस्थे— जातको दुर्बलो रोगी मूकोन्मत्तोऽङ्गहीनो दुःखितः कृशश्च प्रोक्तः।

द्वितीयस्थे— बहुधनधान्यभृत्यपुत्रैश्वर्यसौभाग्यसम्पन्नः कथितः।
तृतीयस्थे— हिंस्रोऽभिमानी निष्ठुरो मलिनो गुरुभक्तिहीनो निगदितः।
चतुर्थस्थे— सुखरूपैश्वर्यमित्रयुतः स्त्रीवल्लभः सत्यवादी, गुरुभक्तश्च ज्ञेयः।

पञ्चमस्थे— सुखी सुकर्मा दयालुः सर्वकर्मनिपुणश्च बोध्यः।
षष्ठस्थे— बन्धुशत्रुवशस्तीक्ष्णो, मन्दाग्निर्निर्दयः खलो धनी रोगी चाल्पायुश्च भवति।

सप्तमस्थे— ईर्ष्यालुः कामी निष्ठुरो रौद्रवपुः कुबुद्धियुतो दुराराध्यश्च जायते ।

अष्टमस्थे— रोगी भृत्यबन्धुपुत्रराजकृतैर्दुःखैः पीडितश्च दृश्यते ।

नवमस्थे— पुत्रधनभाग्यरूपैश्वर्ययुतः सरलः पण्डितो भृत्यश्च विज्ञेयः ।

दशमस्थे— राजकार्येषु निपुणः बलबुद्धियुतो देवभक्तश्च विद्यते ।

एकादशस्थे— गौरवर्णो मानी गुणी विद्वान् भोगी च भवति ।

द्वादशस्थे— नेत्ररोगी काणो हीनाङ्गो दुष्टः क्षुद्रो बन्धुद्वेषी च जायते ।

अर्गलाविचारः[१]—

अर्गलायोगस्यापि पराशरेण फलकथनार्थं वैशिष्ट्यं प्रकटीकृतम् । अस्यैव छाया जैमिनीये सूत्रेऽपि दृश्यते । प्रायशः साम्यमुभयत्र । अर्गलयैव ग्रहाणां भावानां च फलस्य दृढत्वं भवति । अत एवार्गलाज्ञानं सुतरामावश्यकम् । तथा हि ग्रन्थकारः—

मैत्रेय सार्गला नाम यया भावफलं दृढम् ।
स्थिरं खेटफलं च स्यात् साधुना कथ्यते मया ॥[२]
अथातः सम्प्रवक्ष्यामि अर्गलाफलमुत्तमम् ।
यस्य विज्ञानमात्रेण ग्रहाणाञ्च फलं वदेत् ॥[३]

अर्गलाज्ञानप्रकारमाह—

यदि राशितो ग्रहाद्वा चतुर्थे द्वितीये चैकादशे स्थाने ग्रहस्तिष्ठेत्तदार्गला-योगो भवति ।

अर्गलाबाधकयोगमाह—

यदि क्रमशो दशमे द्वादशे तृतीये च स्थानेऽपि ग्रहस्तिष्ठेत्तदा पूर्वोक्तार्गला-

---

१. बृ० पा० पू० भा०, सप्तमोऽध्यायः सकलः (मुम्बई-सं०)
२. बृ० पा० ३१।२ (काशी-सं०)
३. बृ० पा० ७।१ (मुम्बई-सं०)

योगस्य बाधकत्वम्। अर्थाद्यदि चतुर्थे ग्रहस्तदार्गलायोगस्य दशमेऽपि ग्रहे सति अर्गलाबाधकयोगः। एवमेव द्वितीयस्थस्य ग्रहस्य द्वादशस्थेन, एकादशस्थस्य ग्रहस्य च तृतीयस्थेन ग्रहेणार्गलायोगस्य बाधकत्वं ज्ञेयम्।

अत्रापवादमाह—

यदि बाधकस्थानस्य निर्बलत्वन्तदा अर्गलायोगस्य बाधकत्वाभावः।

निर्बलत्वञ्च न्यूनबलत्वेन न्यूनसङ्ख्यया च भवति। यथा यदि चतुर्थे ग्रह-द्वयं दशमे चैक एव तदा नार्गलाबाधकत्वमिति।

अर्गलायाः त्रिविधत्वम्—

यद्येकग्रहयुतार्गला स्यात्सा कनिष्ठोच्यते। द्विग्रहयुता च मध्यमा, ग्रहत्रययुता सूक्ष्मा पूर्णा वा प्रोक्ता।

पुनस्तस्य शुभाशुभभेदेन द्विविधत्वम्—

अर्थाद्यदि पापग्रहयुता तदा पापार्गला, शुभग्रहयुता तदा शुभार्गला भवतीति भावः।

अर्गलाज्ञाने विशेषमाह—

यदि राशितो ग्रहतो वा तृतीयस्थाने पापग्रहत्रयस्य ततोऽधिकस्य वा योगस्तदापि चार्गलायोगः। अर्थादत्रैकपापग्रहयोगे द्विग्रहयोगे वा नैवार्गलायोगः।

तथा हि ग्रन्थकारः—

**एकेन द्वितयेनापि अर्गला या भवेद्विज।**
**सार्गला नैव विज्ञेया बहुपापयुतिं विना॥[1]**

जैमिनीयेऽपि—

**कामस्था भूयसा पापानाम्।[2]**

---

१. बृ० पा० पू० भा० ७।११ (मुम्बई-स०)

२. जैमिनिसूत्राज्, १।१।६, रमण पब्लिकेशन्ज्, बगलोर

त्रिकोणार्गलामाह्—

यदि पञ्चमे स्थानेऽपि पूर्ववद्ग्रहाद्राशितो वा ग्रहयोगस्तदापि चार्गलायोगः। अस्य बाधकत्वं नवमस्थेन ग्रहेण भवतीति विशेषः।

अत्र केतोर्वैपरीत्यमर्थाद्यदि केतुर्नवमस्थो भवति ग्रहतो राशितो वा तदार्गलायोगकारकस्तस्य च बाधकत्वं पञ्चमस्थेन ग्रहेण भवति।

निर्बाधकाया अर्गलाया वैशिष्ट्यम्—

*यार्गला निर्बाधका सैव फलदा न तु सबाधका। अर्थाद्यदि ग्रहतो राशितो वा चतुर्थे द्वितीये चैकादशे पञ्चमे ग्रहस्तदार्गलायोगः एवं दशमे द्वादशे तृतीये* नवमे चापि ग्रहयोगस्तदा सा सबाधकार्गला, सा नैव फलप्रदा। यदि बाधकस्थाने न्यूनबलवत्त्वन्तदा सार्गला नैव सबाधकोच्यते। अपि तु सापि फलप्रदेति भावः।

अर्गलायोगयुक्तस्य ग्रहस्य राशेश्च वा दशाकाले फलप्राप्तिर्भवति।

फलप्रकारमाह्—

लग्ने लग्नारूढे लग्नाल्लग्नारूढाच्च सप्तमे पूर्वोक्तप्रकारेण निर्बाधार्गला भवति तज्जन्मलग्नोत्पन्नो मनुष्यो महाभाग्ययुतो भवति। स धनधान्यपुत्रपशुस्त्रीबन्धुयुतः शरीरारोग्यैश्वर्यभृत्यवाहनान्वितः प्रभुभक्तः सुधर्मज्ञश्च जायते इति भावः।

काशी-संस्करणे द्वादशभावरीत्यापि फलं प्रोक्तम्। द्वितीये धनप्राप्तिस्तृतीये सोदराणां सुखं चतुर्थे गेहपशुबन्धुकुलसुखं पञ्चमे पुत्रपौत्रादियोगः षष्ठे शत्रुभयं सप्तमे धनदारादिसुखमष्टमे कष्टं नवमे भाग्योदयो दशमे राजसन्मानमेकादशे लाभो द्वादशे व्ययाधिक्यमिति।[1]

अत्र पापग्रहयोगयुक्तार्गलाऽपि मध्यमसुखप्रदा कथिता, किं पुनः शुभग्रहयोगयुक्तार्गलाया माहात्म्यम्। सा तु बहुविधसुखैश्वर्यप्रदा भवतीति स्वतः सिद्धम्। मिश्रग्रहा शुभाशुभग्रहयोगयुक्ता चार्गलाऽपि शुभफलदा ज्ञेया।

---

१. बृ० पा० ३१।११-१६ (काशी-सं०)

अत्र विशेषः—

अर्गलायोगकारको ग्रहोऽपि यदि लग्नं पश्येत्तदा स ग्रहोऽपि महाभाग्यदो भवति परञ्च तस्य निर्बाधकत्वमावश्यकमिति ।

लग्ने सप्तमे चार्गलायोगो विशेषेण भाग्यप्रद इति । जैमिनिसूत्रेऽपि—

**'शुभार्गले धनसमृद्धिः'**

इति शुभं फलं प्रोक्तम् ।[1]

## (ग) समीक्षा

### (अ) पूर्वपरम्परा—

ग्रहाणां योगायोगेन फलितज्योतिषस्य प्रवृत्तिः । फलितज्योतिषस्य सर्वशास्त्रेषु प्राय उल्लेखो दृश्यते इति प्रथमाध्याये निरूपितम् । तत्र तेषां ग्रन्थानामुद्धरणवचनानि लिखितानि ।

**शन्नो ग्रहाश्चान्द्रमसाः शमादित्याश्च राहुणा । शन्नो मृत्युर्धूमकेतुः ।**

इत्यथर्ववेदे ग्रहाणां कुफलदूरीकरणार्थं प्रार्थना दृश्यते[2] । उद्धरणान्तराणि प्रथमाध्याये द्रष्टव्यानि । अत्र केवलं होराशास्त्रस्य पूर्वपरम्पराया विचारो विधीयते ।

उत्तरभागे गर्गहोरायाः स्पष्टोल्लेखः[3] तेन पराशरात्पूर्वं गर्गस्य परम्परा सुनिश्चिता । नारद-पुराणे निखिलं ग्रहस्वरूपादिकमुपलभ्यते । सनन्दनमुनिना नारदाय ज्ञानं प्रदत्तम् ।[4] नारदसनन्दनयोर्ब्रह्मणः पुत्रत्वात् पराशरस्य प्रपौत्रत्वाच्च पराशरात्पूर्वं पूर्वापि परम्परा स्पष्टा ।

---

१. जैमिनिसूत्राज्, १३।३।२३, रमण पब्लिकेशनज् बंगलोर ।
२. अथर्ववेदः, १६।६।१०, वैदिक यन्त्रालय, अजमेर ।
३. बृ० पा० उ० भा० १२।४२
४. नारदमहापुराणम् १।२।५१।१४-३०, ६७।१०१, कल्याण, संक्षिप्तनारद-विष्णुपुराणांक, जनवरी १६५४, गीता प्रेस, गोरखपुर ।

अपि च काशी-संस्करणे यो ग्रहशान्त्यध्यायः प्रोक्तः तस्यापि मूलं नारदपुराणे दृश्यते ।[1]

## (इ) उत्तरवर्तिषु प्रभावः—

पराशरादुत्तरवर्ती जैमिनिर्महामुनिर्वर्त्तते । जैमिनि-सूत्रेत्वन्य एव प्रकारः फलकथने। अत्राप्यप्रकाशकग्रहाणां गुलिकादिकानां चर्चा दृश्यते । ग्रहाणामात्मकारकादिसंज्ञया फलकथनार्थं यः प्रकारोऽत्र निरूपितस्तस्य मूलं बृहत्पाराशरहोरायां स्पष्टरूपेण दृश्यते । ग्रहाणां संज्ञास्वरूपादिकस्य चर्चा नोपलभ्यते ।

वराहमिहिरेण बृहज्जातके ग्रहभेदाख्ये द्वितीयाध्याये सर्वमनुकरणं विहितम् ।[2]

सारावल्यां कल्याणवर्मणा, चतुर्थोऽध्यायो ग्रहगुणनाम्ना त्रिंशोऽध्यायश्च ग्रहभावफलाध्यायनाम्ना निरूपितौ ग्रहभावफलस्य बृहत्पाराशरे बृहज्जातके च पृथक् चर्चा न दृश्यते ।[3]

जातकपारिजाते वैद्यनाथमहोदयेन, ग्रहनामस्वरूपगुणभेदाख्यो द्वितीयोऽध्यायो द्वयादिग्रहयोगनाम्नाष्टमोऽध्यायश्च निरूपितौ । प्रथमाध्याये पराशरवदेव ग्रहाणां स्वरूपादिकं लिखितम् । द्वयादिग्रहयोगाध्याये द्वित्रिचतुःपञ्चषड्ग्रहाणां योगायोगेन फलकथनं दृश्यते । अस्य विषयस्यापि पूर्वं चर्चा न दृश्यते ।[4]

पुञ्जराजाचार्येण शम्भुहोराप्रकाशे द्वितीयतृतीयषोडशाध्याया ग्रहभेदबलसाधनग्रहसप्तवर्गफलनाम्नाङ्किताः, अत्र द्वितीयाध्याये ग्रहाणां स्वरूपादिकस्या-

---

१. नारदमहापुराणम् १।२।४७ अध्याय संक्षिप्त नारदविष्णुपुराणांक जनवरी १९५४, गीताप्रेस, गोरखपुर ।

२. सीताराम-झा, बृहज्जातकम् (द्वितीयोऽध्यायः) मास्टर खेलाड़ीलाल एण्ड संस, बनारस ।

३. सीताराम-झा, सारावली चतुर्थत्रिंशावध्यायौ, मास्टर खेलाड़ीलाल एण्ड संस, बनारस ।

४. कपिलेश्वर-शास्त्री जातक-पारिजातः, (द्वितीयाष्टमाध्यायौ) चौखम्बा संस्कृत सीरिज, बनारस ।

वस्थानाञ्च वर्णनं दृश्यते। तृतीयाध्याये च षड्वलस्य निरूपणमुपलभ्यते। षोडशाध्याये सप्तवर्गेण ग्रहाणां द्वित्रिग्रहाणां योगायोगेन च फलकथनं विहितम्।[1]

- सर्वार्थचिन्तामणौ व्यङ्कटेशेन प्रथमाध्याये सप्तदशे चाध्याये ग्रहणां स्वरूपादिकस्य वर्णनं विहितम्। नात्र कश्चिद्विशेषः।[2]

फलदीपिकायामपि मन्त्रेश्वरेण २,४,१८ सङ्ख्यका अध्यायाः क्रमाद्ग्रहभेदषड्वलनिरूपणद्विग्रहयोगनाम्नाङ्किताः।[3] अत्र द्वितीयाध्याये ग्रहेभ्यो विचार्यवस्तूनां निर्देशः ग्रहाणां स्वरूपञ्च विस्तरेण दृश्यते, कुत्रचिद्विशेषोऽपि दृश्यते। यथा सूर्यस्य ५० चन्द्रस्य ७० भौमस्य १६ बुधस्य २० गुरोः ३० शुक्रस्य ७ शनेश्च राहोश्च १०० आयुषो वर्षाणि लिखितानि[4] एवमन्यत्रापि बोध्यम्। चतुर्थाध्याये षड्वलस्य निरूपणम् अत्रापि चन्द्रक्रियाया अवस्थाया वेलाया वलपिण्डसंस्थायाश्च वर्णनं विशेषेण दृश्यते[5] अष्टादशाध्याये द्विग्रहयोगस्य चन्द्रदृष्टेश्च फलमुपलभ्यते।[6]

## (उ) वैशिष्ट्यम्—

ग्रहाणां स्वरूपादिकं यदस्मिन् ग्रन्थे प्रोक्तं मूलरूपेण तस्यैवानुकरणमुत्तरवर्तिभिराचार्यैर्विहितमिति प्रतिपादितम्। ग्रहाणां स्वरूपादिकस्य महत्प्रयोजनं वर्तते। तत्स्वरूपादिकमधिकृत्यैव जातकस्य स्वरूपादिकस्य ज्ञानं भवति। तथा च

---

१. महीधर शर्मा, शंभुहोराप्रकाशः (२,३,१४ सङ्ख्यका अध्यायाः) गंगाविष्णु श्रीकृष्णदास, श्रीलक्ष्मी वैङ्कटेश्वर स्टीम् प्रेस, बम्बई।

२. महीधर शर्मा, सर्वार्थचिन्तामणिः (१,१७, सङ्ख्यकावध्यायौ), गंगाविष्णु श्रीकृष्ण दास, लक्ष्मी वेंकटेश्वर स्टीम प्रेस, कल्याण, बम्बई।

३. मन्त्रेश्वर-फलदीपिका (२,४,१८ सङ्ख्यका अध्यायाः) के० एस्० कृष्णामूर्ति, ६५, थर्डक्रास रोड, वासा बांगुदी बगलोर।

४. तत्रैव, २।३२.

५. तत्रैव, ४।१२-२४.

६. तत्रैव, १८।१-१६.

दीप्ताद्यवस्थानुरूपञ्च दशानामपि फलकथनं प्रोक्तम् । इष्टकष्टबलज्ञानमतीवाद्भुतं फलपाकाय । अप्रकाशकग्रहनिरूपणमपि चमत्कारि वर्तते । प्रकाशकानां ग्रहाणां फलं तु प्रत्येक्षण सर्वैः कथ्यते एव । प्रकाशकाश्च सर्वे ग्रहाः यन्त्रादिभिः प्रत्यक्षेणावलोक्यन्ते । अप्रकाशकग्रहाणां स्पष्टीकरणं तेषाञ्च जातकस्य जीवने फलकथनं लोकोत्तरमेव विद्यते । अप्रत्यक्षाणां ग्रहाणां प्रत्यक्षफलकथनमेव वैशिष्ट्यम् ।

* * * *

## तृतीयोऽध्यायः

# राशिस्वभावकथनम्

### (क) विषयावतरणम्

अस्मिन् राशिस्वभावकथनाध्याये बृहत्पाराशर-होराशास्त्रस्य ३,४,१० सङ्ख्याकानामध्यायाना विवेचन विहितम् । राशिज्ञानप्रकारस्य ज्योतिपशास्त्रे ग्रह-स्वरूपज्ञानवत् सुतरामावश्यकत्वम् । यतो हि ग्रहाणा राश्यादिज्ञानप्रकारेणैव स्पष्टत्व वलावलत्वञ्च ज्ञायते। तेन वलावलत्वेनैव शुभाशुभफल कथयितु शक्यते ।

अस्य ग्रन्थस्य तृतीयाध्याये मेषादिराशीना स्वरूपादिकस्य, निषेकशोधनस्या-यनाशस्य, लग्नत आरम्य द्वादशभावाना स्पष्टीकरणप्रकारस्य, राशिस्वामिना, षोडशवर्गानयनप्रकारस्य तत्फलस्य विश्वकवलस्य च चर्चा विद्यते ।

चतुर्थाध्याये राशीना दृष्टिभेदस्य वर्णन दृश्यते ।

दशमाध्याये भावहोरावर्णदघटीलग्नानामानयनप्रकारस्य विधिर्निर्दिष्ट ।

अत्र लग्नादिकस्य ये षोडशवर्गा उक्तास्ते ग्रहाणामपि बोध्या । यश्च दृष्टिभेदोऽत्र राशीनामुक्त स ग्रहाणामपि ज्ञेय ।

मेषादिराशीना स्वरूपज्ञानेन फलकथने सौकर्यं भवति ।

लग्नादीनाञ्च ज्ञानमप्यावश्यकम् । विना लग्नज्ञानेन फल वक्तु न शक्यते ।

षोडशवर्गाश्च लग्नस्य सूक्ष्मत्वज्ञानाय फलस्य तत्त्वावगमनाय च प्रोक्ताः सन्ति। द्वादशभावानां स्पष्टीकरणेन ग्रहाणां सूक्ष्मस्थितिरवगम्यते। सन्धिस्था ग्रहा निष्फला भवन्ति। भावस्पष्टानन्तरमेव चलितभावस्य ज्ञानं भवति येन च ग्रहाणां भावमधिकृत्य सूक्ष्मफलस्य ज्ञाने सौकर्यं सम्पद्यते।

## (अ) राशिस्वरूपनिरूपणम्[1]—

यथा हि कालपुरुषस्यान्तःस्थानरूपा आत्मादिस्थाने ग्रहास्तथास्य शरीरस्य वहिरङ्गानां स्थाने मेषादयो द्वादशराशयः प्रोक्ताः। अश्नुते व्याप्नोति क्षितिजं ग्रहांश्चेति राशिरुच्यते। ते च मेषवृषमिथुनकर्कसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनाख्याः सन्ति।

तेषां यथाक्रमं स्वरूपमत्र वर्ण्यते। अस्य चापि महानुपयोगः फलकथने तत्रभवताचार्येण प्रदर्शितः।

मेष :—

कालपुरुषस्य शीर्षं, क्रूरः, चरः, रक्तवर्णः, बृहद्गात्रः, चतुष्पाद् रात्रिविक्रमी, पूर्वदिग्वासी, क्षत्रियवर्णः, पर्वतचरः, रजोगुणी, पृष्ठोदयः, अग्नितत्त्वः, भौमश्चास्याधिपतिः। विषमसंज्ञकः, पुल्लिङ्गः, पित्तप्रकृतिकश्च प्रोक्तः।

वृष :—

कालपुरुषस्याननं, स्थिरः, सौम्यः, समः, वातप्रकृतिकः, श्वेतवर्णः, दीर्घः, चतुष्पाद्, रात्रिबली, दक्षिणदिग्वासी, ग्राम्यः, वैश्यवर्णः, भूमितत्त्वः, रजोगुणी, पृष्ठोदयः, स्त्रीसंज्ञकश्च कथितः। अस्य स्वामी च शुक्रो ज्ञेयः।

*मिथुनराशि :—*

कालपुरुषस्य बाहुरूपः, द्विस्वभावः (चराचरात्मकः) विषमः, क्रूरः, पुरुषसंज्ञकः, त्रिधातुप्रकृतिकः (वातपित्तकफात्मकः) शीर्षोदयः वीणागदायुतस्त्रीपुरुष-

---

१. बृ० पा० पू० भा० तृतीयोऽध्यायः (मुम्बई-सं०)

युग्मरूपः, पश्चिमदिग्वासी, वायुतत्त्वः, द्विपदः, रात्रिवली, ग्राम्यः, समगात्रः, हरिद्वर्णश्च निगदितः। बुधश्चास्याधिपतिर्ज्ञेयः।

कर्क :—

कालपुरुषस्य हृदयं, चरः, सौम्यः, समः, कफप्रकृतिकः, स्त्रीसंज्ञकः, पृष्ठोदयः, पाटलवर्णः, वनेचरः, ब्राह्मणः, बहुपादः, स्थूलतनुः, सत्त्वगुणी, जलतत्त्वः, अस्याधिपतिश्च चन्द्रः प्रोक्तः।

सिंह :—

कालपुरुषस्योदरं, स्थिरः, विषयः, क्रूरः, पुरुषः, पित्तप्रकृतिकः, सत्त्वगुणी, चतुष्पदः, क्षत्रियः, वनेचरः, शीर्षोदयः, बृहद्गात्रः, पाण्डुवर्णः, पूर्वदिग्वासी, दिनबली, सूर्यश्चास्याधिपतिः कथितः।

कन्या :—

कालपुरुषस्य कटिः, द्विस्वभावा, समा, सौम्या, स्त्रीसंज्ञका, पर्वतचरा, दिनवलान्विता, शीर्षोदया, मध्यमदेहा, द्विपदा, दक्षिणदिग्वासिनी, सस्याग्नियुता, वैश्यवर्णा, मिश्रा, वायुतत्त्वा, कुमारी, तमोगुणान्विता, स्वामी चास्या बुधः प्रोक्तः।

तुलाराशि :—

कालपुरुषस्य वस्तिः, चरः, क्रूरः, विषमः, पुरुषः, त्रिधातुप्रकृतिकः, शीर्षोदयः, दिनबली, कृष्णवर्णः, रजोगुणी, पश्चिमदिग्वासी, भूमिचरः, हिंसकः, शूद्रजातिकः, मध्यतनुर्द्विपदः, स्वामी चास्य शुक्रो ज्ञेयः।

वृश्चिक :—

कालपुरुषस्य लिङ्गं, स्थिरः, सौम्यः, स्त्रीसंज्ञकः, कफप्रकृतिकः, बहुपदः, ब्राह्मणः, बिलवासी, उत्तरदिग्वासी, दिनबली, पिशङ्गवर्णः, जलतत्त्वः, भूचरः, रोमयुतः, अतितीक्ष्णाग्रः, स्वामी चास्य भौमः कथितः।

धनु :—

कालपुरुषस्योरुयुगल, द्विस्वभावः, क्रूरः, विषमः, पुल्लिङ्गः, पित्तप्रकृतिकः,

पृष्ठोदयः, सत्त्वगुणी, पिङ्गलवर्णः, रात्रिबली, अग्नितत्त्वः, क्षत्रियः, पूर्वार्द्धद्विपद-श्चोत्तरार्द्धचतुष्पदः, समगात्रः, धनुर्धरः, पूर्वदिग्वासी, भूचरः, तेजस्वी। स्वामी चास्य बृहस्पतिर्ज्ञेयः।

मकर :—

कालपुरुषस्य जानुयुग्मं, चरः, सौम्यः, स्त्रीसंज्ञकः, वातप्रकृतिकः, तमोगुणी, भूमितत्त्वः, दक्षिणदिग्वासी, रात्रिबली, पृष्ठोदयः, दीर्घतनुः, चित्रवर्णः, वनभूचरः, पूर्वार्द्धचतुष्पदश्चोत्तरार्द्धपदहीनो जलचरश्च। स्वामी चास्य शनिः प्रोक्तः।

कुम्भ :—

कालपुरुषस्य जङ्घायुग्मं, स्थिरः, क्रूरः, विषमः, पुरुषः, त्रिधातुप्रकृतिकः, कुम्भयुतः, बभ्रुवर्णः, मध्यतनुः, द्विपदः, दिनबली, जलचरः, वायुतत्त्वः, शीर्षोदयः, तमोगुणी, शूद्रः, पश्चिमदिग्वासी, स्वामी चास्यापि शनिः प्रोक्तः।

मीन :

कालपुरुषस्य चरणयुग्मं, द्विस्वभावः, सौम्यः, स्त्रीसंज्ञकः, समः, कफ-प्रकृतिकः, मीनयुग्मपुच्छयुतः, दिवा बली, जलतत्त्वः, सत्त्वगुणी, स्वस्थः, जलचरः, ब्राह्मणः, पदरहितः, मध्यदेहः, उत्तरदिग्वासी, उभयोदयः, स्वामी चास्य बृहस्पतिः कथितः।

अत्र वैशिष्ट्यम्[1]

राशि-दृष्टिपरिज्ञानम्। मेष-कर्क-तुला-मकराः चरसंज्ञकाः स्वकीय निकटस्थं स्थिरं वृषं विहाय शेषान् त्रीन् सिंहवृश्चिककुम्भान् स्थिरान् राशीन् पश्यन्ति। एवमेव स्थिराः (वृषसिंहवृश्चिककुम्भाः) स्वकीयनिकटस्थं चरं विहाय शेषान् त्रीन् चरान् पश्यन्ति। द्विस्वभावाश्चात्मानं विहाय शेषान् त्रीन् द्विस्वभावान् पश्यन्ति।

---

१. बृ० पा० पू० भा० ४ अध्याय (मुम्बई-सं०)

अत्र ग्रहाणां कृतेऽपि विशेष आचार्येणेत्थमेव प्रदर्शितः। अर्थाच्चरस्था ग्रहाः स्वकीय-निकट-स्थिर-राशिस्थं ग्रहं विहाय शेषस्थिरराशित्रयस्थान् ग्रहान् पश्यन्ति। स्थिरस्थाश्च निकटचरराशिस्थं विहाय शेषचरत्रयस्थान् ग्रहान् पश्यन्ति। द्विस्वभावस्थश्चात्मानं विहाय शेषद्विस्वभावत्रयस्थान् ग्रहान् पश्यन्तीति भावः।

दृष्टि-विन्यास-चक्रम्

अन्यच्च वैशिष्ट्यम्—

राशीनां पुष्करादि-संज्ञा। मेषकर्कतुलामकराना पुण्य-संज्ञा, वृष-सिंह-वृश्चिक-कुम्भानां पुष्करसंज्ञा तथा मिथुन-कन्या-धनुर्मीनानामाधानसंज्ञा प्रोक्ता।

मूलादिसंज्ञा—

मेषकर्कतुलामकरा धातुसंज्ञका वृषसिंहवृश्चिककुम्भा मूलसंज्ञका मिथुनकन्याधनुर्मीनाश्च जीवसंज्ञकाः सन्ति।

राशीनां द्रव्यादिकज्ञानम्—

मेषस्य वस्त्रादिकं, वृषस्य शाल्यादिकं, मिथुनस्य वन्यफलादिकं, कर्कस्य कन्दलकादिकं, सिंहस्य धान्यं, कन्यायाश्च त्वक्सारादिकं, तुलाया मुद्गमुखादिकं, वस्त्रतैलादिक वृश्चिकस्य, लोहेक्षुमुखादिकं, धनुषश्चाश्वशस्त्रादिकं, मकरस्य सुवर्णादिकं, कुम्भस्य जलपुष्पादिकं, मीनस्य जलजन्यवस्त्रादिकं, द्रव्याणि प्रोक्तानि।

सजलनिर्जलज्ञानम्—

कर्ककुम्भमीनमकरवृश्चिकतुलाः सजलाः सिंहकन्याधनुर्मिथुनमेषवृषाश्च निर्जलाः प्रोक्ताः।

## (इ) लग्नादिद्वादशभावसाधनप्रकारः[1]

लग्नसाधनमाह—

लग्नस्य ज्योतिषशास्त्रे मूर्धन्यस्थानं विद्यते। लग्नं हि मूलाधारभूतमत्र फलितशास्त्रे। लग्नमधिकृत्यैव जन्मकुण्डलीचक्रनिर्माणं द्वादशभावानां स्पष्टादिकं षोडशवर्गविवेचनमष्टकवर्गसाधनं प्रकाशकाप्रकाशकग्रहस्पष्टादिकञ्च भवितुमर्हति। अतश्च पूर्वं लग्नज्ञानमावश्यकम्।

लग्नं 'क्षुब्धस्वान्तध्वान्तलग्नेति' पाणिनीयसूत्रेण[2] निपातनाल्लगति फले इत्यर्थे सिध्यति तथा चामरकोषे 'राशीनामुदयो लग्नः' इति दृश्यते। अत्रोदयोऽपि पूर्वाचलसंयोग इत्यर्थः। अतो जातकस्य जन्मकाले क्षितिजेन पूर्वाविलेन संलग्नस्य यस्य राशेरुदयो भवति तद्राशिनाम्ना लग्नमुच्यते। लग्नमेव प्रथमो

१. वृ० पा०, ३।३०-४७ (मुम्बई-सं)
२. वासुदेव शर्मा, सिद्धान्त कौमुदी, अष्टाध्यायी सूत्रपाठ ७।२।१८, निर्णयसागर प्रेस मुम्बई (शकाब्दाः १८५०)।

भावः । तदनन्तरमवशिष्टा एकादशराशयो द्वादशभावाश्च भवन्ति । तेषु भावेष्वेव सकलः फलितज्यौतिषस्य विचारो विधीयते ।

तस्य लग्नस्य स्पष्टीकरणमावश्यकं तद्राश्यंशकलाविकलाज्ञानेनैव शेषाणां द्वादशभावानां होरादिकानां षोडशवर्गाणाञ्च स्फुटत्वं भवति ।

लग्नस्पष्टस्य चाधारभूतं जन्मकालीयेष्टघटिकापलादिकम् । तस्येष्टकालस्य च ज्ञानं सूर्योदयकालज्ञानेन भवति । अर्थात् यदा जातकस्य जन्म भवति तदा सूर्योदयादारभ्य कियत्प्रमाणेन घटिकापलादिकं व्यतीतं तदेव सूर्यादयादिष्टकाल-घटिकापलादिकं सकलं फलितज्यौतिषस्य मूलमिति ज्ञेयम् ।

सकले विश्वे विभिन्ननगराणां विभिन्नरेखांशाक्षांशवशात्तथा सूर्यस्य क्रान्ति-वशाच्च पृथक् पृथक् सूर्योदयकालः । तस्य सूर्योदयकालस्य प्रतिदिनं सूर्यस्य द्वादश-राशिसञ्चारानुसारेण पृथक् पृथक् समयनिर्देशो भवति ।

तस्य निश्चितकालज्ञानार्थमधुना प्रक्रियाद्वयमुपलभ्यते । प्राचीना भारतीय-विज्ञानानुरूपिणी तथाधुनिकविज्ञानानुसारिणी च पाश्चात्यप्रक्रिया ।

पूर्वं भारतीयप्रक्रियायाः स्वरूपमुच्यते । अत्र पलभाज्ञानमावश्यकम् । पलभा-नयनप्रकारः—

मेषो रविरयनांशयुतो भवति यद्दिने ।
शङ्कुच्छायादिनार्द्धे तु पलभेत्युच्यते बुधैः ॥[1]

सूर्यस्पष्टोऽयनांशयुतो यस्मिन् दिने शून्यं भवति । अर्थान्मेषराशौ चांशकला-विकलादिकं शून्यं स्यात् । तस्मिन् दिने मध्याह्नकाले समभुवि भागे समसिद्धहस्ति-दन्तनिर्मितो द्वादशाङ्गुलशङ्कुर्निवेश्यः । तस्य शङ्कोर्मध्याह्नकालिकाछायैव पलभा-नाम्नोच्यते । अस्याश्छायाया अपि देशविभेदेन विभिन्नत्वं भवति । अतश्च यत्र जातकस्य जन्म भवेत्तन्नगरगायनमेषराश्यंशकलादिशून्यदिवसमध्याह्नकालिकच्छा-यानुसारेण पलभापरिमाणं पृथक् पृथक् चोपलभ्यते ।

---

१. बृ० पा० पू० भा० ३।३१ (मुम्बई-सं०)

अयनांशानयनप्रकारमाह—

अस्मिन् ग्रन्थे वेदाब्ध्यब्ध्यूनः खरसहृतः शकोऽयनांशाः। अर्थात्शकसंवत्सयसङ्ख्याया ४४४ सङ्ख्या हीना कार्या लब्धिं ६० सङ्ख्यया विभजेत् तल्लब्धिरयनांशो ज्ञेयः यथा हि शाकः संवत् १८८६ सङ्ख्याया ४४४ सङ्ख्यायां हीनायां १४४२ अत्र ६० सङ्ख्यया विभक्ते २४।२ इत्ययनांशस्पष्टः।[1]

काशीसंस्करणे चोपर्युक्तक्षेपकनाम्नि प्रकरणेऽन्यः प्रकारः—

**एकद्विवेदोनशकाः नवघ्ना**
**दिग्भिर्हृताश्चायनलिप्तिकास्ताः।**[2]

अंशीकृतार्कात् त्रिगुणान्तखाप्ततुल्याभिरेवं विकलाभिराढ्याः। अर्थादत्र शकसंवत्सरात् ४२१ सङ्ख्यां न्यूनीकुर्यात्। शेषञ्च ९ सङ्ख्यया गुणीकृत्य १० सङ्ख्यया च विभजेत्। लब्धिश्चायनकला ज्ञेयाः। तात्कालिकस्य सूर्यस्पष्टस्यांशादिकं विधाय ३ सङ्ख्यया च गुणीकृत्य २० सङ्ख्यया च विभजेत् लब्धिश्चायनविकला ज्ञेयाः। कलाश्च ६० सङ्ख्यया विभजेत् स एवायनांश ज्ञेयः। अयञ्च ज्योतिस्तत्त्वे मकरन्दीयायनांशनाम्ना प्रोक्तः।[3] पूर्वश्च ग्रहलाघवीयायनांशः।

ज्योतिस्तत्त्वे चैत्रपक्षीयायनांशसाधनप्रकारोऽपि दर्शितः।

**विलिप्तिकाद्या खशरास्त्रिचन्द्रा**
**नाकास्त्रिनाकोनशकेन गुण्याः।**
**क्रमाद्गजाङ्काब्धिवियुक्छकेन**
**पङ्क्त्याङ्कभूभिर्विकलाभिराढ्याः॥**[4]

---

१. बृ० पा० पू० भा० ३।३१ (मुम्बई-सं०)

२. बृ० पा० पृ० १७ (काशी-सं०)

३. चक्रधर शर्मा, ज्योतिस्तत्त्वम्, ३।४, श्री लक्ष्मीधर विद्यामन्दिर, देवप्रयाग।

४. तत्रैव, २०।३१-३२

अर्थात् शकीयसंवत्सरसङ्ख्यां स्थानद्वये स्थापयेत्। एकत्र २१२ सङ्ख्यया न्यूनीकुर्यात्। अन्यत्र च ४९८ सङ्ख्यया न्यूनीकुर्यात्। शेषद्वयं ५०,१३,२१ सङ्ख्याभिः पृथक् पृथक् गुणीकुर्यात् गुणनफले क्रमशः १०,१९ कलाविकलादिकं युक्त्वांशादिकं कुर्वीत। अर्थाल्लब्धविकलादिषु ६० सङ्ख्यया विभक्ते लब्धक्रमेण चैत्रपक्षीयो रैवतपक्षीयश्चायनांशो भवति।

अधुना चैत्रपक्षीयायनांशस्यैव बहुधा प्रचारः।

प्राचीनरीत्येष्टकालसाधनमाह—

*प्राचीनसरणिमनुसृत्य च सन्ति बहवः प्रकाराः इष्टकालानयनस्य चात्र* केवलं प्रकारद्वयमेव निरूप्यते। यथा हि ज्योतिस्तत्त्वे।[1]

प्रथमः प्रकारः—

यावत्यः प्रतिदिनमंघ्रिदीप्तयस्ताः।
संयुक्ता क्रियमुखषट्सु तर्कपादैः॥
वेदाग्निद्वियमगुणाब्धिभिस्तुलादि ।
षट्स्वेव द्युदलमगैर्हृतं च ताभिः॥
भवतं पलं प्रागपरे दलेऽह्नो यातास्तथैष्या घटिका भवेयुः।
सोषर्बुधा त्र्यङ्गुलशङ्कुभा या हृतास्तयाऽम्भोधिषडिष्टकालः॥

अयम्भावः—

सूर्यस्य सम्मुखं स्थित्वा यावद्दूरं शरीरस्य छाया गच्छेत्तस्याश्छायायाः स्वपादैर्मापनं कुर्यात् यावत्सङ्ख्यकाः पादा भवेयुस्तावत्सङ्ख्यका पादछाया चेष्टछाया कथ्यते। तस्यां छायापादसङ्ख्यायां वैशाखादिषट्मासेषु ६ सङ्ख्यां कार्तिकादि षट्मासेषु क्रमेण कार्तिके ४, मार्गशीर्षे ३, पौषे २, माघे २, फाल्गुने ३, चैत्रे ४ सङ्ख्यां युञ्जीत। सा सङ्ख्या भाजकेति ज्ञेया।

---

१. श्रीचक्रधर शर्मा, 'ज्योतिस्तत्त्वम्' २०।३१-३२। श्रीलक्ष्मीधर विद्यामन्दिर, देवप्रयाग।

जन्मदिवसस्य घट्यादिमानस्यार्द्धभागं (दिनार्द्धमिति) ७ सङ्ख्यया गुणीकुर्यात् । तस्यां सङ्ख्यायां पूर्वोक्तभाजकसङ्ख्यया विभजेत् । लब्धघट्यादिकं यदि दिनार्द्धस्य पूर्वार्द्धभागस्य भवेत्तदा स एव सूर्योदयादिष्टकाल इति ज्ञेयः । यदि दिनस्योत्तरभागीयं घट्यादिकं स्यात्तदा तद्दिनमानान् न्यूनीकुर्याच्छेषमिष्टकालघट्यादिकमिति बोध्यम् ।

उदाहरणम्—

शकीय १८८६ संवत्सरे चापाढमासस्य द्वाविंशतितमे दिवसे १६ सङ्ख्याका पादछाया । आषाढमासत्वात् ६ सङ्ख्याया योगे २२ सङ्ख्या सञ्जाता । दिनमानम् ३४।३६ दिनार्द्धं १७।१८ सप्तसङ्ख्यया गुणीकृते १२१।६ भाजकसङ्ख्यया २२ विभक्ते लब्धं ५ घटिका ३० पलादिकम् । इदञ्च दिनस्य पूर्वार्द्धभागीयत्वात्तदेवेष्टकाल इति ।

द्वितीयः प्रकारः—

**साकाशलोकापलभा दिनोना विभावरीमानहृता विभक्ता ।**
**द्युमाननाडीभिरिहाङ्गुलाद्या फलं भवेद्वासरखण्डदीप्तिः ॥**
**स्वेष्टप्रभादिक्सहिता दिनार्द्धछायाविहीना विहृतं तया च ।**
**दिनार्द्धमभ्रेन्दुहतं गतैष्या नाड्यो द्युपूर्वापरभागयोः स्युः ॥**[1]

पलभा सङ्ख्यायां ३० सङ्ख्यां युञ्जीत । तस्या दिनमानं न्यूनीकुर्यात् । शेषञ्च रात्रिमानेन गुणीकुर्यात् । पुनश्च दिनमानेन विभजेत् । लब्धिः मध्याह्नछाया भवति ।

पूर्वोक्तेष्टछायायां १० सङ्ख्यां युञ्जीत तस्या मध्याह्नछायासङ्ख्यां न्यूनीकुर्यात् लब्धिर्भाजिका सङ्ख्या ।

दिनार्द्धं १० सङ्ख्यया गुणीकृत्य भाजकसङ्ख्यया विभजेत् लब्धघट्यादिकं पूर्ववदिष्टकालो ज्ञेयः ।

---

१. श्रीचक्रधर शर्मा 'ज्योतिस्तत्त्वम्' २०।३३-३४, श्रीलक्ष्मीधर विद्यामन्दिर, देव प्रयाग ।

उदाहरणम्—

पलभा सङ्ख्या ७।०, अत्र ३० सङ्ख्यायोगे ३७।०, दिनमानम् ३४।३६ न्यूनीकृते २।२४, रात्रिमानेन २५।२४ गुणीकृते ६०।५८, पुनश्च दिनमानेन ३४।३६ विभक्ते २।५५ मध्याह्नछाया। इष्टछाया २३।१५, अत्र १० सङ्ख्यायोगे ३३।१५, मध्याह्नछायया न्यूनीकृते ३०।२०, पलादिपिण्डीकृते १८२०, पुनश्च १७।१८ दिनार्द्धे १० सङ्ख्यया गुणीकृते १७३।०, पलादिपिण्डीकृते १०३८०। अत्र पूर्वोक्तया १८२० पिण्डसङ्ख्यया विभक्ते लब्धं ५ घटिका ४२ पलादिकमेव पूर्ववदिष्टकालो ज्ञेयः।

प्राचीनप्रकारेणानीतेष्टकालस्य सूक्ष्मत्वे सत्यपि वर्तमानकाले नानुपयोगित्वं सौकर्याभावात्।

तथा च वर्तमानयुगे घटिकायन्त्रादिकस्य सुलभत्वात्तेनैव प्रतिपादितसमयानुसारेण घण्टामिण्टादिकस्य घटीपलादिके परिवर्तिते सूर्योदयादिष्टकालघटिकादिकं सौकर्येण भवितुमर्हति।

आधुनिकविज्ञानानुरूपिणीं पाश्चात्यप्रक्रियामाह—

अस्याः प्रक्रियाया ज्ञानार्थं पूर्वं घटीपलादिकस्य घण्टामिण्टात्मककालस्य विवरणं कथ्यते।

६० विपलानाञ्चैकं पलम्<br>
६० पलानाञ्चैका घटिका<br>
६० घटीनाञ्चैकमहोरात्रम् — इयं भारतीयपद्धतिः

पाश्चात्यपद्धतिः—

६० सैकेण्डानामेकं मिण्टम्।<br>
६० मिण्टानामेकं घण्टा इति।<br>
२४ घण्टानामेकमहोरात्रम्।

इष्टकालप्रकारमाह—

यस्मिन् घण्टामिण्टात्मके समये जन्म स्यात्तद्घण्टामिण्टात्मकात् कालात्

सूर्योदयकालीयघण्टामिण्टात्मकं न्यूनीकुर्यात् । लब्धं घण्टामिण्टात्मकं सार्द्धद्वयेन गुणीकुर्यात्तदेवेष्टकालघटिकापलादिकं भवति ।

उदाहरणम्—

कस्यचित्पुरुषस्य ११ घण्टा ३० मिण्ट इति काले जन्म सूर्योदयश्च ५ घण्टा ३० मिण्ट इति कालेऽस्ति । ११।३० कालात् ५।३० कालस्य न्यूनीकृते शेषं ६।०० इति घण्टाकालं सार्द्धद्वयेन गुणीकृते १५।० घटीपलादिकमिष्टकाल इति ज्ञेयः । अयं च मध्याह्नात्प्राग्ज्ञेयः । मध्याह्नोत्तरं १ घण्टा स्थाने १३ । २ घण्टास्थाने १४ इत्यादिज्ञेयन्तेनापि पूर्ववदिष्टकालानयनं भवति । यथा रात्रौ ११।३० इति जन्म तदा ११।३० स्थाने २३।३० इति ज्ञेयम् ५।३० । सूर्योदयस्य न्यूनीकृते १८।०० इति भवति । सार्द्धद्वयेन गुणीकृते ४५।०० घटीपलादिकमिष्टकाल इति ।

सूर्योदयज्ञानप्रकारः—

नवीनप्रणाल्या सूर्योदयज्ञानार्थमक्षांशरेखांशानां ज्ञानमावश्यकम् । सकलस्य भूमण्डलभागस्य विश्वमानचित्रे नवतिसङ्ख्याका अक्षांशाः सन्ति । रेखांशानां च ज्ञानं 'ग्रीनविच' इति चांगलदेशीयभूमध्यभागरेखास्थानाद्भवति । रेखांशानामक्षांशानाञ्च सौकर्येण 'यूनिवर्सिटी एटलस' 'आक्सफोर्ड एटलस' इत्यादिकेषु पुस्तकेषु भवितुमर्हति । विश्वस्य प्रमुखनगराणामक्षांशरेखांशज्ञानमत्राङ्कितं विद्यते ।[1]

पलभाज्ञानेनाक्षांशस्यापि चानयनप्रकारोऽत्र दर्शितः । अक्षांशज्ञानेन तु पलभाज्ञानमपि चेत्थमेव स्पष्टमत्र ।

यथा हि ज्योतिस्तत्त्वे—

**अक्षछायाबाणनिघ्नाक्षभाया वर्गांशांशप्रोज्झिताः स्युः पलांशाः ।**
**सौम्याशायास्तेभ्यः आर्यैः पुराणैरक्षछाया साध्यते व्यस्तरीत्या ।।**[2]

---

१. हारोल्ड फुल्लर्ड तथा एच० सी० डर्बी, दी यूनिवर्सिटी एटलस्, जार्ज फिलिप एण्ड सन् लिमिटिड, लन्दन, अष्टमं संस्करणम् ।

२. श्रीचक्रधर शर्मा 'ज्योतिस्तत्वम्' ३।१३, श्रीलक्ष्मीधर विद्यामन्दिर, देवप्रयाग ।

## (ऋ) षोडशवर्गविचार्यवस्तूनां निर्देशः

अथ षोडशवर्गेषु किं विचार्यमिति प्रश्नोत्तरमाह ।

लग्ने शरीरसौख्यादिकस्य होरायां सम्पदादिकस्य, द्रेष्काणे भ्रातृणां चतुर्थांशे सौख्यादिकस्य भाग्यस्य च, सप्तमांशे पुत्रपौत्रादिकानां, नवांशे स्त्रीसौख्यस्य, दशमांशे राज्यादिकस्य महत्फलस्येति च, द्वादशांशे मातापित्रोः, षोडशांशे सुखासुखविज्ञानस्य वाहनादिकस्य च, विंशांशे उपासनायाः, चतुर्विंशांशे विद्यायाः, सप्तविंशांशे बलाबलस्य, त्रिंशांशेररिष्टारिष्टस्य, चत्वारिंशांशे ( खवेदांशे ) शुभाशुभस्य, चतुश्चत्वारिंशांशे ( अक्षवेदांशे ) षष्ट्यंशे च सकलवस्तुजातस्य विचारो विधेय इति ज्ञेयम्[1] ।

अत्र वैशिष्ट्यमाह—

यस्मिन् भावे क्रूरषष्ट्यंशेशो ग्रहो भवति तस्य भावस्य हानिरिति ज्ञेया । यत्र च षोडशाधिपतिः स्थितो भवति तस्य भावस्य वृद्धिः पुष्टिश्च भवतीति बोध्यम् ।

## (ख) विशेषलग्नस्पष्टीकरण-प्रकारः[1]

फलितज्ञानोपलब्ध्यै अस्मिन् ग्रन्थे जन्मलग्नवदन्येषामपि केषाञ्चिल्लग्नानां स्पष्टीकरणं निर्दिष्टं विद्यते । तानि च लग्नान्यपि फलकथने चोपयुक्तानीति ज्ञेयम् । भावलग्नहोरालग्न-वर्णदलग्न-घटीलग्नानि च नामानि तेषाम् । होरालग्नस्य विचार आयुर्दायविचारे चोपयोगी । अन्यत्रापि वर्णददशादिषुचाप्युपलभ्यते । एषां लग्नानां राजयोगादिष्वपि महत्त्वं विद्यते तथाहि—'भावहोराघटीसंज्ञलग्नानि च प्रपश्यति स्वोच्चग्रहो राजयोगो लग्नद्वयमथापि वा' ।[2] जैमिनीयसूत्रेऽपि 'जन्मकालघटिकास्वेकदृष्टासु राजान' ।[3]

---

१. बृ० पा० भा० १० अध्यायः ( मुम्बई सं० )

२. बृ० पा० ३६ । २४ ( काशी-सं० )

३. अच्युतानन्द झा, जैमिनिसूत्रम् १ । ३ । २४, चौखम्बा संस्कृत सीरिज़, बनारस ।

## (अ) भावलग्नानयनविधिः

भावलग्नं घटीपंचकात्मकमर्थादेकस्मिन्नहोरात्रे पंचकलात्मका द्वादश-भावलग्नानि भवन्ति ।

आनयन-प्रकारमाह—

जन्मेष्टघटिका-पलादिकं पञ्चभिर्विभजेत् लब्धिर्राशिरुच्यते। शेषं त्रिंशद्भिर्गुणीकृत्य पञ्चभिर्विभजेत् लब्धिरंशा इत्युच्यन्ते। पुनश्च शेषं षष्टिभिर्गुणीकृत्य पञ्चभिर्विभजेत् लब्धिः कला उच्यन्ते। पुनश्च शेषं पूर्ववत् षष्ठिसङ्ख्यया गुणीकृते पंचसङ्ख्यया च विभक्ते लब्धिर्विकला इति शेयम्। एवं लब्धं राश्यंशकलाविकलादिकं जन्मलग्ने युञ्जीत, तच्च भावलग्नं भवतीति। सूर्योदयं-समारम्य घटिकानां तु पञ्चकं प्रयाति जन्म-पर्यन्तं भावलग्नं तथैव च।[1] इति जैमिनिसूत्रे नीलकण्ठ कृत-टीकायां वृद्धानुवचनम्।

मुम्बई-संस्करणे तु विषमलग्ने सति सूर्यराश्यनुसारं समलग्ने जन्मलग्नानुसारं गणयेत्।[2] काशीसंस्करणे तु भेदः। 'इष्टं घट्यादिकं भक्त्वा पञ्चभिर्भादिजं फलम्।योज्यमौदयिके सूर्ये भावलग्नं स्फुटं च तत्। अर्थादत्रोदय-कालीये सूर्यस्पष्टे लब्धराश्यादिक संयोगे भावलग्नं स्फुटं भवति। जैमिनीयसूत्रस्य प्रो० बी० सूर्यनारायणराव कृत टीकायां भावलग्नं न तु विशिष्टलग्नम्। अपितु साधारणं जन्मलग्नमेव कथ्यते।[3]

अनेन प्रकार-चतुष्टयं भवति भाव-लग्नस्य।

( १ ) जन्मेष्टकालं पञ्चभिर्भक्त्वा लग्ने युंजीत।

( २ ) जन्मेष्ट-कालं पञ्चभिर्भक्त्वा विषमे लग्ने सूर्यस्पष्टे समलग्ने जन्मलग्नस्पष्टे च युञ्जीत।

( ३ ) जन्मेष्टकालं पंञ्चभिर्विभज्योदयकालीये सूर्यस्पष्टे युञ्जीत।

( ४ ) जन्मलग्नमेव भावलग्नमिति।

---

१. नीलकण्ठकृत टीका, जैमिनिसूत्राणि १। १। ३२, पृ० १३, खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर स्टीम् प्रेस, मुम्बई।

२. बृ० पा० पू० भा० १०। ३, ४ ( मुम्बई-सं० )

३. बी० सूर्यनारायण राव, जैमिनिसूत्राज, पृ० ३४, रमण पब्लिकेशनज् बंगलोर, तृतीय-संस्करणम्।

अत्र द्वितीयप्रकार एवोचितः। अस्यैव वृद्धानुवचनानुसारं प्रामाण्यम्। मुम्बई संस्करणे चाप्यस्यैव पठ्स्योल्लेखः। तथाहि—

> **ओजलग्ने यदालग्नं सूर्यराश्यनुसारतः।**
> **समलग्ने जन्मलग्नाद्यत्सङ्ख्या**
> **प्राप्यते द्विज भावलग्ने विजा**
> **नीयाद्धोरालग्ने तदोच्यते ।**

कल्पितोदाहरणम्—[1]

इष्टम् ६। १७ जन्मलग्नम् ३। ८, जन्मेष्टस्य ५, सङ्ख्यया विभक्ते शेषं १। १७, समलग्नत्वाज्जन्मलग्नकर्कादिगणिते द्वितीयं सिंहलग्ने बोध्यम्।

## (इ) होरालग्न स्पष्टीकरणप्रकारः—

जन्मेष्टकालीय-घटीपलादिकं द्विसङ्ख्यया गुणीकृत्य पञ्चसङ्ख्ययाविभजेत् लब्धंराश्यादिकमुदयकालीये सूर्यस्पष्टे युञ्जीत। तच्च होरालग्नं भवतीति काशीसंस्करणे। यथाहि—

> **इष्ट-घट्यादिकं द्विघ्नं पञ्चाप्तं भादिकं च यत्।**
> **योज्यमौदायिके भानौ होरालग्नं स्फुटं हि तत्॥**[2]

इत्येक-प्रकारः। अयमेव प्रकारो जातकतत्वेऽपि निर्दिष्टः।[3]

जन्मेष्टघटिपलादिकं सार्द्धद्विसङ्ख्यया विभजेत् लब्धिश्चांशा राशिर्भवति। शेषं त्रिंशत्सङ्ख्यया गुणीकृत्य सार्द्धद्विसङ्ख्या विभजेत् लब्धिचांशा उच्यते। एवं पुनश्च शेषं षष्टिसङ्ख्यया गुणीकृत्य सार्द्धद्विसङ्ख्यया विभजेत् लब्धिः कलाः भवन्ति। एवमेव विकला अपि ज्ञेयाः एतच्च लब्धराश्यादिकं विषमे लग्ने सूर्य-स्पष्टे समलग्ने तु जन्मलग्नस्पष्टे तदेव युञ्जीत होरालग्नमिति ज्ञेयम् इति। द्वितीयप्रकारः अयमेव मुम्बईसंस्करणे पाठः।

---

१. बृ० पा० पू० भा० १०। ३, ४ (मुम्बई-सं०)

२. बृ० पा० ५। ५, काशी-सं०

३. श्रीनिवास महादेव पाठक, जातकतत्व, पृ० ३१५ टिप्पण्याम्, श्री भुवनेश्वरी पुस्तकालय, रतलाम (षष्ठ संस्करणम्)।

नीलकण्ठाचार्यमते तु जन्मेष्टकालघटिकापलादिकं सार्द्धद्विसङ्ख्यया विभज्य लब्धराश्यादिकं जन्मलग्ने एव युञ्जीतेति तृतीयप्रकारः।

अत्रापि द्वितीयप्रकारस्यैवोचित्यम्।

मुम्बई-संस्करणे भावलग्नार्थं होरालग्नार्थं च तृतीय-प्रकारस्योल्लेखः केषाञ्चिन्मते चोद्धृतः। तथाहि।

केचिल्लग्नाद्ददंत्येव होरालग्नं विचिन्तयेत्।
भावलग्नान्तं चिन्तयेद्द्विजसत्तम।[1]

अतश्च होरालग्नार्थं भावलग्नार्थञ्च प्रकारद्वयस्य मुम्बईसंस्करणे चोल्लेखो वर्तते परञ्च विषमसमलग्नभेदेन सूर्ये जन्मलग्ने च लब्धराश्यादिसंयोग-प्रकार एवोचित इति ज्ञायते।

जैमिनीयसूत्रस्यांगलभाषाव्याख्यायां प्रो० सूर्यनारायण-राव-महोदयेनापि जन्मेष्टकालघटिकादिकं सार्द्धद्विसंख्यया विभज्य सूर्यराश्यनुसारमेव होरालग्नस्य गणना स्वीकृता।[2] तच्च लग्नस्य विषम-समसंख्यानुसारं बोध्यमित्युक्तम्। स्पष्टो भावोनास्त्यत्र तथापि विषमसम-संख्यानुसारं सूर्यस्पष्टे जन्मलग्ने स्पष्टे च लब्धराश्यादिकस्य संयोगार्थमेव प्रतीयते।

भारतीय-ज्योतिष नाम्नि पुस्तकेऽपि होरालग्नार्थं लब्ध-राश्यादिकस्य सूर्यस्पष्टे योगार्थमेवनिर्दिष्टम्।[3] इदमेवाभिमतं भारतीयकुण्डली-विज्ञानकर्तुः। उद्धृतञ्चेदं पद्यम्।[4]

---

१. बृ० पा० पू० भा० १०। ७ (मुम्बई-सं०)

२. बी० सूर्यनारायण राव जैमिनिसूत्राज् पृ० ३५, रमण पब्लिकेशनज्, बंगलोर (तृतीय संस्करणम्)

३. नेमिचन्द्र, भारतीय ज्योतिष पृ० ४३७, भारतीय ज्ञानपीठ काशी (तृतीय संस्करणम्)

४. मीठालाल हिमतराम ओझा, भारतीय कुण्डली विज्ञान, पृ० ८०, परमहंस संस्कृत पाठशाला ३४।५१ लाहौरी टोला, बनारस।

द्विघ्नेष्टनाड्यः पञ्चाप्ताभं शेषञ्च पलीकृतम् ।
दशाप्तांशास्ते युक्ता रवौ होरोदयं भवेत् ।

सुगमज्योतिष-कर्त्रा[1] फलित-प्रकाशपुस्तक-कारेण चेदमेव पद्यमुद्धृत्याग्रेऽवशिष्टं पद्यमपि लिखितम् ।[2]

विषमेऽङ्के रवौयोज्यं समेऽङ्के लग्नभादिषु

(उ) घटीलग्नानयनविधिः—

अत्रापि प्रकारद्वयमुपलभ्यते—

प्रथमः प्रकारः—

"लग्नादेकघटीमात्रं याति लग्नं दिने दिने ।
परन्तु घटिका-लग्नं निर्दिशेत्कालवित्तमः ।"

इति जैमिनीयसूत्रस्य व्याख्यायामाचार्यनीलकण्ठः[3] अयं भावः । जन्मलग्नसंख्यायामिष्टकालघटीसंख्यां संयोज्य द्वादशभिर्विभजेत् । शेषं घटिकालग्नं विजानीयात् । अत्रेष्टकालघटिकानुसारं लब्धराशिसङ्ख्यया सह जन्मलग्न सङ्ख्यायाः संयोगः ।

द्वितीयः प्रकारः—

जन्मेष्टकालघटिकानुसारं राशिसङ्ख्यां विजानीयात् । पलानि च द्विसङ्ख्यया विभजेत् लब्धिश्चांशा ज्ञेयाः । द्वादशसङ्ख्याधिक्ये राशिसङ्ख्यां

---

१. देवीदत्त जोशी, सुगम ज्योतिष पृ० २३७, मास्टर खेलाड़ीलाल एण्ड संस बनारस, (द्वितीय संस्करणम्)
२. बालमुकुन्द पाण्डेय, फलित प्रकाशः, पृ० ११५, बैजनाथ प्रसाद बुक सेलर, काशी ।
३. नीलकण्ठकृत-टीका जैमिनिसूत्राणि १।३।२४ पृ०३३, खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर प्रेस, मुम्बई ।

द्वादशभिर्विभजेत् । एवं लब्धराश्यंशादिकमुदयकालीय-सूर्यस्पष्टे युञ्जीत । लब्धं घटीलग्नं भवतीति ज्ञेयम् । द्वितीयः प्रकारः काशी-संस्करणे ।[1]

अत्रापि प्रथम—प्रकारस्यैवोल्लेखो मुम्बई-संस्करणे—

"घटीलग्नं प्रवक्ष्यामि शृणु त्वं द्विजसत्तम
सूर्योदयात्समारभ्य जन्मकालावधिक्रमात् ।
या चित्या घटिका जाता तन्मध्ये चार्कभाजिता ।
एकैकघटिका विप्र एकैकं लग्न संज्ञकः ।
भानुस्तिष्ठेच्छिष्टघटीर्गणयेज्जन्मलग्नत इति ।[2]

प्रो० सूर्यनारायण-राव-महादयेन चोदयकालीयसूर्यराश्यनुसारं घटिका-लग्नानयन-प्रकार एव स्वीकृतः ।[3]

अत्र प्रकारद्वयमध्ये कश्चोचितस्तत्र मूलं मृग्यम् । तथापि जन्मलग्नानुसारं घटिकालग्नानयनप्रकार एव मह्यं समीचीनो दृश्यते ।

## (ऋ) वर्णादलग्नस्पष्टीकरणविधिः[4]

आनयनप्रकारः । वर्णदलग्नं जन्मलग्नहोरालग्नाभ्यामानीयते । जन्मलग्नं होरा-लग्नञ्च यदि विषमसङ्ख्याकं भवेत्तदा क्रमेण मेषादि-राशितो यदि समसङ्ख्याकं भवेत्तदा च व्युत्क्रमेण मीनादिराशितो गणयेदिति । अथ च लग्नद्वयमेव विषम-सङ्ख्याकं सम-सङ्ख्याकं वा सजातीयं भवेत्तदा द्वयोरेव स्पष्टयोर्योगं विदध्यात् । विजातीयत्वे तु द्वयोरन्तरं कुर्यादर्थाद्यदि होरालग्नं समं स्यात्तथा जन्मलग्नं विषमं भवेदथ वा जन्मलग्नं समं स्याद्धोरा लग्नं च विषमं भवेत्तदा विजातीयत्वे *द्वयोः स्पष्टयोरन्तरं कुर्याद् ।*

---

१. बृ० पा० ५।६-१, (काशी-सं०)
२. बृ० पा० पू० भा० १०।२६-३० (मुम्बई-सं०)
३. बी० *सूर्यनारायण राव, जैमिनि सूत्राज्, पृ० ३५, रमण पब्लिकेशनज्, बंगलोर ।*
४. बृ० पा० पू० भा० १०।११-२८ (मुम्बई-सं०)

एवं च द्वयोर्योगस्यान्तरस्य वा विषम-राशीये क्रमेण (मेषवृषादिक्रमेण) समराशीये तु व्युत्क्रमेण (मीनराशितः कुम्भमकरादिव्युत्क्रमगणनयेति भावः) वर्णदलग्नं ज्ञेयम् ।

कल्पितोदाहरणम्—

विषमसङ्ख्याकं लग्नं कुम्भः । होरालग्नं मीनञ्च समसङ्ख्याकम् ।

लग्नस्य विषमत्वे क्रमेण सङ्ख्या मेषादितः ११ विद्यते । होरालग्नस्य समत्वे व्युत्क्रमेण मीनादितः १ सङ्ख्या भवति । द्वयोः संयोगे १२ समसङ्ख्या सञ्जाता । अत्र मीनादिव्युत्क्रमेण गणनायां कृतायां द्वादश सङ्ख्यया मेषलग्नमेव वर्णदलग्नमिति ज्ञेयम् ।

स्पष्टज्ञान प्रकारः—

लग्नस्पष्टः १०।२६।२८।५ होरालग्नस्पष्टः ११।१०।३३।२७ । लग्नस्य कुम्भराशित्वे विषमत्वमतश्च तस्य स्फुटन्तथैव विद्यते होरालग्नस्य मीनराशौ समत्वे द्वादशसङ्ख्याया न्यूने कृते १२।०।०।०—११।१०।३३।२७=०।१९।२६।३३ इति लब्धम् ।

द्वयोः (१०।२६।२८।५ लग्नस्य ०।१९।२६।३३ लब्धहोरा-लग्न-स्फुटस्य संयोगे ११।१५।५४।३८ इति मीनराशिः समसङ्ख्या संजाता । ततश्च व्युत्क्रमेण द्वादशसङ्ख्याया न्यूनीकृते (१२।०।०।०—११।१५।५४।३८=०।१४।५।२२ वर्णदलग्नस्पष्टः सञ्जातइति ।

## (ल) निषेकलग्नविचारः—[1]

आधानलग्नस्यापि विचारो ज्योतिष शास्त्रे महत्त्वपूर्णः प्रतिपादितः । परञ्च गर्भाधानसमयो ज्ञातुं न शक्यते समयज्ञानाभावाच्च निषेकलग्नस्य स्पष्टा-

---

१. बृ० पा० ३।२९-३० (मुम्बई-सं०)

दिकं न भवितुमर्हति। अतश्चात्र ग्रन्थकारेण जन्मलग्नादेव गर्भाधानलग्नस्यानयन-प्रकारो दर्शितः।

गर्भाधानलग्नायनप्रकारमाह—

जन्मलग्ने यत्र सूर्यः स्थितो भवेत्तस्माद्भावान्मांदे भावपर्यन्तं यदन्तरं भवेत्तदेकत्र संस्थाप्यम्। तत्र लग्न-नवमभावयोर्यदन्तरं तच्च संयोज्यं लब्धराश्यादिकानुसारं जन्मलग्नात्पूर्वं विषेकलग्नस्य मासादिकं ज्ञेयम्। ततश्च जन्मलग्नस्य भोग्यांशादिकं चन्द्रस्य भुक्तांशादिके संयोज्यम्। तत्कालानुसारं पूर्वोक्तजन्म-लग्न-प्रक्रियावच्च निषेकलग्नं संशोध्यम्। तच्चाधानलग्नस्य स्फुटादिकं भवति।

## (ए) निषेकलग्नफलकथनम्—

निषेकलग्नस्य यदि ज्ञानं जन्मकालात्पूर्वमेव भवति तदा तस्य स्पष्टादिकं कृत्वा गर्भस्थस्य जीवस्य शुभाशुभज्ञानं जातकफलानुसारं वाच्यम्। जन्मानन्तरं निषेकलग्नानुसारमपि मातापित्रोर्जीवनमरणादिकस्य ज्ञानादिकं शुभाशुभफलञ्च ज्ञातुं शक्यते।

अस्यैव निषेकलग्नस्य शुभाशुभफलस्य पल्लवनं जातक-पारिजातादि-ग्रन्थेषु विस्तरेण दृश्यते। परञ्च तत्र जन्मलग्नान्निषेकलग्नानयनप्रकार चर्चाया अभावः।

## (ग) विश्वाबलानयनमाह[1]—

शुभाशुभ-फलज्ञानार्थं लग्नादिद्वादशभावानां ग्रहाणां च राश्यादिकस्पष्टानुसारमानीतं विश्वाबलमतीवोपयोगि। अतश्च तस्य ज्ञानमावश्यकमिति मत्वा तदानयन-प्रकारश्च निरूप्यते।

सर्वे ग्रहा स्वोच्चगृहादिके पूर्णं बलं धारयन्ति। स्वोच्चात्सप्तमे नीचादौ शून्यं बलं प्रयच्छन्तीति भावः मध्ये स्वोच्चात्सप्तमभावमध्ये चानुपातेन पूर्णा-पूर्णात्मकं बलं ग्राह्यम्।

---

१. बृ० पा० ३।११२-१३४, (मुम्बई-सं०)

## (अ) होरादिवर्गाणां विश्वाबलविचारः—

गुरुसूर्यभौमाः सूर्यस्य होराफलं शनिशुक्रचन्द्राश्च चन्द्रस्य होराफलं प्रयच्छन्ति। बुधस्तूभयोः सूर्यचन्द्रयोः होराफलं ददाति।

विशेषमाह—

समराशिषु चन्द्रस्य विषमराशिषु च सूर्यस्य होराफलं विशेषेण भवतीति ज्ञेयम्।

पुनरपि विशेषमाह—

होरादिकवर्गस्य मध्ये पूर्णं फलं भवति शून्यञ्चान्ते ज्ञेयम्। मध्ये तु सर्वत्रानुपातेन (त्रैराशिकन) ज्ञेयम्। एवमेव द्रेष्काणचतुर्थांशनवांशादावपि च बोध्यम्।

त्रिंशांशे विशेषमाह—

त्रिंशांशे सूर्यो-भौमस्य, चन्द्रः शुक्रस्य सदृशं फलं धारयतः। एवमत्रापि गृहवदेव फलं बोध्यम्।

षड्वर्गाणां विंशोपकानाह—

लग्नहोराद्रेष्काणनवांशद्वादशांशत्रिंशांशानां षड्वर्गाणां क्रमात् ६, २, ४, ५, २, १ सङ्ख्याका विश्वका ज्ञेयाः।

सप्तवर्गानां विंशोपकानाह—

लग्नहोराद्रेष्काणसप्तांशनवांशद्वादशांशत्रिंशाशा इति सप्तवर्गाः प्रोक्ताः। सप्तवर्गानां विश्वाबलानयनज्ञाने सति क्रमेण ५, २, ३, २½, ४½, २, १ सङ्ख्याका विश्वका बोध्याः।

दशवर्गाणां विश्वकानाह—

लग्नहोराद्रेष्काणसप्तांश-नवांशदशांशषोडशांशत्रिंशांशषष्ट्यंशा इति दशवर्गाः प्रोक्ताः। तेषाञ्च क्रमेण लग्नस्य ३, षष्ट्यंशस्य ५ शेषानाञ्च सर्वेषां १½ इति प्रत्येकस्य विश्वकसङ्ख्या परिज्ञेया।

षोडशवर्गाणांविश्वकानाह—

लग्नहोराद्रेष्काणचतुर्थांशसप्तमांश-नवांश-दशांशद्वादशांशषोडशांशविंशांश-चतुर्विंशांशसप्तविंशांश त्रिंशांशखवेदांशाक्षवेदांशषष्ट्यंशाश्च षोडशवर्गाः प्रोक्ताः। तत्र होराद्रेष्काणत्रिंशांशानां प्रत्येकस्य १, षोडशांशस्य २, नवांशस्य ३, लग्नस्य ३½, षष्ट्यंशस्य च ४, शेषानां वर्गाणां प्रत्येकस्य ½ (अर्द्धम्) इति विश्वका ज्ञेयाः। एवं विंशसङ्ख्यात्मकं सर्वयोगे बलं भवति। एवञ्च स्ववर्गस्थस्य २०, अधिमित्रस्थस्य १८, मित्रस्थस्य १५, समस्थस्य १०, शत्रुस्थस्य ७, अधिशत्रुस्थस्य च ५, विश्वकबलं ज्ञेयम्।

## (इ) विश्वकबलस्पष्टानयन-विधिः—

वर्गादिकानुसारं प्राप्तं विश्वकबलं स्वविश्वकबलेन गुणीकृत्य विंशति-सङ्ख्यया विभजेत्। लब्धं च स्पष्टं विश्वकबलं भवति। तच्च १५ सङ्ख्यातः २० सङ्ख्यान्तं पूर्णफलदं १० सङ्ख्यातः १५ सङ्ख्यान्तं मध्यफलदं ५ सङ्ख्यातः १० सङ्ख्यान्तमल्पफलदं ५ सङ्ख्यातो हीनञ्च शून्यफलदं विश्वकं बलं वाच्यम्।

अत्र विशेषमाह—

सूर्यात्सप्तमभावस्थो ग्रहः पूर्णं फलं प्रयच्छति। सूर्यतुल्यस्पष्टादिको ग्रहः शून्यफलप्रदो ज्ञेयः मध्ये च त्रैराशिकरीत्यानुपातेन ज्ञेयम्।

पुनरपि विशेषमाह—

ग्रहाणां भावानाञ्च विश्वकबलं विज्ञाय ग्रहाणामुदयास्तत्वमपि विचार्यम्। तथा च सर्वत्र भेदद्वयं क्रमेण बोध्यम्। १५ सङ्ख्यातः १७½ सङ्ख्यान्तं पूर्णं १७½ सङ्ख्यातः २० सङ्ख्यान्तमतिपूर्णं १० सङ्ख्यातः १२½ सङ्ख्यान्तं मध्यं १२½ सङ्ख्यातः १५ सङ्ख्यान्तमतिमध्यं २½ सङ्ख्यातः ५ सङ्ख्यान्तं हीनं शून्यात् २½ सङ्ख्यान्तमतिहीनं बलं ग्राह्यम्। तत्रापि स्वल्पातिस्वल्पादिकमपि ज्ञेयम्। यथा ७½ सङ्ख्यातः १० स्वल्पं ५ सङ्ख्यातः ७½ सङ्ख्यान्तमति-स्वल्पादिकमिति सूक्ष्मेण ग्रहाणां विश्वकबलानुसारं दशादिषु फलं वाच्यम्।

## (घ) समीक्षा—

### (अ) पूर्वपरम्परा—

राशीनां स्वरूपादिकस्य नारदमहापुराणे—होरादिषड्वर्गस्य च चर्चा स्पष्टरूपेण दृश्यते । सनन्दननारदसंवादोऽयम् । अतश्च पराशरान्नारदसनन्दनयोः पूर्वपरम्परा स्पष्टा विद्यते[1]। इदं होराशास्त्रं ब्रह्मणा गर्गाय प्रदत्तं गर्गाच्च पराशरेणाधिगतिमिति स्पष्टमस्मिन् ग्रन्थे । ततश्च गर्गस्यापि पूर्ववर्त्तित्वं पराशरादिति स्वतः सिद्धम्[2] राशीनां तेषां नामानाञ्च चर्चा स्पष्टतया रामायणे महाभारते चापि दृश्यते । अत्र लग्नशब्दस्य वर्णनमपि स्पष्टम् । अतश्च राशीनां लग्नादिकस्य वर्णनमतीव पुरातनं विद्यते ।[3]

राशीनां चर्चाप्रश्ने सुप्रसिद्धेन भारतरत्नोपाधियुतेन प्रो० पी० वी० काणे महोदयेनेदं भारतस्य राज्यसभायां कथितं यत्खिष्टाब्दात्पूर्वं भारतीय-वाङ्मये राशीनां चर्चा नोपलभ्यते । तस्य मतस्य सप्रमाणं पद्मभूषण डा० सूर्यनारायण व्यास महोदयेन ज्योतिषाचार्येण 'भारत में राशि चक्र का ज्ञान' इति निबन्धे निरसनं कृतमस्ति । तथा चेदं प्रतिपादितं यद्राशि ज्ञानं खिष्टाब्दात्पूर्वं रामायणे महाभारते चोपलभ्यते ।[4]

प्रो० पी० वी० काणे महोदयेनापि हिस्ट्री-आफ-धर्मशास्त्र-नाम्नि पुस्तके राशिलग्नस्य प्रसंगेऽपीदमेव रामायणोद्धरणं प्रदत्तमस्ति ।[5]

---

१. नारदमहापुराणम् (१।२।५५।१-१३) कल्याण संक्षिप्त नारदविष्णुपुराणांक, जनवरी १९५४, गीता प्रेस, गोरखपुर ।

२. वृ० पा० उ० भा० २०।३, ४,

३. सरस्वती मासिका पत्रिका, पृ०२३१, २३३, अक्टूबर मास १९५५, इलाहाबाद ।

४. तत्रैव, पृ० २२९-२३४ ।

५. प्रो० पी० वी० काणे, हिस्ट्री आफ धर्मशास्त्र, पृ० ६२७, भण्डारकर ओरियण्टल रिसर्च इन्स्टीच्यूट, पूना ।

श्री-शङ्कर-बालशङ्करदीक्षित महोदयेनभारतीयज्योतिषनाम्नि पुस्तके मेषादिराशीनां खिष्टाब्दात् पञ्चशतवर्षपूर्वमस्तित्वमासीदिति लिखितम् ।[1]

अतश्चेदं स्पष्टं यद्राशीनां ज्ञानं भारतीयवाङ्मयेऽतीव पुरातनमिति ।

*विष्णुधर्मोत्तरमहापुराणेऽपि लग्नस्य तस्य षड्वर्गस्य च चर्चा स्पष्टतया-* दृश्यते ।

**'लग्नं च होरा च तथा द्रेष्काणं नवांशकं द्वादशभावसंज्ञकम् ।**
**त्रिशांशकं चाप्यथषष्ठमत्र षड्भेदमाहुर्मुनयश्च लग्नम् ।।"**

## (इ) उत्तरवर्त्तिषु प्रभावः—

पराशरात्परवर्तिना जैमिनिना तु राशीनां दृष्टि-विन्यासस्य भावघटी-होरावर्णदलग्नानामनुकरणं विहितम् । षोडशवर्गाणां चर्चाया अत्राभावः ।[3]

वराहमिहिरेण बृहज्जातके प्रथमाध्याये एव राशिस्वरूपवर्णनं विहितम् । चतुर्थाध्यायो निषेकाध्यायनाम्नांकितः ।

भाव होराघटीवर्णदलग्नानां चर्चा न दृश्यते षोडशवर्ग स्थाने षड्वर्गाणामेव वर्णनमस्ति ।[4]

सारावल्यां कल्याणवर्मणा तृतीयाष्टमाध्यायौ राशिभेदाधान नाम्नाङ्कितौ । अत्र वराहमिहिरस्यैवानुकरणम् ।[5]

---

१. शिवनाथ झारखण्डी, श्री शङ्करबालकृष्ण दीक्षित कृत भारतीय ज्योतिष; पृ० ६६६, प्रकाशन ब्यूरो, सूचना विभाग, उत्तर प्रदेश ।

२. *विष्णुधर्मोत्तर महापुराणम्, खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर स्टीम् प्रेस,* मुम्बई, पृ० ४८-६५ ।

३. अच्युतानन्द झा, जैमिनिसूत्रम् १।१।२, १।३।२४, चौखम्बा संस्कृत सीरिज, बनारस ।

४. सीताराम झा, बृहज्जातकम् १, ४ तमौ अध्यायौ, मास्टर खेलाड़ीलाल एण्ड सन्स, बनारस ।

५. सीताराम झा, सारावली, ३, ८ तमौ अध्यायौ, मास्टर खेलाड़ीलाल एण्ड सन्स, बनारस ।

जातक पारिजाते श्री वैद्यनाथमहोदयेन राशि शीलनाम्ना प्रथमोऽध्यायो लिखितः अत्र च तेन राशीनां विशदं वर्णनं विहितम्। षोडशवर्गस्थाने दशवर्गानामुल्लेखः कृतः।

तृतीये वियोनिजन्माद्यध्याये निषेकलग्नस्यापि वर्णनं विहितम्। भावहोरादिविशिष्टलग्नानां चर्चाऽत्रापि नास्ति।[1]

आचार्येण पुञ्जराज महोदयेन शम्भुहोराप्रकाशे पूर्ववत्प्रथमाऽध्यायो राशि भेदनाम्ना चतुर्थश्च निषेकनाम्नांकितौ। अत्र जातकपारिजातवदेव वर्णन दृश्यते। अत्रापि भावहोरादिकलग्नानां चर्चा न दृश्यते।[2]

सर्वार्थचिन्तामणौ व्यंकटेशेन संज्ञानाम्नि प्रथमाध्याये राशीनां स्वरूपादिकस्य विशदं वर्णनं विहितम्। षोडशवर्गाणामुल्लेखोऽपि कृतः। वैशिष्ट्यं नोपलभ्यते।[3]

कालिदासकृते उत्तरकालामृते जन्मकाललक्षणनाम्ना प्रथमः खण्डो लिखितः। अत्र लग्नस्य राशीनां च वर्णनं संक्षेपेणैव दृश्यते।[4]

फलदीपिकायां मन्त्रेश्वरेण प्रथमाध्याये राशीनां स्वरूपादिकस्य वर्णनं कृतम्। विशेषश्च न दृश्यते।[5]

दैवज्ञाभरणे द्वित्तीयतृतीयौ प्रकाशौ राशिविवेचनलग्नविवेचननाम्ना

---

१. कपिलेश्वर शास्त्री, जातक पारिजातः, १, ३ तमौ अध्यायौ, चौखम्बा संस्कृत सीरिज् बनारस।
२. महीधर शर्मा, शंभुहोरा प्रकाश १, ४ तमौ अध्यायौ, गंगाविष्णु श्रीकृष्णदास, लक्ष्मी वेंकटेश्वर स्टीम् प्रेस, कल्याण, बम्बई।
३. सर्वार्थचिन्तामणिः (१ मो अध्यायोः) गंगाविष्णु श्रीकृष्णदास लक्ष्मी वेङ्कटेश्वर प्रेस, कल्याण, बम्बई।
४. वी० सुब्रह्मण्यम्, उत्तरकालामृत, (१ मो खण्डः), ५० थर्डक्रास रोड, वासावागुदी, बंगलोर।
५. मन्त्रेश्वरः, फलदीपिका, (१ मो अध्यायः), के० एस० कृष्णमूर्ति, ६५ थर्डक्रास रोड, वासावांगुदी, बंगलोर।

दृश्येते । लग्नविवेचने विशदं वर्णनम् । लग्नस्पष्टीकरणार्थं शङ्कुयन्त्रमयूर-यन्त्रादिकस्योल्लेखो विद्यते । यत्र च रात्रौ नक्षत्रवशादपि काल ज्ञानस्य चर्चोपलभ्यते । अत्र षड्वर्गस्यैव निरूपणम् ।[1]

जातकादेशमार्गेऽपि प्रथमाध्याये राशीनां स्वरूपमुपलभ्यते द्वितीयाध्याये निषेकस्य वर्णनमपि विहितम् । अन्यचर्चाया अभावः ।[2]

वराहाचार्यस्य पुत्रेण पृथुयशसाऽपि होरासारे प्रथमाध्याये राशीनां स्वरूपस्य बृहज्जातकवद्वर्णनं विहितम् अनेन एकोनत्रिंशाध्याये मेषादिराशीनां क्रमेण जातकजन्माधिकृत्य फलकथनमपि कृतम् । अयं विशेषोऽत्र दृश्यते ।[3]

मानसागर्यामपि द्वितीयाध्याये लग्नादिस्पष्टप्रकारस्य तृतीयाध्यायेच षड्वर्गसाधनस्य वर्णनं दृश्यते ।[4]

राशीनां पर्यायवाचकं क्रियतावुरीत्यादि श्लोकं बृहज्जातके दृश्यते ।[5] तस्य मूलमप्यत्र बृहत्पाराशरे विद्यते[6] एतत्पद्यमवलोक्य पाश्चात्यानां मतं दृश्यते यद्भारतीयै राशिज्ञाने यवनानामनुकरणं विहितम् । तस्य मतस्य प्रो० पी० काणे महोदयेन[7] तथा श्रीशंकरबालकृष्ण दीक्षित महोदयेन युक्तियुक्तं निराकरणं

---

१. पी० पी० लक्ष्मीनारायण उपाध्याय, दैवज्ञाभरणम् (२,३ तमौ प्रकाशौ), गवर्मेण्ट ओरियण्टल मेनस्क्रिप्ट्ज् लाईब्रेरी, मद्रास ।

२. वी० सुब्रह्मण्य शास्त्री, जातकादेशमार्गः (१, २ तमौ अध्यायौ), ६५ थर्डक्रास रोड, वासावागुदी, बंगलोर ।

३. वी० सुब्रह्मण्य शास्त्री, होरासारः (१, १९ तमौ अध्यायौ) ६५ थर्डक्रास रोड. वासावांगुदी, बंगलोर ।

४. अनूप-मिश्र, मानसागरी, (२, ३ तमौ अध्यायौ), मार्गव पुस्तकालय, गायघाट, बनारस ।

५. सीताराम झा, बृहज्जातकम् १।८, मास्टर खेलाड़ीलाल एण्ड संस, बनारस ।

६. बृ० पा० पू० भा० ३।४८ (मुम्बई-सं०)

७. प्रो० पी० वी० काणे, हिस्ट्री आफ धर्मशास्त्र, पृ० ५६१-५६५, भण्डारकर आरियण्टल रिसर्च इन्स्टीच्यूट, पूना ।

कृतमस्ति-ताभ्यामिदं प्रतिपादितं यदेते शब्दा न यवनीया अपि संस्कृतस्य शब्दा इति।[1]

पाश्चात्यैर्यूरोपदेशीयैरस्य लग्नादिकस्य सूर्योदयमधिकृत्येष्टकालसाधन-पद्धतेश्चर्चा स्वकीयग्रन्थेषु विहिता। तथा च भारतीय राशिस्वरूपादिकज्ञानस्य महत्त्वमपि स्वीकृतमस्ति।

तदधिकृत्येव फलज्ञानस्य सौकर्यमिति तैरनुभूतम् अत एव स्वकीय फल प्रतिपादकेषु ज्योतिष पुस्तकेषु अस्य होराशास्त्रस्य सुतरामनुकरणं विहितम्। यथा हि कास्टिंग दी हारो स्कोप पुस्तके इष्टघटी कालज्ञानस्य चर्चा सुप्रसिद्धेन एलेन ल्यू महोदयेन पाश्चात्यज्योतिर्विदा विहिता।[2]

## (उ) वैशिष्ट्यम्—

फलितज्योतिषस्य कथनार्थं लग्नस्य सूक्ष्मात्सूक्ष्मत्वज्ञानमावश्यकम्। द्वादश-लग्नानि अहोरात्रे भवन्ति। अहोरात्रमधिकृत्येव अस्य शास्त्रस्य पूर्वान्त्याक्षर-लोपाद्धोराशास्त्रमिति नामास्ति।[3] एकराशौ ३० अंशा भवन्ति द्वादशराशी-नामंशानां योगसंख्या ३६० इति जायते। अहोरात्रस्य प्रमाणं ६० घटिका सन्ति। एकराशौ अनुमानेन २½ घटिका (पाश्चात्यरीत्या चैका होरा (आवर) ज्ञेया। सार्द्धघटिकात्मकस्य लग्नस्य क्रमेण होराद्रेष्काणेत्यारम्य षष्ठ्यंशान्तं प्रक्रिया निगदिता येन कालस्य फलकथनार्थं २½ पलानामपि ज्ञानं ज्योतिर्विदा कार्यम्। षष्ट्यंशमधिकृत्य फलकथनमस्मिन् ग्रन्थे निगदितम्। लग्नस्य सूक्ष्म-*प्रक्रियाया अत्र चर्चाद्भुता। अत एवोत्तरवर्तिभिराचार्यैः षोडशवर्गस्थाने केवलं* षड्वर्गा एव ग्रहीतास्ते सूक्ष्मत्वज्ञानाय पारयितुं नाशक्नुवन् इति ज्ञायते अथवा

---

१. श्री शिवनाथ झारखण्डी, भारतीय ज्योतिष, पृ० ६७६, प्रकाशन ब्यूरो, उत्तर प्रदेश।

२. एलेन ल्यू, कास्टिंग दी हारोस्कोप,पृ० ५५, इण्टरनेशनल पब्लिशिंग कं०, एडिनबर्ग ग्रेट ब्रिटेन, अष्टमं संस्करणम्।

३. वृ० पा० पू० भा० ३।२ (मुम्बई-स०)

नारदपुराणे विष्णुधर्मोत्तरमहापुराणे षड्वर्गस्यैवोल्लेख इति पूर्वमङ्कितम्। तस्यैवानुकरणं भवेदित्यपि दृश्यते। अस्तु पराशरस्य षोडशवर्गकथनं लग्नस्यातिसूक्ष्मत्वप्रतिपादनम्।

इष्टज्ञानशुद्धर्थं प्राणपद क्रिया अपि सुतरां मनोरमा।

भावहोराघटीवर्णदलग्नानामुपयोगित्वं वर्णितम्। जैमिनिसूत्रे केवलमनुकरणं दृश्यते। उत्तर वर्त्तिभिराचार्यैरस्यानुकरणं न विहितम्।

परञ्च श्री सीताराम झा महोदयेन भावलग्नस्यातीवोपयोगित्वं प्रतिपादितम्। तन्मते प्रत्येक भावस्य ५ घटिका भवन्ति येन च द्वादशभावानां ६० घटिका कथ्यन्ते। इयमेवार्षपद्धतिरिति तन्मतम्। येयमक्षांशानुसारं द्वादशलग्नानां विभिन्न मानप्रतिपादिका प्रक्रिया वर्तते सा च यवनैरत्र प्रचारितेति तेन सुप्रसिद्धस्याचार्यस्य कमलाकर-भट्टस्योद्धरणमत्र प्रदत्तमस्ति। अयमपि हेतुर्दर्शितः यद्धोरालग्नस्य मानं २½ घटिकाः सन्ति। तदा लग्नस्य मानं ५ घटिका एव भवितव्याः। अतश्चास्मिन् विषये विद्वद्भिरनुसन्धानं विधेयम्। तेन भावलग्नानुसारं फलकथनमपि प्रत्यक्षेणानुभूतम्। इति तत्र लग्नविवेकनाम्नि पुस्तके द्रष्टव्यम्।[1] अस्तु। भावलग्नादिज्ञानस्य सुतरामावश्यकत्वं तच्चात्र वैशिष्ट्यरूपेण दृश्यते।

---

१. श्री सीताराम झा, लग्नविवेकः, पृ० १-१६, श्री अन्नपूर्णा प्रकाशनम्, वाराणसी।

# चतुर्थोऽध्यायः

## द्वादशभावफलनिरूपणम्

### (क) वियावतरणम्--

भावफलमेव ज्योतिषशास्त्रस्य तत्त्वमिति सर्वैरेवाङ्गीक्रियते । भावेषु ग्रहाणां योगायोगेन फलस्य वैषम्यं भवति । अतश्च कस्य कस्य ग्रहस्य केन केन भावेन सह योगे सति किं किं फलं जायते तस्यात्र द्वादशभाव फले संन्निवेशः। अत्र वृहत्पाराशरीय १४, १५, १६ तमाध्यायत्रयस्य समीक्षा कृता। चतुर्दशाध्यायो द्वादशभावफल कथनाध्यायः। अत्र द्वादशभावनिरीक्षणवस्तूनां निर्देशः लग्नमारम्य द्वादशभावानां पृथक् पृथक् फलविचारो विद्यते। १५ तमेऽध्याये द्वादशभावेशानां पृथक् द्वादशभावेषु स्थितिवशात्पृथक् पृथक् फलविचारो विहितो विद्यते। १६ तमोऽध्यायः पूर्वजन्मशापद्योतकाध्यायः। अत्र च पुत्रावरोधे सति पूर्वजन्मशापस्य द्योतनं तच्छान्त्युपायश्च विद्यते।

### (अ) द्वादशभावसंज्ञाकथनम्--

जातकस्य जन्मकाले यो राशिःक्षितिजसंलग्नो भवति स राशिर्लग्नमुच्यते। द्वादशराशिमण्डलमधिकृत्यैव लग्नं प्रारम्य द्वादशभावानां गणना कृता।

ते च भावास्तनुधनसहजबन्धुपुत्रारियुवतीरन्ध्रधर्मकर्मलाभव्ययाख्याः सन्ति।[1]

१. बृ० पा० ७।३७, पृ० ६६ (काशी-सं०)

तेषामपरनामान्यपि पराशरेणोक्तानि सन्ति ।

आत्मा, शरीरं, होरा, कल्पं, लग्नं, मूर्तय इति षट् नाम प्रथमस्य तनु-भावस्येति ।

स्वं, कुटुम्बं, चेति द्वे द्वितीयस्य धनभावस्येति, दुश्चिक्यं, विक्रमं, सहजं, सह इति चतस्रस्तृतीयस्य सहजभावस्येति, पातालं, हिबुकं, वेश्म, मित्रं, बन्धुः, उदकं, सुखम्, इति सप्त चतुर्थस्य बन्धुभावस्येति ।

त्रिकोणम्, प्रतिभा, बुद्धिः, मातृ, विद्या, सुत इति षट् पञ्चमस्य पुत्र-भावस्येति ।

व्याधिः, क्षतम्, अरिः, भङ्गः, क्रोधः, लोभः, मत्सरः, इति सप्त षष्ठ-स्यारिभावस्येति ।

कामः, विवाहः, स्त्री, रतिः, द्यूनं, मदः, अक्षतेति सप्त सप्तमस्य युवति-भावस्येति ।

पराभवः, मृतिः, बन्धः, रन्ध्रः, आयुः, निधनं, च्युतिः, इति सप्त चाष्टमस्य रन्ध्रभावस्येति ।

शुभम्, धर्मः, भाग्यम्, त्रिकोणम्, गुरुः, विभुः, इति षट् नवमस्य धर्म-भावस्येति ।

व्यापारः, आस्पदम्, मेषूरणम्, मानम्, आज्ञा, कर्म, खम् इति सप्त दशमस्य कर्मभावस्येति ।

भावः, आयः, लाभः, अयः, तपः, इति पञ्चैकादशस्य लाभभावस्येति ।

रिःफम्, हानि, व्ययः, इति त्रीणि द्वादशस्य व्ययभावस्येति ।[1]

---

१. (अ) बृ० पा० उ० भा० ६।१-७ पृ० १३४-१३६ (मुम्बई-सं०)

(इ) अच्युतानन्द झा वराहमिहिररचितं बृहज्जातकम् १।१५, १६, पृ० १६, चौखम्बा सीरिज आफिस, बनारस ।

(उ) सीताराम झा सारावली ३।३६-३१ पृ० १२, १३ मास्टर खेलाड़ीलाल एण्ड संस, बनारस ।

सारावल्यामप्येवमेव केवलं शक्तिपौरुषपणजामित्रदेहविवरभवेति क्रमशः प्रथमतृतीयषष्ठसप्तमाष्टैकादशानां नामान्तराणि विशेषेण सन्ति।

भावानां विशेषसंज्ञामाह—

प्रथमचतुर्थसप्तमदशमभावानां केन्द्रसंज्ञा, द्वितीयपञ्चमाष्टमैकादश-भावानां पणफरसंज्ञा, तृतीयषष्ठनवमद्वादशानां 'आपोक्लिमसंज्ञा' लग्नात्पञ्चमनवमयोः कोणसंज्ञा षष्ठाष्टमद्वादशभावानां दुःसंज्ञा त्रिकसंज्ञेति वा चतुर्थाष्ठमभावयोः चतुरस्रसंज्ञा, तृतीयषष्ठदशमैकादशभावानां उपचयसंज्ञा च क्रमाद्बोध्या।

## (इ) द्वादशभावेभ्यो विचार्यवस्तूनां निर्देशः[1]—

शरीरम्, स्वरूपम्, वर्णम्, बलाबलम्, सुखम्, दुःखम्, स्वभावः, एतेषां प्रथमलग्नभावाद्विचारः।

धनम्, धान्यम्, कुटुम्बम्, मृत्युजालम्, अमित्रकम् (शत्रुः) धातुः, रत्नादिकं, एतेषां विचारो द्वितीयधनस्थानादिति।

विक्रमम्, भृत्यम्, भ्रात्रादि, उपदेशः, यात्रा, मातापित्रोर्मरणमित्यादि-कानां वस्तूना विचारस्तृतीयात् सहजभावादिति।

वाहनानि, बान्धवाः मातृसौख्यादिकं, निधिः, क्षेत्रं, गृह आरामादिक चैतानि वस्तूनि चतुर्थसुखभावाद्विचार्याणीति।

यन्त्रमन्त्रौ, विद्या, बुद्धिः, प्रबन्धकाः, पुत्रः, राज्यम्, अपभ्रंशादिकमेतेषां पदार्थानां ज्ञानं, पञ्चमात्पुत्रभावात्कार्यम्।

मातुलः, अन्तकः, शङ्का, शत्रवः, व्रणादिकं, सपत्नीमातरः, एते पदार्थाः षष्ठादरिस्थानाद्विचार्याः।

---

१. (अ) बृ० पा० १४।१-१२, (मुम्बई-सं०)
   (इ) बृ० पा० ११।२-१३ (काशी-सं०)

जाया, मार्गप्रयाणं, व्ययभावः, स्वदेहमृत्युः, (अत्र काशीसंस्करणे वाणिज्यं, नष्टवीक्षणमिति पाठः) एतेषां वस्तूनां ज्ञानं सप्तमजायाभावाद्विधेयम् ।

आयुः, रणम्, रिपुः, ऋणदानग्रहणम्, दुर्गम्, मृतधनं गत्यनुक्तादिकमेतत्सर्व-मष्टमाद्रन्ध्रभावाद्विज्ञेयम् ।

हर्म्यम्, धर्मः, श्यालः, भ्रातृपत्न्यादिकं, तीर्थयात्रादिकं, भाग्यमेतत्सकलं नवमधर्मभावाद्बोध्यम् ।

राज्य, आकाशवृत्तिः, मानं, पिता, प्रवासः, ऋणमेतत्सर्वं दशमात्कर्म-स्थानाज्ज्ञेयम् ।

नानावस्तूनामागमः, पुत्रजायादिकम्, आयम्, वृद्धिः, रिपूणां रिपवः, एतत्सर्वमेकादशायस्थानान्निरीक्ष्यम् । व्ययम्, वैरिवृतान्तम्, रिःफम्, अन्त्या-दिकमेतत्सर्वम् द्वादशभावाद्विचार्यम् ।

अत्र वैशिष्ट्यमाह—

लग्नस्य सूर्यस्य च नवमभावात्पितुर्ज्ञानं प्रोक्तम् । यच्च दशमभावा-देकादशभावाच्च विचार्यमुक्तं तत्तु सूर्यादपि दशमे चैकादशे भावे विचार्यमिति ।

लग्नद्वितीयचतुर्थनवमेकादशभावेषु यच्चिन्त्यं प्रोक्तं ततु चन्द्राल्लग्न-द्वितीयचतुर्थनवमेकादशभावेषु चिन्त्यमिति ।

लग्नातृतीयभावे विचार्यं वस्तुजातं भौमातृतीयेऽपि विचार्यम् । लग्नात् षष्ठे चिन्त्यं बुधादपि षष्ठे चिन्त्यम् । लग्नात्पञ्चमे विचार्यं गुरोरपि पञ्चमे ज्ञेयम् । लग्नादष्टमे द्वादशे शनेरपि चाष्टमे द्वादशे चिन्त्यमिति बोध्यम् ।

पुनरपि विशेषः—

यद्यद्वस्तुजातं यस्माद्यस्माद्भावाद्वचार्यं प्रोक्तं तत्तत् तेषां भावानां स्वामिभ्योऽपि विचार्यमिति विशेषः ।

## (उ) द्वादशभावफलकथनम्—

भावानां विचारे सामान्यबलाबलमाह—

> यो यो शुभैर्युतो दृष्टो भावो वा पतिदृष्टियुक् ।
> युवा प्रबुद्धो राज्यस्थः कुमारो वापि यत्पतिः ॥
> तदीक्षणवशात् तत्तद् भावसौख्यं वदेद् बुधः ।[1]

जातकपारिजातेऽप्येवमेव ।[2]

यो यो भावः स्वभावेशेन युतो दृष्टो वा शुभग्रहैर्युतो दृष्टो वा स्यात् तस्य भावस्य वृद्धिः । तथा च यस्य भावस्य स्वामी युवा कुमाराद्यवस्थामाश्रितः प्रबुद्धो वा राज्यस्थस्तस्य भावस्यापि वृद्धिः । तथा च यस्य भावस्य स्वामी वृद्धां मृतां प्रपीड़ितां सुप्ताद्यवस्थां वा गतः सन् स्वभावमपि नेक्षते तस्य भावस्य हानिः । अथ वा यो यो भावः स्वस्वामिना न दृष्टो युतो वा पापाश्रितः पाप-दृष्टो वा भवेतस्य भावस्य हानिः ।

अयमेव भावः सवार्थचिन्तामणौ ।[3] उत्तरकालामृते चाप्येवमेव[4] ।

लग्नमेवात्र शरीरमतः शरीरमधिकृत्यात्रैव सर्वं विचार्यम् । पुनश्च लग्नस्य लग्नेशस्य वा बलाबलत्वेन शेषभावानामन्यवस्तूनाञ्च बलाबलस्या-धारत्वम् ।

इदमपि दृश्यते यदि लग्नञ्च किञ्चिद्बलयुतं परञ्च लग्नेशश्च

---

१. वृ० पा० ११।१४, १५ पृ० ७६ (काशी-सं०)
२. वैद्यनाथः जातकपारिजातः ११।१, पृ० ३४२, चौखम्बा संस्कृत सीरिज, बनारस ।
३. महीधर शर्मा 'सर्वार्थचिन्तामणिः', २।२, पृ० ३८, गंगाविष्णु श्रीकृष्णदास, लक्ष्मीवेंकटेश्वर प्रेस, मुम्बई ।
४. वी० सुब्रह्मण्यम्, 'उत्तरकालामृत' ४।११, ५० थर्डक्रास रोड, बासावांगुदी, बंगलोर ।

पूर्णवलयुतस्तदा शरीर दुर्वलं भवति पर लग्नेशवलवशादन्ये राजयोगा परिदृश्यन्ते।

अर्थाद्धनवाहनसन्ततिस्त्रीगृहादिकानां सुखं भवति । परञ्च शरीरे दौर्वल्यमस्वास्थ्यं वा दृश्यते। उभयोर्वलवतोः सतोः सर्वसौख्यप्राप्तिरिति भावः।

इत्थमपि विलोक्यते यल्लग्नञ्च पूर्णवलवल्लग्नेशश्च वलहीनस्तदा शरीरं सवलं भवति परञ्चान्यराजयोगादीनामभावात् धनस्त्रीपुत्रादिकसुखस्याप्यभावो दृश्यते। अत्र च सूक्ष्मेण सर्वेषां भावानां भावेशानाञ्च विचार आवश्यकः। प्रकारान्तरेण वलावलं निरूपयति । यो राशिर्गुरुवुधाभ्यां पूर्णदृष्ट्या दृष्टः स्वस्वामिनं विना पापग्रहेणादृष्टश्चेत्तथा शुभग्रहैर्युतो वा दृष्टः स राशिर्वलवान् इति भावः।[1]

भावेशस्यापि पूर्णफले फलं पूर्णमर्द्धेऽर्द्धं पादहीने पादहीनमितिफलविचारपुरःसरं भावानां फलं वाच्यम्।[2]

अत्र जातकपारिजाते—

यस्य भावस्य स्वामी स्वोच्चस्थो मूलत्रिकोणस्थो मित्रस्थो वा (अत्र ग्रहः शुभोऽशुभो वा स्यात्) तस्य भावस्यापि वृद्धिः।

यस्य भावस्य स्वामी नीचस्थोऽस्तं गतः शत्रुराशिस्थो त्रिकस्थो (षष्टाष्टमद्वादशान्यतमस्थानस्थः) वा स्यात्तस्य भावस्य हानिः।

यस्य भावस्य पतिः केन्द्रत्रिकोणस्थः शुभग्रहैर्दृष्टः स्वोच्चादिवर्गस्थश्च सन् वलवान् भवेत्तस्य भावस्य वृद्धिः।

एवमेव प्रत्येकभावस्य सकाशात्तत्केन्द्रत्रिकोणस्थादिभावो विज्ञेयः।

अपि च नवांशादपीदं विचार्यमर्थाद्यस्य भावस्य स्वामी स्वोच्चादिनवांशस्थ-

---

१. बृ० पा० भा०, पृ० २८५, (मुम्बई-स०)

२. बृ० पा० पू० भा० १५।१०३

स्तस्य भावस्य वृद्धिस्तथा च यस्य भावस्य पतिर्नीचास्तशत्रुनवांशस्थस्तस्य हानिरिति ज्ञेयम् ।

अथ च यस्य भावस्य स्वामी यस्मिन् भावेस्थितः स्यात्तस्य भावस्य स्वामिनोऽपि पूर्वोक्त-लक्षणानां (स्वोच्चनीचादिकस्य) विचारो विधेयस्तेनापि भावस्य वृद्धिर्हानिर्वा भवति ।

यस्माद्भावादेकादशद्वितीयतृतीयस्थानगता.स्वोच्चस्था .मित्रस्था ग्रहाः स्युस्तस्य भावस्य वृद्धिर्भवति यदि च ते ग्रहा नीचस्थारस्तं गताः शत्रुराशिगा वा न स्युरिति भावः ।

तथा भावस्थो ग्रहो यदि भावांशतुल्यस्तदापि पूर्णफलप्रदः अनुपातेन त्रैराशिकरीत्यांऽशानुशारं फलस्य न्यूनाधिक्यमंशाद्यनुसारं ज्ञेयम् ।[1]

अथ च वराहमिहिरोऽपि वृहज्जातके स्वमतं प्रदर्शयन् सुप्रसिद्धज्योतिषाचार्यस्य सत्याचार्यस्यस्याप्यत्र विशेषाभिमतमाह ।

'सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां
फलमनुपरिचिन्त्यं लग्नदेहादिभावैः ।
समुपचयविपत्तीसौम्यपापेषु सत्यः कथयति
विपरीतं रिष्फषष्टाष्टमेषु ॥'[2]

अयं भावोऽत्र यत् द्वादश-भावेषु स्वोच्चमित्रस्था ग्रहा भाववृद्धिं नीचास्तारि भावहानिं कुर्वन्ति । परं च षष्ठाष्ठमद्वादशेषु ग्रहाणां फलं वैपरीत्यम् । अर्थादत्र स्थिताः पापा भाववृद्धिं शुभा भावहानिं प्रदर्शयन्तीति भावः ।

सर्वार्थचिन्तामणिकारस्तु शुभग्रहाणामत्र (षष्ठाष्ठमद्वादशेषु) नाशुभभावं स्वीकरोति । अपि तु सामान्यं नाशुभं न शुभमिति भावः ।[3]

---

१. कपिलेश्वर शास्त्री, जातकपारिजातः ११।१२, चौखम्बा संस्कृत सीरिज, बनारस ।
२. अच्युतानन्द झा, वृहज्जातकम् २०।१०, चौखम्बा सीरिज आफिस, बनारस ।
३. महीधर शर्मा, सर्वार्थचिन्तामणिः २।३, गङ्गाविष्णु, श्रीकृष्णदास, लक्ष्मी-वेंकटेश्वर स्टीम् प्रेस, मुम्बई ।

नेत्रस्यापि द्वितीयभावादेव विचारोऽतः।

पूर्वं नेत्रदृष्टिज्ञानप्रकारमाह—

यदि द्वितीयभावाधिपः शुक्रयुतोऽथ वा शुक्रादिग्रहत्रयस्य सम्वन्धयुतस्तदा नेत्रसुखमन्यथा नास्तीति भावः।

द्वितीयभावे सूर्यचन्द्रौ स्थितौ सन्तौ निशान्ध्यत्वं प्रयच्छतः लग्नेशधनेशसूर्या एते त्रय एव यदि द्वितीयभावस्थास्तदा जात्यन्धतां प्रयच्छन्ति।

अपवादमाह—

स्वोच्चमित्रादिस्थोग्रहश्चेत्तदा स न दोपकृत् वागीशो (गुरुः) द्वितीयभावेशश्च त्रिकस्थौ चेत्तदा मूकत्वं प्रयच्छतः।

एवमेव यदि चतुर्थेशदशमेशौ वागीशद्वितीयेशयुतौ त्रिकस्थौ चेत्तदा मूकत्वप्रदौ ज्ञेयौ इति।

विद्याविचारमाह—

विद्याधीशौ गुरुबुधौ केन्द्रत्रिकोणस्थगृहोच्चस्थौ विद्यां प्रयच्छतः त्रिकस्थौ च विद्याभावं कुर्वतः।

धनादिविचारमाह—

यदि द्वितीयेशो बृहस्पतिर्द्वितीयस्थ एव मङ्गलेन युतो दृष्टो वेति तदा धनवान्नरो भवति। गुरुश्च स्थिरधनकारकोऽतोऽस्य योगस्य वलत्वमिति।

द्वितीयेशे एकादशस्थे द्वितीयस्थे चैकादशेशेऽथवा द्वावेव बृहस्पतिद्वितीयेशौ केन्द्रगौ चेत्तदा धनवान्नरो भवति।

धनाभावयोगमाह—

द्वितीयेशे एकादशेशे वा षष्ठस्थे द्वितीयेकादशौ भावावपि पापयुतौ दृष्टौ वा तदा निर्धनयोगः। द्वितीयेकादशेशौ पापाक्रान्तौ त्रिकस्थौ तथा भिक्षाटन-

योगः। द्वितीयस्थे राहौ चेकादशस्थे भौमे द्वितीयेकादशेशौ च त्रिकस्थौ राजदण्डाद्धनहानिः प्रोक्ता।

एकादशस्थे गुरौ द्वितीयस्थे शुक्रे द्वितीयेकादशेशौ च शुभयुतौ द्वादशस्थे चापि शुभग्रहे धर्ममूलाद्धनव्ययः।

कुटुम्बविचारमाह—

द्वितीयभावेशः स्वोच्चो मित्रस्थो वा शुभग्रहकेन्द्रस्थः शुभग्रहयुतश्चेत्तदा कुटुम्बपालकः।

द्वितीयेशे च परमोच्चस्थे गुरुदृष्टे च सति सहस्रजनरक्षको भुवनप्रतापी च भवति।

द्वितीयेशे पारावतांशे स्वोच्चे मित्रस्थे बुधेन वा युते धनवान् परोपकारी जनरक्षकः सुलोचनश्च भवति। द्वितीये द्वितीयेशे च पापयुते सत्यवादी पिशुनो वातव्याधियुतो भवति।[1]

जातकपारिजाते चेकादशेऽध्याये ४६ श्लोकत आरम्भ ८६ श्लोकपर्यन्त मतिविस्तरेण द्वितीयभावमधिकृत्य धननेत्र-मुख-विद्या-वाग्कुटुम्ब-विचारविहितः। स तत्र द्रष्टव्यः।

अत्र सुवर्णरजतपात्राणां भोजनप्राप्तेश्च विचारोऽपि विहितः।[2]

तृतीयो भावः—

विचारणीयवस्तूनि जातकपारिजाते।[3]

**'ज्येष्ठानुजस्थिति-पराक्रम-साहसानि-कण्ठस्वरश्रुतिवराभरणां शुकानि। धैर्यं च वीर्यबलमूलफलाशनानि वक्ष्ये तृतीय भवनात् क्रमशोऽखिलानि।'**

---

१. वृ० पा० पू० भा० १४।३७-५८ (मुम्बई सं०)
२. कपिलेश्वर शर्मा, जातक पारिजातः, पृ० ३५४-३६५, चौखम्बा संस्कृत सीरिज, बनारस।
३. तत्रैव, १२।१.

अपि येषां भावानामधिपतयस्तु त्रिकस्था (षष्ठाष्टमद्वादशस्था) तेषां भावानामपि हानिः। अथवा येषु भावेषु त्रिकेशा (षष्ठाष्टमद्वादशेशाः) स्थिता अत्र वैषां दृष्टिस्तेषामपि भावानां हानिः।

शुभदृष्टौ तु न हानिरिति सवार्थचिन्तामणिकारः।[1]
जातकपारिजाते लग्नतो विचारार्थवस्तूनां निर्देशः।

'शरीरवर्णाकृतिलक्षणानि यशो गुणस्थानसुखासुखानि।
प्रवासतेजो बलदुर्बलानि फलानिलनग्स्य वदन्ति सन्तः॥'[2]

पूर्वं लग्नविचारमाह—

'देहाधिपः पापयुतोऽष्टमस्थो व्ययारिगोवाऽङ्ग सुखं निहन्ति।
सर्वत्र भावेषु च योजनीयमेवं बुधैर्भावशात्फलं हि॥'[3]

अयं भावो लग्नेशो यदि पापाक्रान्तोऽथवा त्रिकस्थश्चेत्तदा शरीरे कष्टम्। एवमेव लग्नेऽथवा चन्द्राश्रितराशावपि पापक्रान्ते पापदृष्टे शुभग्रहदृष्टि शून्ये च शरीरसुखाभावः। अन्यथा लग्ने लग्नेशे वा शुभग्रहयुते दृष्टे वा सति शरीरसौख्यम्।

लग्नेशे बुधगुरुशुक्रान्यतमे च केन्द्रत्रिकोणस्थे दीर्घायुर्योगः। लग्नेशे चरराशिस्थे शुभग्रहदृष्टे सति कीर्तिमान् महाभोगी देह-पुष्टि-युतो भवति च जातकः।

लग्ने राहुयुते चन्द्रदृष्टे लग्ननवांशे च शनिसूर्यौ चेत्तदा यमलोत्पत्तिर्भवति।

यदि रविचन्द्रौ चैकभावस्थावेकनवांशकौ चेत्तदा जातको मासत्रयेन मासत्रयान्तं दुग्धेन पोषितः सन् पश्चात्पित्रा भ्रात्रा च पालितो भवति।

---

१. तत्रैव २।४.
२. कपिलेश्वर शर्मा, जातकपारिजातः ११।१३, चौखम्बा सीरिज आफिस, बनारस।
३. बृ० पा० पू० भा० १४।२४, पृ० ८१ (मुम्बई-सं०)

अत्र काशी-संस्करणे मेषवृषसिंहान्यतमे लग्ने शनिनः मङ्गलेन वा युते लग्नराशिनवांशाङ्गानुसारं नालवेष्टितो जातको जायते।[1]

मुम्बई-संस्करणे लग्ने राहुयुते चन्द्रदृष्टे लग्ननवांशे च शनिसूर्ययुते वालवेष्टीविताङ्गो भवति (वालवेष्टीविताङ्गशब्दो न स्पष्टः अपभ्रंशपाठोऽयं नालवेष्टितशब्दस्येत्येवानुमीयते)[2]

जातकालङ्कारे लग्नेशमधिकृत्य शुभयोगाः—

"अंगाधीशः स्वगेहे बुधगुरुकविभिःसंयुतः केन्द्रगो वा।
स्वीये तुङ्गे स्वमित्रे यदि शुभभवने वीक्षितः सत्स्वरूपः॥
स्यान्नूनं पुण्यशीलः सकलजनमतः सर्वसम्पन्निधानं।
ज्ञानी मन्त्री चमूपः सुरुचिरनयनो मनवो मानवानाम्॥

अशुभयोगाः—

लग्ने क्रूरेऽथयाते खलचरगृहं लग्ननाथे रवीन्दू।
क्रूरान्तः स्थान संस्थावथ दिनपनिशानाथयोद्यूनयायो॥
भूमिपुत्रस्तु पृष्ठादुदयमधिगतश्चन्द्रजश्चेन्मनस्वी।
स्यादन्धो दुष्टकर्मा परभवनरतः पुरुषः क्षीणकायः॥

अत्र सर्वार्थचिन्तामणौ च द्वितीयोऽध्यायो द्रष्टव्यः। तत्र सविस्तरो विचारः। संक्षिप्तन्त्वत्र सर्वं निगदितमेव।

मन्त्रेश्वरेण फलदीपिकायामप्येवमेव प्रोक्तम्।[4]

द्वितीयभावः—

वित्तं नेत्रं मुखं विद्या वाक्कुटुम्बाशनानि च।
द्वितीयस्थानजन्यानि क्रमाज्ज्योतिर्विदो विदुः॥[5]

---

१. बृ० पा० १२।८, पृ० ८० (काशी-सं०)
२. बृ० पा० पू० भा० १४।३४, पृ० ८२ (मुम्बई-स०)
३. जातकालंकारः २।३, ४, नवलकिशोर प्रेस, लखनऊ।
४. मन्त्रेश्वरः, फलादीपिका (१६।१) के० एस० कृष्णामूर्ति, १५ थर्डक्रास रोड, वासावांगुदी, बंगलोर।
५. कपिलेश्वर शर्मा, जातक-पारिजातः ११।४६, चोखम्बा सीरिज, बनारस।

'तृतीयभावस्य स्थिरकारको भामोऽ तस्तस्य तथा तृतीयेशस्य स्थितिवशादत्र सर्वं विचार्यम् । पूर्वोक्तप्रकारेणैवैतयोः शुभयुतयोर्दृष्टयोर्वा केन्द्रत्रिकोणस्थयो सतो भ्रातृसुखमन्यथा पापाक्रान्तयोः त्रिकस्थयोश्च भ्रातृसुखाभाव इति ज्ञेयम् ।

तृतीयस्थाने स्त्रीग्रहयुतेऽथ वा तृतीयेशे स्त्रीग्रहे सति भगिनि-योगः। वैपरीत्ये पुङ्ग्रहे सति भ्रातृ-योगः मिश्रे मिश्रं फलमिति ।

भौमे तृतीयेशे चाष्टमस्थानस्थे सति भ्रातृनाशयोगः । तृतीयस्थे बुधे चन्द्रेण च युते तृतीयेशे भ्रातृकारके ग्रहे च शनिनाक्रान्ते सति जातकात्पूर्वं-भगिनीमरणन्तथा पश्चाद्भ्रातृमरणमिति ज्ञेयम् ।

भ्रातृकारके राहुणा युते तृतीयेशे च नीचस्थेऽनुजनाशो ज्येष्ठभ्रातृत्रय-योगश्च ।

तृतीयेशे केन्द्रगे भ्रातृकारके च त्रिकोणस्थे परमोच्चस्थगुरुणा युते सति द्वादशभ्रातृयोगः । तेषु ज्येष्ठद्वयं तृतीय-सप्तम-नवम-द्वादशाश्चाल्पायुषः शेषाः षट् दीर्घायुष इति ।

द्वादशेशेन गुरुणा वा युते भौमे तृतीयस्थे च चन्द्रे तथैतेषां शुक्रदृष्टेषु सप्तसंख्याकभ्रातृणां योगः ।

अत्र काशीसंस्करणे विशेषः ।[2]

अग्रेजातं रविर्हन्ति पृष्ठे जातं शनैश्चरः ।
अग्रजं पृष्ठजं हन्ति सहजस्थो धरासुतः ॥

जातकपारिजाते विशेषः ।[3]

भ्रातृस्थानं तृतीयं च नवैकादशसप्तमम् ।
तत्तदीशदशायां च भ्रातृलाभो भवेन्नृणाम् ॥

अनेन तृतीयनवमैकादशसप्तमस्थानेभ्योऽपि भ्रातृणां विचारो विधेय इति ।

---

१. बृ० पा० पू० भा० १४।५६-७१ (मुम्बई-सं०)
२. बृ० पा० १४।१४ (काशी-सं०)
३. जातकपारिजातः १२।२, चौखम्बा संस्कृत सीरिज, बनारस ।

भ्रातृसङ्ख्याज्ञानमपि तत्रैव। एकादशे द्वादशे च भावे यावन्तो ग्रहास्तिष्ठन्ति तावन्मिता ज्येष्ठाः। तृतीये द्वितीये च यावन्तस्तावत्सङ्ख्याका अनुजा इति।[1]

शेषं तत्रैव द्वादशाध्याये भ्रात्ररिष्टपराक्रमकण्ठकर्णभूषणवस्त्रधैर्यबलभोजनादिकमधिकृत्य सविस्तरं वर्णनं द्रष्टव्यम्।

चतुर्थभावः—

जातक पारिजाते विचारणीयवस्तूनां निर्देशः।[2]

**वदन्ति विद्याजननीसुखानिसुगन्धगोबन्धुमनोगुणानि।**
**महीपयानक्षितिमन्दिराणि चतुर्थभावप्रभवानि तज्ज्ञाः॥**

लग्नेशेन चतुर्थेशेन च युते चतुर्थे गेहप्राप्तिः। वैपरीत्ये लग्नेशचतुर्थेशयोः त्रिकस्थयोः सतोर्गेहाभावः।

लग्नेशचतुर्थेशयोः केन्द्रत्रिकोणगतोः शुभग्रहयुतयोः सतोः सुन्दरगेहाप्तियोगो ज्ञेयः।

क्षेत्रस्य, सुखस्य, दिव्याङ्गनावाहनवस्तुभूषणादिकस्य, आयुषः, पितुः, मातुः, बुद्धेश्च विचारः क्रमाच्चतुर्थेशात् गुरुतो शुक्राद्राहुशनिम्नां सूर्याच्चन्द्राद्बुधाच्च प्रकर्तव्यः। प्रथदिषु केन्द्रत्रिकोणगेषूच्चस्थेषु शुभग्रहयुतेषु चैतानां वस्तूनां प्राप्तिः। वैपरीत्येऽभाव इति—

चतुर्थेशे स्वोच्चस्थे स्वांशे च पञ्चमेशे सति सुखवाहन-समृद्धिः विचित्रसौधप्राकारगृहप्राप्तिः।

पूर्वोक्तयोगे चतुर्थे शुभग्रहयुते सति मातृकारके च बलवति मातुर्दीर्घायुर्योगः चतुर्थेशे शुक्रे च केन्द्रगे सति बुधे च स्वोच्चराशिस्थे जातको विद्वान् पण्डितो भवति।

---

१. तत्रैव, १२।१७.
२. कपिलेश्वर शास्त्री, जातक-पारिजातः, १२।५१, चौखम्बा संस्कृत सीरिज, बनारस।

चतुर्थस्थे शनौ रविणा युते भाग्यस्थे च चन्द्रे भौमे चैकादशस्थे गोमहिष्यादिलाभः।

चतुर्थे चतुर्थेशे वा चरग्रहयुते भौमे षष्ठेऽष्टमे द्वादशे वा सति जातको मूकत्व प्राप्नोति।

लग्नेशे शुभे चतुर्थेशे च नीचराशिगे चतुर्थभावकारके च द्वादशस्थे, चतुर्थेशे चैकादशस्थे सति द्वादशे वर्षे नरवाहनप्राप्ति। चतुर्थे रविणा स्वोच्चस्थेन चतुर्थेशेन शुक्रेण च युते सति द्वात्रिंशे वर्षे वाहनप्राप्ति.।[1]

(काशी-सस्करणेऽत्र चतुर्थे रविणा युते स्वोच्चस्थे चतुर्थेशे शुक्रेण युते सत्येव पाठ)[2]

चतुर्थेशे स्वोच्चस्थे दशमेशेन युते सति द्विचत्वारिंशे वर्षे वाहनप्राप्ति।

एकादेशेशे च चतुर्थस्थे चतुर्थेशे चैकादशस्थे सति द्वादशे वर्षे नरवाहनप्राप्ति।

अत्रापि जातकपारिजाते मातृसुखसुगन्धवस्त्रपशुबन्धुमनोवाहनराज्यराजयोगक्षेत्रभाग्यगृहादीना वस्तूना विचारे विविधा योगा द्रष्टव्या.।[3]

पञ्चमो भाव—

अत्र जातकपारिजाते विचारणीयवस्तूना निर्देशः।

पुत्राद्देवमहोपपुत्रपितृधीपुण्यानि संचिन्तयेत्।[4]

पूर्ववत् पञ्चमेशे केन्द्रत्रिकोणस्थे पुत्रलाभोऽन्यथा त्रिकस्थे पुत्राभाव. पञ्चमेशे गुरौ सति सूर्ये च शुभभावस्थे केन्द्रकोणगेषु च शुभग्रहेषु एक एव

१ बृ० पा० पू० भा० १४।७२-८७ (मुम्बई-स०)

२ बृ० पा० १५।११ (काशी-स०)

३ कपिलेश्वर शास्त्री, जातक-पारिजात पृ० ३७८-३९४, चौखम्बा सस्कृत सीरिज, बनारस।

४. तत्रैव, १३।१.

स्थिरः पुत्रः। पञ्चमेशेऽस्ते गते पापाक्रान्ते दुर्बले षष्ठस्थे नीचस्थे वा काकवन्ध्यायोगः।

पञ्चमेशे षष्ठस्थे लग्नेशे भौमराशिस्थे (मेषवृश्चिकयोरिति) च प्रथमसन्ततिमरणं काकवन्ध्यात्वं वा भवति।

पञ्चमस्थे केतौ बुधे च नीचस्थस्य पञ्चमेशस्य स्वस्थाने दृष्ट्यभावे शनिबुधाभ्यां युते सति काकवन्ध्यायोगः।

नवमेशे लग्नस्थे पञ्चमेशे च नीचगे केतुबुधाभ्याञ्च युते पञ्चमे भावे कष्टात्पुत्रलाभः।

पञ्चमेशे त्रिकस्थे नीचस्थे शत्रुस्थे वा सति पापाक्रान्ते च पञ्चमे भावे कष्टात्पुत्रलाभः।

पञ्चमे बुध राशौ (मिथुन कन्ययो.) शनिराशौ (मकरकुम्भयोः) वा शनिगुलिकयुते दृष्टे वा सति दत्तकादिकपुत्रयोगः।

सूर्यचन्द्रौ चैकराशिस्थौ समाननवांशकौ चेत्तदा मातृत्रयेण पितृद्वयेन च पोषितः पुत्रो भवति।

पञ्चमे च षड्ग्रहयुते पञ्चमेशे च द्वादशस्थे लग्नेशचन्द्रौ च वलयुतौ स्यातान्तदा दत्तकपुत्रयोगः।

वलवति पञ्चमे शुक्रगुरुबुधयुते दृष्टे वा पञ्चमेशे चापि वलान्विते बहुपुत्रयोगः।

पञ्चमेशे चन्द्रयुते त्रिराद्यंशगतेऽपि च कन्यायोगः।

पञ्चमेशे चरराशिगे राहुणा युते च चन्द्रे पञ्चमस्थे च शनौ पुत्रस्य जारजयोगः।

पञ्चमेशे राहुयुते पञ्चमस्थे चन्द्रगुरुदृष्टिशून्ये च सति जारजयोगः।

लग्नचन्द्रयोः गुरुदृष्टिशून्ययोः सूर्यचन्द्रयोर्युत्यभावे नवांशे च पापाक्रान्ते जारजयोगः।

द्वादशस्थे चन्द्रे ऽष्टमस्थे गुरौ पापाक्रान्ते दृष्टे वा सति जारजयोगः।

पञ्चमेशे च स्वोच्चस्थे केन्द्रत्रिकोणगे गुरुणा दृष्टे युते वा सति पुत्र-सौख्ययोगः।

त्रिचतुःपापग्रहयुते पञ्चमे पञ्चमेशे च नीचराशिस्थे नीचकर्मकृत्पुत्र-योगः।

पञ्चमेशे केन्द्रस्थे पुत्रकारकेण युते सति षड्त्रिंशे त्रिंशे वा वर्षे पुत्रोत्पत्ति-योगः।

नवमस्थे गुरौ गुरुतश्च नवमस्थे शुक्रे लग्नेशेन युते सति चत्वारिंशत्तमे वर्षे पुत्रयोगः।

पञ्चमस्थे राहौ पञ्चमेशे च पापयुते गुरौ च नीचराशिस्थे सति द्वात्रिंश-वर्षे पुत्रयोगः।

लग्नतो गुरुतो वा पञ्चमस्थे पापे षड्त्रिंशे षड्विंशे चत्वारिंशे वा वर्षे पुत्रनाशः।

लग्ने गुलिकेन युते लग्नेशे च नीचराशिगे षड्पञ्चाशे वर्षे पुत्रशोकयोगः।

दशसङ्ख्यादिकपुत्रयोगमाह।

चतुर्थे षष्ठे च पापयुते पञ्चमेशे परमोच्चस्थे लग्नशेनान्विते पुत्रकारके शुभयुते सति दशसङ्ख्याकपुत्रयोगः।

परमोच्चगते गुरौ द्वितीयेशे राहुणा युते नवमेशे च नवमस्थे नव सङ्ख्याकपुत्रयोगः।

गुरौ त्रिकोणगे सति पञ्चमेशे च बलान्विते द्वितीयेशे दशमस्थे चाष्ट-सङ्ख्याकपुत्रयोगः।

पञ्चमस्थानात्पञ्चमस्थे शनौ पञ्चमेशे च पञ्चमस्थे सप्तसङ्ख्याकपुत्र-योगः। तेषु द्वियमलयोगश्च।

द्वितीयेशे पञ्चमस्थे पञ्चमेशेन युते सति षट्सङ्ख्याकपुत्रयोगः। परं च तेषु त्रयाणां मरणयोगः।

पञ्चमस्थे गुरौ गुरुत. पञ्चमस्थे शनौ शनित; पञ्चमस्थे राहौ चैकस्य पुत्रस्य योग. ।

पञ्चमे पापाक्रान्ते गुरुतश्च पञ्चमस्थे शनौ द्वितीयपत्न्या पुत्रयोग: । त्रिपत्नीयोगश्च ।

पञ्चमे च पापाक्रान्ते गुरुतश्च पञ्चमे शनौ पञ्चमेशे च भौमेन युते लग्नेशे च द्वितीयस्थे चोत्पन्नपुत्राणा नाश स्वस्य च दीर्घायुर्योग ।[1]

शेप देवताराज्यजन्मपुत्रपितृवृद्धिपुण्यादिकमधिकृत्य सविस्तर वर्णन जातकपारिजातस्य त्रयोदशाध्याये द्रष्टव्यम् ।[2]

अथ पष्ठो भावः—

जातकपारिजाते पष्ठभावाद्विचारणीय-वस्तूना निर्देशः ।

"रोगारिव्यसनक्षतानि वसुधापुत्रारितश्चिन्तयेदुक्तं
रोगकरं तदेवेति ।"[3]

व्रणादियोगा।—

पापे पष्ठेशे पष्ठस्थे लग्नस्थेऽष्टमस्थे वा तदा शरीरे व्रण वाच्यम् ।

एवमेव पित्रादिभावेशास्तत्र कारकयुता पष्ठेशेनान्विता. पष्ठे लग्नेऽष्टमेऽवस्थिता सन्तस्तदा तेषा पित्रादीनामपि व्रण वाच्यम् । अथ भावो, दशमेशेन पूर्वोक्तयोगे पितुश्चतुर्थेशेन मातु पञ्चमेशेन पुत्रस्य तृतीयेशेन भ्रातुरित्यादि ज्ञेयम् ।

सूर्यादिग्रहक्रमेणाङ्गेषु व्रणादियोगमाह—

पष्ठेशे सूर्ये सति शिरोव्रणम् ।

---

१ वृ० पा० पृ० सा० १७८८-१२१ (मुम्बई-सं०)

२ कपिलेश्वर शास्त्री, जातकपारिजात, पृ० ३८४-४१४, चौखम्बा संस्कृत सीरिज, बनारस ।

३ कपिलेश्वर शास्त्री, जातकपारिजात १३।७१, चौखम्बा संस्कृत सीरिज, बनारस ।

चंद्रे मुखे व्रणं, भौमे कण्ठे व्रणं, बुधे नाभ्यां, गुरौ नासिकायां, शुक्रे नयने, शनौ पादे, राहौ केतौ च कुक्षौ व्रणमिति भावः।

लग्नेशे भौमराशौ (मेषवृश्चिकयोः) बुधराशौ (मिथुनकन्ययोः) वा स्थिते बुधेन च दृष्टे सति मुखे व्रणम्। बुधे भौमे वा लग्नेशे सति चन्द्रेण राहुणा शनिना वाक्रान्ते कुष्ठयोगः।

लग्नेशं विना चन्द्रे लग्नस्थे, राहुणा युते श्वेतकुष्टस्य, शनिना युते कृष्णकुष्टस्य भौमेन युते सति रक्तकुष्टस्य योग इति।

षष्ठेशाष्टमेशौ लग्नस्थौ रविणा युतौ चेत्तदा ज्वरगण्डस्य, भौमेन युते ग्रन्थिनः शस्त्राघातस्य वा, बुधेन युते पित्तस्य, गुरुणा युते रोगनाशस्य शुक्रेण युते सति स्त्रीकृतरोगस्य, शनिना युते सति वातरोगस्य, राहुणा युते सति नाभौ चाण्डालकृतगण्डरोगस्य, केतुना युते भयस्य, चन्द्रेण युते, कफश्लेष्मादिरोगस्य जलगण्डस्य वा योगः।

एवमेव पूर्ववत्पित्रादिकारकानां षष्ठेशाष्टमेशयोर्योगे सति सूर्यादिग्रहक्रमेण पूर्वोक्तरोगाः पितृ-मातृ-भ्रातृ-पुत्रादिकानामपि बोध्या इति।

षष्ठभावे षष्ठेशेऽपि पापेन संयुक्ते शनिराहुसंयोगे च जातकः सदा रोगी भवति।

षष्ठस्थे भौमे षष्ठेशे चाष्टमस्थे षड्वर्षे द्वादशवर्षे वा ज्वरयोगः।

षष्ठस्थे गुरौ गुरुराशौ (धनुर्मीनयोः) च चन्द्राश्रिते द्वाविंशवर्षे चैकोनविंशवर्षे वा कुष्टयोगः।

षष्ठस्थे राहौ शनौ गुलिके वा च केन्द्रस्थे (मान्दिशब्देन गुलिकस्यापि ग्रहणम्) लग्नेशेऽष्टमभावस्थे सति षड्विंशवर्षे क्षयरोगयोगः।

द्वादशेशे च षष्ठस्थे षष्ठेशे च द्वादशस्थे चैकोनत्रिंशवर्षे गुल्मरोगयोगः।

षष्ठस्थे चन्द्रे शनिना युते पञ्चपञ्चाशवर्षे रक्तकुष्टयोगः।

लग्नेशे लग्नस्थे शनौ च षष्ठस्थे चैकोनषष्ठिवर्षे वातरोगयोगः।

षष्ठेशेन युते चन्द्रेऽष्टमेशे च षष्ठस्थे द्वादशेशे च लग्नस्थेऽष्टवर्षे मृगादिपशूनां भययोगः।

षष्ठस्थेऽष्टमस्थे वा राहौ राहुतश्चाष्टमस्थे शनौ प्रथमवर्षेऽग्निभयम्।
तृतीये वर्षे पक्षिकृतभयस्य योगः—

षष्ठस्थेऽष्टमस्थे वा सूर्ये सूर्यतश्च द्वादशस्थे चन्द्रे पञ्चमे नवमे वा वर्षे जलभययोगः।

शनौ चाष्टमस्थे सप्तमस्थे च भौमे त्रिंशवर्षे दशमवर्षे वा विस्फोटकादीनां योगः।

अष्टमेशे स्वनवांशस्थेऽष्टमात्त्रिकोणस्थे राहुणा युते सति द्वाविंशेऽष्टादश-वर्षे वा ग्रन्थिरोगः प्रमेहादिकरोगस्य वा योगः।

एकादशेशे षष्ठस्थे षष्ठेशे चैकादशस्थे एकत्रिंशवर्षे शत्रुमूलाद्धनव्यय-योगः।

पञ्चमेशे षष्ठस्थे षष्ठेशे गुरुणा युते द्वादशेशे लग्नस्थे जातकस्य पुत्र एव जातकस्य शत्रुर्भवति।

लग्नेशे षष्ठेशे च षष्ठस्थे सति एकोनविंशे दशमे वा वर्षे शुनकभय योगः।[१]

अत्र जातक-पारिजातयोगे षष्ठेशमधिकृत्य शुभयोगोऽपि। सूर्यदृष्टे षष्ठेशे गोपुरांशादिकेषु गते सति लग्नेशे बलान्विते स्ववंशजनानामुपकार-कृद्भवति।[२]

सप्तमो भावः—

जातकपारिजाते सप्तमभावाद्विचार्यवस्तूनां निर्देशः।

**"यात्रापुत्रकलत्रसौख्यमखिलं सञ्चिन्तयेत्सप्तमादुक्तं**
**पुत्रसुखागमफलं सर्वं यत्तद्वदेत्।"**

---

१. बृ० पा० १४।१२२-१५० (मुम्बई-सं०)
२. कपिलेश्वर शास्त्री, जातकपारिजातः १४।१, चौखम्बा संस्कृत सीरिज, बनारस।

सप्तमेशे षष्ठेऽष्टमे द्वादशे वा गते सति रुग्णस्त्रीयोगः। यदि सप्तमेशः स्वोच्चमित्रस्थस्तदा पूर्वोक्तयोगाभावः।

यदि शुक्रः सप्तमस्थः स्यात्तदातीवकामी भवति। अन्यभावेषु पापाक्रान्तः सन् स्थितो भवेत्तदा स्त्रीमरणभोगः।

सप्तमेशः शुभग्रहयुतो दृष्टो वा पूर्णवली भवेत्तदा जातको धनी मानी, सर्वसुखसौभाग्ययुतो भवति।

यदि सप्तमेशो नीचस्थः शत्रुस्थो निर्वलो वा स्यात्तदा वहुभार्यायोगो भवति।

शन्याश्रितराशीशे परमोच्चगते शनिराशौ (मकरकुम्भयोः) च शुभग्रहेण दृष्टेऽथवा शुक्रे चोच्चस्थे वहुभार्यायोगः।

सप्तमभावस्थग्रहाणां पृथक्त्वेन फलमाह।

सप्तमस्थे सूर्ये वन्ध्यायाः, चन्द्रे राशिस्वभावसदृश्यः, भौमे रजस्वलाया वन्ध्याया वा, वुधे वेश्यायाः, हीनजातिकायाः, वैश्याया वा, गुरौ ब्रह्मणजातिकायाः, गर्भिण्या वा, शनौ राहौ केतौ च हीन-जातिकाया रजस्वलाया वा स्त्रियश्च योग इति।

सप्तमस्थे भौमे सुस्तन्याः, शनौ रोगिण्याः, गुरौ कठोरस्तन्याः, शुक्रे स्थूलोत्तमस्तन्याः, स्त्रियश्च योगः।

सप्तमे द्वादशे च पापग्रहे क्षीणचन्द्रे च पञ्चमे जातकः स्त्रीवश्यो जातिविरोधकृच्च भवति।

सप्तमे शनिभौमयुते सप्तमेशे च शनौ भौमे वा सति वेश्या जारिणी वा पत्नी जातकस्य भवति।

भौमयुते दृष्टे वा भौमनवांशस्थे भौमराशिस्थे च वा शुक्रे भगचुम्बनकृन्नरो भवति।

शनियुते दृष्टे शनिनवांशस्थे शनिराशिस्थे वा शुक्रे शिश्नचुम्बनतत्परो भवति।

सप्तमे चोच्चस्थे सप्तमे च शुभग्रहयुते लग्नेशे च बलान्विते शुभपत्नी-योगः।

सप्तमे सप्तमेशे च नीचस्थे, शत्रुस्थे, पापाक्रान्ते दृष्टे वा कलत्रहानि-योगः।

सप्तमेशे च त्रिकस्थे दुर्बले नीचराशिगे सति कलत्रहानियोगः।

सप्तमस्थे चन्द्रे सप्तमेशे च द्वादशस्थे स्त्रीकारके च बलहीने स्त्रीसुखा-भावयोगः।

सप्तमेशे नीचस्थे पापराशिगे पापयुते वा सप्तमे च बुधेन बुधस्य नवांशकेन वा युते द्विभार्यायोगः।

सप्तमस्थे भौमे शनौ शुक्रे च लग्नेशे चाष्टमस्थे त्रिभार्यायोगः।

द्विस्वभावराशिस्थे शुक्रे तद्राशीशे चोच्चस्थे सप्तमेशे च बलान्विते बहु-भार्यायोगः।

विवाहकालमाह।

सप्तमेशे शुभराशिस्थे शुक्रे च स्वोच्चस्थे पञ्चमे नवमे वर्षे वा विवाह-योगः।

सप्तमस्थे सूर्ये सप्तमेशे च शुक्रेण संयुते सप्तमे चैकादशे वा वर्षे विवाह-योगः।

द्वितीयस्थे शुक्रे सप्तमेशे चैकादशस्थे दशमे षोडशे वा वर्षे विवाहयोगः।

लग्नकेन्द्रस्थे शुक्रे लग्नेशे च शनिराशिगे (मकरकुम्भयोः) चैकादशे वर्षे विवाहयोगः।

लग्नात्केन्द्रस्थे शुक्रे सप्तमस्थे च शनौ द्वादशे चैकोनविंशेवर्षे वा विवाह-योगः।

चन्द्रात्सप्तमे शुक्रे शुक्रात्सप्तमे च शनौ चाष्टादशवर्षे विवाहयोगः।

द्वितीयेशे चैकादशस्थे लग्नेशे दशमस्थे पञ्चदशवर्षे विवाहयोगः।

द्वितीयेशे एकादशस्थे द्वितीयस्थे चैकादशेशे त्रयोदशाब्दे विवाहयोगः।

अष्टमभावात्सप्तमस्थे शुक्रेऽष्टमेशे च भौमयुते द्वाविंशे सप्तविंशे वर्षे वा विवाहयोगः।

लग्नेशे सप्तमेशनवांशस्थे सप्तमेशे च द्वादशस्थे त्रयोविंशे षड्विंशे वर्षे वा विवाहयोगः।

नवमान्नवमस्थानस्थे शुक्रे स्थानद्वये च राहुणा युते एकत्रिंशवर्षे त्रयस्त्रिंश वर्षे वा विवाहयोगः।

अष्टमेशे च सप्तमस्थे शुक्रे च लग्ननवांशस्थे पञ्चविंशे त्रयस्त्रिंशवर्षे वा विवाहयोगः।

नवमात्सप्तमस्थे शुक्रे शुक्राच्च सप्तमस्थे सप्तमेशे त्रिंशवर्षे सप्तविंशवर्षे वा विवाहयोगः।

स्त्रीमरणयोगः—

सप्तमेशे नीचस्थे शुक्रे च षष्ठेऽष्टमस्थे वाष्टादशे त्रयस्त्रिंशे वा वर्षे स्त्रीमरणयोगः।

सप्तमेशेऽष्टमस्थे द्वादशेशे च सप्तमस्थे चैकोनविंशे वर्षे भार्यामरणयोगः।

द्वितीयस्थे राहौ सप्तमस्थे च भौमे विवाहानन्तरं तृतीये दिवसे सर्पदंशनेन भार्यामरणयोगः।

अष्टमस्थे शुक्रे सप्तमेशे शनिराशिगे (मकरकुम्भयोः) द्वादशे चैकोनविंशे वर्षे वा भार्यामरणयोगः।

लग्नेशे नीचस्थे द्वितीयेशे चाष्टमस्थे त्रयोदशे वर्षे भार्यामरण योगः।

शुक्रात्सप्तमस्थे चन्द्रे चन्द्राच्च सप्तमस्थे बुधेऽष्टमेशे च पञ्चमस्थे दशमे वर्षे प्रथमो विवाहो द्वितीयश्च द्वाविंशे वर्षे, तृतीयश्च त्रयस्त्रिंशे वर्षे विवाहयोग इति भार्यात्रययोग इत्यर्थः।[1]

काशीसंस्करणे चैकोऽन्योऽपि योगः।[2]

षष्ठस्थे भौमे सप्तमस्थे राहौ चाष्टमस्थे शनौ भार्यामरणयोगः।

---

१. बृ० पा० पू० भा० १४।१५१-१६० (मुम्बई-सं०)

२. बृ० पा० १८।४२ पृ० १०१ (काशी-सं०)

अथाष्टमभावः—

अस्मिन् भावे चायुष एव विचारः स चायुर्दायविचारेण पृथक् निरूपितः। यदत्र वैशिष्ट्यं तच्चात्र निरूप्यते।

अष्टमेशाद्दशमेशाल्लग्नितश्चायुषो विचारो विधीयते। अर्थादत्र यस्मिन् योगोऽष्टमेशस्योल्लेखस्तत्र दशमेशस्य शनेश्चापि बोध्यम्।

अष्टमेशे पापाक्रान्तेऽल्पायुर्योगः। एवं शनिदशमेशाभ्यामपि ज्ञेयम्।

षष्ठेशाद्वादशेशौ षष्ठद्वादशस्थौ लग्नेशे षष्ठेऽष्टमे द्वादशे वा स्थिते दीर्घायुर्योगः।

लग्नेशाष्टमेशौ स्वस्थौ स्वनवांशस्थौ मित्रस्थौ वा दीर्घायुकरौ प्रोक्तौ।

लग्नेशाष्टमेशदशमेशाः शनिश्च केन्द्रत्रिकोणगा एकादशस्था वा दीर्घायुःप्रदाः। एषु चतुर्षु यो बलवान् तस्यानुसारमायुषो ज्ञानं कार्यम्।

अल्पायुर्योगानाह—

अष्टमेशे केन्द्रगे लग्नेशे च बलहीने विंशतितो द्वाविंशतिवर्षपर्यन्तमायुर्ज्ञेयम्।

अष्टमेशे नीचस्थेऽष्टमे च पापक्रान्ते लग्नेशे च बलहीनेऽल्पायुर्योगः।

अष्टमेऽष्टमेशे द्वादशेशे च पापाक्रान्ते जातमात्रस्य मृत्युयोगः।

पापेषु केन्द्रत्रिकोणगेषु शुभेषु चाष्टमषष्ठगेषु च लग्ने च नीचस्थाष्टमेशेन युते सति जातमात्रस्यैव मृत्युयोगः पञ्चमेऽष्टमेशेऽष्टमे च पापाक्रान्तेऽल्पायुर्योगः।

अष्टमेशेऽष्टमस्थे चन्द्रे पापाक्रान्ते शुभग्रहदृष्टिशून्ये चैकमासानन्तरं मृत्युयोगः।

पुनरपि दीर्घायुयोगमाह—

लग्नेशे स्वोच्चराशिस्थे चन्द्रे चैकादशस्थे गुरौ चाष्टमस्थे दीर्घायुर्योगः।[1]

काशीसंस्करणेऽन्योप्येको योगः।[2]

---

१. बृ० पा० पू० भा० १४।१६१-२०२ (मुम्बई-सं०)

२. बृ० पा० १६।१५ (काशी-सं०)

लग्नेशेऽतिबलान्विते केन्द्रस्थशुभग्रहैर्दृष्टे सति धनधान्यलाभेन सह दीर्घायुर्योगः।

नवमभावः—

नवमभाव एव भाग्यभावः।

जातकपारिजाते विचारणीयवस्तूनां निर्देशः।[1]

**भाग्यप्रभावगुरुधर्मतपःशुभानि सञ्चिन्तयेन्नवमदेवपुरोहिताभ्याम्।**

ज्योतिषे शास्त्रे नवमभावस्य महत्त्वपूर्णस्थानं वरीवर्त्ति। अस्मिन् भावे सौशील्यभाग्यधर्माणां विचार उक्तश्चाचार्येण। वस्तुत्रयस्यैव महान् महिमाऽस्ति लोके। विना धर्मेणापि मानवस्य जीवनं शून्यम्। तथा हि—

**धर्मेणहीनः पशुभिः समानः।**

धारणाद्धर्म इत्याहुरिति।

सौशील्यमपि सदाचार एव। तथा हि—

**"आचारहीनं न पुनन्ति वेदाः।"**

भाग्यस्य चापि मानवजीवने विशिष्टं स्थानम् तथा हि—

**भाग्यवन्तं प्रसूयेत न च शूरं न च पण्डितम्।**

भाग्यादेव यशोधनवैभवादिसकलवस्तुजातप्राप्तिः,
भाग्यहीनत्वात्तु सकलवस्तुविनाशः।

अत्र ग्रन्थकारोऽपि—

**भाग्यादेव नृणां सिद्धिर्भाग्यादेव धनायती।**
**यशांसि भाग्यतो भाग्यविपर्ययाद्विपर्ययः॥**
**करिष्यमाणकर्माणि ज्ञातव्यानि प्रयत्नतः।**[2]

भाग्यस्यैव प्राबल्ये मानवजीवनस्योत्कृष्टता।

ज्योतिषशास्त्रस्य रचनापि मनुष्यभाग्यदर्शनार्थमेव विहिता। भाग्यदर्शनमेवास्य प्रयोजनं लोके सुप्रसिद्धम्।

---

१. कपिलेश्वर शास्त्री, जातक पारिजातः १४।६५, चौखम्बा संस्कृतसीरिज, बनारस।

२. बृ० पा० उ० भा० १३।१, २ (मुम्बई-सं०)

अस्मिन् ग्रन्थे भावफलाध्यायेषु पूर्वखण्डेऽपि भाग्य-भावस्य विवेचनमुत्तर-खण्डेऽपि कलाशांदिफलाध्यायनाम्ना पृथक्त्वेन निरूपणम् ।

पूर्वं पूर्वखण्डनिरूपितस्य विवेचनम्। ततश्चोत्तर-खण्डवर्णितस्य निरूपण-मित्यर्थः।[1]

नवमेशः शुक्रश्च द्वावेव भाग्यप्रदौ। केन्द्रत्रिकोणगौ चेदतिभाग्यप्रदौ (वैपरीत्ये षष्ठाष्टमद्वादशस्थौ भाग्य-हानि-प्रदौ प्रोक्तौ । धर्मस्य मातुलस्य पितुरपि विचारोऽत्रैव विधेयः। शुभे शुभं प्रोक्तमशुभेऽशुभमिति प्रकारेण ज्ञेय-मिति।

चतुर्थेशशुक्रगुरुयुते शुभराशिगते च नवमभावे नवमेशे च केन्द्रस्थे, बहु-देशपर्यटनम् ।

नवमस्थे गुरौ नवमेशे च केन्द्रगे लग्नेशे च बलवति बहुभाग्य-योगः।

पितुर्निरूपणम्—

नवमेशे बलान्विते शुक्रे नवमस्थे बलवद्गुरौ च केन्द्रस्थे पितृभाग्यान्वित-योगः।

नवमस्थानाद्द्वितीये चतुर्थे वा भौमे नवमेशे च नीचस्थे जातकस्य पिता निर्धनो भवति।

नवमेशे परमोच्चस्थे नवमस्थाननवांशके गुरुयुते शुक्रे केन्द्रस्थे च पितु-र्दीर्घायुर्योगः।

गुरुदृष्टे नवमेशे केन्द्रगे सति जातकस्य पिता वाहनयुतो राजा वा राज-तुल्यो भवति।

नवमेशे च दशमस्थे दशमेशे च नवमस्थे जातकस्य पिता कीर्तिमान् धनाढ्यश्च भवति।

सूर्ये परमोच्चस्थे नवमे चैकादशस्थे जातको धर्मात्मा राजप्रियः पितृ-भक्तश्च भवति।

सूर्ये त्रिकोणस्थे नवमेशे च सप्तमस्थे गुरुणायुते दृष्टे च सति पितृभक्ति-योगः।

---

१. बृ० पा० पू० भा० १४।२०३-२३६ (मुम्बई-सं०)

भाग्योदययोगमाह—

नवमेशे द्वितीयस्थे नवमस्थे च द्वितीयेशे द्वात्रिंशद्वर्षात्परतो भाग्योदयं वाहनकीर्तिप्राप्तियोगश्च।

षष्ठेशे लग्नेशे च नवमस्थे पितापुत्रयोर्वैरयोगः। पिता च कुत्सितो भवति।

दशमेशे षष्ठाष्ठमद्वादशस्थे भिक्षान्नेन जीवनयोगः।

तृतीयेशेन युते दशमेशे नीचराशिस्थे विमूढस्थे वा च नवमेशे सति भिक्षाशनयोगः।

पितृमरणयोगमाह—

षष्ठेऽष्टमे द्वादशे वा सूर्येऽष्टमेशे नवमस्थे द्वादशेशे च लग्नस्थे षष्ठेशे च पञ्चमस्थे जातकस्य जन्मनः पूर्वमेव पितुर्मरणयोगः।

अष्टमस्थे सूर्येऽष्टमेशे च नवमस्थे जातकस्य प्रथमवर्ष एव पितृमरणयोगः।

द्वादशेशे नवमस्थे नवमेशे च नीचस्थे तृतीये षोडशे वा वर्षे पितृमरणयोगः।

लग्नेशेऽष्टमस्थेऽष्टमेशे च सूर्यसंयुते द्वितीये द्वादशे वर्षे पितृमरणयोगः।

नवमस्थानाष्टमस्थानस्थे राहौ नवमान्नवमस्थे च सूर्ये षोडशेऽष्टादशवर्षे वा पितृमरणयोगः।

राहुयुते सूर्ये चन्द्रान्नवमस्थे शनौ सप्तमे चैकोनविंशे वर्षे पितृमरणयोगः।

नवमेशे द्वादशस्थे द्वादशेशे च नवमस्थे चतुश्चत्वारिंशे वर्षे पितृमरणयोगः।

सूर्यनवांशस्थे चन्द्रे लग्नेशे चाष्टमस्थे पञ्चत्रिंशे चैकचत्वारिंशे वा वर्षे पितृमरणयोगः।

दशमेशे सूर्य शनि मङ्गलयुते सति पञ्चाशद्वर्षे पितृमरणम्।

पुनरपिभाग्ययोगानाह्—

नवमेशयुते परमोच्चस्थे शुक्रे तृतीयस्थे च शनौ बहुभाग्ययोगः।

नवमस्थे गुरो नवमेशे च केन्द्रस्थे विंशद्वर्षात्परं बहुभाग्ययोगः।

परमोच्चस्थे बुधे नवमेशे च नवमस्थे षट्त्रिंशद्वर्षात्परतश्च बहुभाग्ययोगः।

लग्नस्थे नवमस्थे वा नवमेशे सप्तमस्थे च गुरौ (अत्र काशीसंस्करणे लग्नेशे नवमस्थे नवमेशे च लग्नस्थे सप्तमस्थे च गुरौ इति पाठः) धनवाहनलाभादिभाग्ययोगः।

दौर्भाग्ययोगः—

नवमान्नवमस्थे राहौ नवमेशे चाष्टमस्थे नरराशिस्थे वा (नीचराशिस्थे इति काशीसंस्करणे) भाग्यहीनयोगः।

शनियुते नवमस्थे शनौ लग्नेशे च नीचस्थे भिक्षाशनयोगः।

**उत्तरखण्डे त्रयोदशाध्यायानुसारं भाग्यविचार-प्रकारमाह।**[1]

भाग्यविचारो लग्नाच्चन्द्राच्च नवमस्थानात्कार्यः।

अत्रापि सर्वं बलाबलविचारपुरःसरं हानिलाभौ द्रष्टव्यौ। यदि कश्चिद्ग्रहः स्वोच्चमित्राधिमित्रमूलत्रिकोणान्यतमभावस्थः स्यात्तर्हि भाग्यवृद्धिं विजानीयात्। अथ च नीचशत्रवतिशत्रुक्षेत्री भवेत्तदा भाग्यहानिरिति भावः। अपि च लग्नाच्चन्द्राद्वा नवमस्थानात्केन्द्रत्रिकोणेषु यदि शुभा ग्रहास्तदोत्तमो भाग्योदयः। यदि पापास्तदा भाग्यहानिरिति ज्ञेयम्। तत्रापि विशेषोऽयं यदि ग्रहा स्वोच्चस्था मित्रस्था वा स्युस्तदोत्तमं फलम्। नीचादिकाःस्युस्तदा शुभफलाभावः।

स्वदेशे परदेशे वा भाग्योदयविचारः।

अथ भाग्येशः स्ववर्गस्थः स्वदेशे भाग्योदयं परवर्गस्थस्तदा परदेशे भाग्योदयं ज्ञेयम्।

---

१. वृ० पा० उ० भा० १३ अध्यायः सकलः (मुम्बई-सं०)

कस्मिन् वर्षे कदा भाग्योदयमिति ज्ञानप्रकारमाह।

भावग्रहयोरन्तरं कृत्वांशादिकस्य कलाः कुर्यात्ततश्च ताः कलाः शतद्वयेन विभजेत् लब्धं वर्षमासादिकं ज्ञेयम् पुनश्च वर्षमासादिकं द्विगुणीकृत्य स्थानद्वये स्थापयेत् ततश्चैकस्थानीयं पुनर्द्विगुणीकृत्य षष्टिसङ्ख्यया विभजेत् लब्धवर्षादिकं द्वितीयस्थानीयसङ्ख्यायां न्यूनीकुर्याल्लब्धश्च भाग्यभावस्य स्पष्टः कालो भवति।

अत्र प्रकारान्तरमपि—

ग्रहभावयोरन्तरं कृत्वा शेषं दशभिर्गुणीकृत्य ग्रहरश्मिसङ्ख्यया विभजेत् शेषं वर्षादिकं भाग्योदयसमयो ज्ञेयः। अथवाष्टकवर्गोत्थवर्षेभाग्योदयं विजानीयात्।

भावफलस्य विशेषण नववर्गेण निर्णयं कुर्यात्।

अथ च सूर्यादिग्रहाणामुच्चादिराशिस्थे तत्तल्लब्धग्रहानुसार व्यापारादिकमवगच्छेत्। तत्र क्रमशो निम्नप्रकारेण निरूपणम्।

यदि सूर्यः स्वोच्चस्थो मित्रस्थ उच्चवर्गादिस्थो वा स्यात्तदैभिर्वस्तुव्यापारैर्द्रव्यलाभादिकं ज्ञेयम्।

चामरादिराजचिह्नवस्तुविक्रयः, कृषिकर्म, सेवा, पैशुन्यम्, लिपिकर्म, धनार्जनं, व्ययं, रोगनाशकर्म, गमनागमनविक्रयः, विवादः, प्रेतकार्यं, भ्रातृणां कलहः, विवाहः, पुत्रादिकमित्यादिभिरिति भावः।

यदि चन्द्रः स्वोच्चादिकस्थस्तदा शङ्खादिविक्रयः, मैथुनकर्म, स्त्रीपु राजपुरुषेपु च मित्रता, कृषिकर्म, वस्त्रादिव्यापारः, ब्राह्मणविरोधः, स्वोत्कर्षहानिः स्वदेशद्रव्यबलादिहानिश्चेत्यादिकं फलं वाच्यम्।

भौमश्चोच्चादिकस्थश्चेत्तदा, सुवर्णसिद्धिः, जयः, वस्त्रलाभः, मित्रसमागमः, भ्रातृभिर्विवादः, शत्रुकर्म, स्त्रीषु चञ्चलनेत्रत्वं, स्त्रीलाभः दासलाभः, सर्वेच्छा, बलक्षयः, बलैर्धनाप्तिश्चेत्यादिकं फलं ज्ञेयम्।

मूलत्रिकोणस्थे कृषिकर्मणा राजसकाशाद्धनाप्तिर्भवति।

स्वगृहस्थे च वस्त्रसुवर्णादिकस्य लाभः। मित्रराशिस्थे च विशेषेण धन-

प्राप्तिः । अधिशत्रुस्थे क्रूरकर्मप्रवृत्तिः, अग्निभयः, कुष्टम्, सङ्ग्रहणी, गुल्मादिरोगश्चेत्यादिकं कुफलं वाच्यम् ।

बुधे चोच्चस्थे विद्याधनसुखयशसां सम्पादनं, राजसकाशाद्राजपुरुषाद्वा धनप्तियोगः । स्वस्थे सति लिपिशिल्पकर्मभ्यां राजस्त्रीयोगेन धनाप्तिः, मित्रक्षेत्रस्थे धनाप्तिः क्षेत्रदासादिलाभः समस्थे कायकर्मणा धनाप्तिः, अधिशत्रुस्थे विद्यानाशः, व्यापारे हानिः, अश्मीरोगः, कुष्टम्, नीचस्थे वन्धुविरोधः, युद्धे पराजयः, स्वपोडशांशे सति, वन्धुविवादेन देशान्तरभ्रमणेन च धनाप्तियोगः, क्षेत्रसिद्धिर्जयः विद्यालाभः, धनधान्यविवर्धनं, कृषिकर्मसमुद्योगः. सेवाकरणकौशलं विद्यार्जनञ्चेत्यादिक फलं ज्ञेयम् ।

गुरु-फलम्—

गुरौ भाग्यस्थे, लक्ष्मीवान्, सुखी, गुणवान्, अमात्यः, सर्वसम्पत्तिमांश्च मानवो भवति ।

मित्रराशिस्थे विद्यासम्पादनं, सेवाकरणञ्च, अधिमित्रस्थे स्वैश्वर्यप्राप्तिः, स्त्रीपुत्रमित्रैर्धनायतिः, शत्रुराशिस्थे च द्रव्यक्षेत्रनाशः पराजयश्चेत्यादिकं फलं भवति ।

शुक्रफलम्—

उच्चस्थे भार्गवे राजकृत्यकरः, श्रीमान् पुत्रवन्धुयुतः सेनापतिरमात्यो विद्यार्जनपरो धनी याजकोऽध्यापको वहुस्त्रीकश्च भवति स्वस्थे सेनाधिकारी, राजप्रियैर्वन्धुभिरिष्टाप्तिः, सेवाकृषिविद्यादिकर्मयुतः, इष्टापूर्तकर्मकृत्, सर्वसम्पद्युतः, श्रीमान् भवति ।

शनिफलम्—

शनेः फलं मङ्गलवदेव ज्ञेयम् ।

उपर्युक्तफलस्य कदा फलावाप्तिर्भविष्यतीति प्रश्ने तत्समयानयनप्रकारमाह ।

भाग्यस्थराशेर्नवांशराशिं भाग्यभावराशिरश्मिसङ्ख्यया गुणीकृत्य तत्रस्थग्रहरश्मि सङ्ख्यया पुनर्गुणीकृत्य त्रिभिर्विभजेत् । शेषे शून्ये सति विषमे भाग्यराशौ चरस्थिरद्विस्वभावराशिक्रमेणादौ मध्ये चान्ते फलावाप्तिरिति ।

युग्मनवांशे सति चादौ मध्येऽन्ते वा फल प्राप्तिः। भाग्यराशौ युग्मे सति विषमनवांशके मध्येऽन्ते आद्यं फलाप्तिः, अथ वा युग्मराशौ वा युग्मनवांशे सति प्रथमे मध्येऽन्ते वा फलाप्तिर्ज्ञेया।

दशमभावविचारः—

जातकपारिजाते दशमभावाद्विचारणीयवस्तूनां निर्देशः।

"आज्ञामानविभूषणानि व्यसनव्यापार निद्राकृषि-।
प्रव्रज्यागमकर्मजीवनयशोविज्ञानविद्याक्रमात् ।
कर्मस्वामिदिनेशबोधनगुरुच्छायासुतैश्चिन्तयेद्दुवतानि।'[1]

अशुभयोगनाह—

दशमे बलहीने जातकः कर्महीनो भवति।

राहौ केन्द्रत्रिकोणस्थे ज्योतिष्टोमादियज्ञकारकः प्रोक्तः। दशमस्थानादायुषः कर्मणश्च विचारो निगदितः।

एकादशे दशमे च पापाक्रान्ते जातको नीचकर्मकृत्स्वजनद्वेषी च जायते।

दशमेशोऽष्टमस्थे राहुणा युते सति जातको जनद्वेषी महामूर्खः दुष्कर्मकृच्च भवति।

दशमेशे सप्तमस्थे शनिभौमयुते सति सप्तमेशे च पापाक्रान्ते शिश्नोदर-परायणयोगः।

शुभयोगाः—

उच्चस्थे गुरुसंयुते दशमेशे नवमेशे च दशमस्थे मानैश्वर्यप्रतापप्राप्तियोगः।

एकादशेशे दशमस्थे दशमेशे च लग्नस्थेऽथ वा तयोः (एकादशदशमेशयो-रिति) केन्द्रस्थयोः सुखजीवन-प्राप्तियोगः—

गुरुयुते बलवति दशमेशे दशमस्थे (काशी संस्करणे दशमेशे बलवति गुरौ

---

१. कपिलेश्वर शास्त्री, जातकपारिजातः १५।१, चौखम्बा संस्कृत सीरिज बनारस।

मीनराशिस्थे इतिपाठः) वस्त्राभरणसौख्यादिप्राप्तियोगः। (अत्र मीनराशिस्थाने दशमभावस्यार्थबोधको मानशब्द एवोचितः)।

पुनरप्यशुभयोगमाह—

एकादशस्थे सूर्य शनिराहुभौमयुते सति कर्मनाशकयोगः।

अन्ययोगानाह—

उच्चांशे दशमस्थे राहौ गङ्गास्नानफलप्राप्तियोगः।
दशमे मीनराशौ सति शनिना च युते वा संन्यासयोगः।

शुभयोगानाह—

दशमस्थे गुरुयुते शुक्रे लग्नेशे बलसंयुते स्वोच्चस्थे च चन्द्रे सम्यग्ज्ञानार्थवान् जातको जायते।

दशमेशे चैकादशस्थे लग्नस्थे चैकादशेशे दशमस्थे शुक्रे च रत्नवान् नरो भवति।

स्वोच्चस्थे दशमेशे केन्द्रत्रिकोणगे गुरुणा युते दृष्टे वा सर्वकर्मयुतो भवति।
दशमेशे लग्नेशेन युते लग्नस्थे केन्द्रत्रिकोणगे च चन्द्रे सत्कर्मसंलग्नयोगः।

अशुभयोगाः—

नीचग्रहयुते दशमस्थे शनौ पापयुते च दशमनवांशे कर्महीनयोगः।

दशमेशेऽष्टमस्थेऽष्टमेशे च दशमस्थे पापग्रहेण युते सति दुष्कर्मकृद्योगः (अत्र मुम्बईसंस्करणे नार्थस्पष्टत्वम्) दशमेशे नीचस्थे दशमे दशमाद्दशमे च पापयुते कर्मवैकल्ययोगः।

कीर्तियोगानाह—

दशमस्थे चन्द्रे दशमेशे च चन्द्रात्त्रिकोणगे लग्नेशे च केन्द्रस्थे सत्कीर्तियोगः।

एकादशेशे दशमस्थे दशमेशे च बलान्विते गुरुणा च दृष्टे सत्कीर्तियोगः।

दशमेशे नवमस्थे लग्नेशे दशमस्थे पञ्चमस्थे च चन्द्रे ख्यातिकीर्तिप्राप्ति-योगः।[1]

एकादशभावः[2]—

एकादशभावस्य लाभेति नाम विद्यतेऽतोऽत्र लाभविचार एव प्रोक्तः।

लाभयोगाः—

एकादशेशे च केन्द्रत्रिकोणस्थे वहुलाभयोगः।

अत्रैकादशेश उच्चस्थोऽस्तं गतो वा स्यात्तदापि वहुलाभयोगः।

एकादशेशे द्वितीयस्थे केन्द्रस्थे द्वितीयेशे गुरुणा च युते सति वहुद्रव्यलाभ-योगः। (अत्र काशी-संस्करणेऽर्धश्लोकाधिक्यम्)। एकादशेशे शुभग्रहयुते तृतीयस्थे सति) षट्त्रिंशवर्षे सहस्रद्वयनिष्कप्राप्तियोगः।[3]

एकादेशेशे केन्द्रत्रिकोणस्थे शुभयुते सति सहस्रार्धनिष्कप्राप्तियोगः।

एकादशस्थे गुरौ द्वितीयस्थे चन्द्रे नवमस्थे च शुक्रे षट्सहस्रनिष्कप्राप्ति-योगः।

एकादशादेकादशस्थे चन्द्रेण युते गुरौ धनधान्ययुतो श्रीमान्, रत्नाद्याभूषण-युतो जातको भवति।

एकादशस्थे लग्नेशे लग्नस्थे चैकादशेशे त्रयस्त्रिंशवर्षे एव सहस्रनिष्क-प्राप्तियोगः।

एकादशस्थेद्वितीयेशे द्वितीयस्थे चैकादशेशे विवाहात्परतश्च भाग्योदय-योगः।

एकादशस्थे तृतीयेशे तृतीयस्थे चैकादशेशे भ्रातृभावाद्धनवाहनदिव्यभूषणा-दिप्राप्तियोगः।

---

१. बृ० पा० पू० भा० १४।२४०-२४६ (मुम्बई-सं०)
२. तत्रैव, १४।२४७-२६५.
३. बृ० पा० २२।४ (काशी-सं०)

द्वादशभावः[1]—

> विचारणीयवस्तूनां निर्देशो जातकपारिजाते[2]
> "लग्नादन्त्यतदीशमानुतनयैर्बूं राटनं दुर्गतिम् ।
> दातृत्वं शयनादि सौख्यविभवं वित्तक्षयं चिन्तयेत् ।।"

द्वादशेशश्चन्द्रो नवमैकादशपञ्चस्थः स्वोच्चस्वांशगोऽथ वा चैकादशनवमपञ्चमनवांश गश्चेत्तदा दिव्यगृहपर्यङ्कदिव्यगन्धभोगादिको दिव्यवस्त्रमाल्यादिभूषणयुतो भवति ।

अशुभयोगमाह—

यदि द्वादशेशः शत्रुराशिस्थो नीचगो नीचनवांशगो वा सन् षष्टेऽष्टमेऽष्टमनवांशके वा स्थितः स्यात्तदा जातको जाया सुखहीनोऽधिकव्ययशीलो दिव्यभोगहीनश्च भवति ।

यदि द्वादशेशः केन्द्रत्रिकोणगश्चेत्तदा स्त्रीसुखभूषणादियुतः सुखी च भवति ।

यथात्र लग्नाद्द्वादशेशे जातककृते विचारो विहितस्तथैव भ्रातृपुत्रपित्रादिकभावाद्द्वादशेन द्वादशभावेन वा तेषां भ्रातृपुत्रपित्रादिकानां सुखादिकस्य विचारो विधेयः ।

अत्र प्रसङ्गाद्ग्रहाणां दृश्यादृश्यचक्रस्थितिवशात्फलमाह ।

अर्थाल्लग्नात्प्रथमद्वितीयतृतीयदशमैकादशद्वादशस्था ग्रहाः प्रत्यक्षफलप्रदाः । वैपरीत्ये चतुर्थपञ्चमषष्ठसप्तमाष्टमनवमगा ग्रहा अप्रत्यक्षफलदायका भवन्ति । मरणानन्तरं गतिविशेषे योगमाह ।

द्वादशस्थे सूर्यभौमयुते राहौ द्वादशेशे च रविणायुते वा नरकप्राप्तियोगः । शुभाशुभयोगानाह ।

---

१. बृ० पा० पू० भा० १४।२६६-२८० (मुम्बई-सं०)

२. कपिलेश्वर शास्त्री, *जातक-पारिजातः* १४।७२, चौखम्बा संस्कृत सीरिज बनारस ।

द्वादशस्थे शुभग्रहे द्वादशेशे स्वोच्चस्थे शुभयुते दृष्टे वा मोक्षप्राप्तियोगः।
द्वादशे द्वादशेशे च पापाक्रान्ते दृष्टे वा देशदेशान्तरभ्रमणयोगः।
द्वादशे द्वादशेशे च शुभयुते दृष्टे वा स्वदेशभ्रमणयोगः।
द्वादशे शनिराहुभौमयुते शुभदृष्टिशून्ये च पापेन धनार्जनयोगः।

लग्नेशे द्वादशस्थे द्वादशेशे च लग्नस्थे शुक्रेण युते सति धर्ममूलेन धनव्ययोगः।

## (ख) पञ्चमभावेपुत्रविचारे विशेषः।

### (अ) पुत्रावरोधे पूर्वजन्म शाप ज्ञान विचारः। शान्त्युपायश्च।

ज्योतिषशास्त्रस्येदमेवोपयोगित्वं यद्भावि कुफल दूरीकरणार्थं यत्नो विधेयः। तेन कुफलनाशे सुफलप्राप्तिरिति। अस्मिन्नेव प्रकरणेऽस्य बीजान्युपलभ्यन्ते। तथा हि, यदि पूर्वजन्मकृत-दुष्कर्मफलेन सन्तत्यवरोधस्तत्र कीदृश उपायः प्रकर्तव्यो येन पुत्रलाभः स्यादस्य चर्चास्मिन् प्रकरणे विद्यते। तथा हि—

यदि पूर्वजन्मनि कृतापराधेन सर्पेण शापो दत्तस्तदा तस्य कीदृश उपायः।
केन केन ग्रहेण कस्य कस्य पूर्वजन्मार्जितशापस्य दोषो दृश्यते तत्प्रकारमाह।

तस्योपायश्च कीदृशस्तस्याप्युल्लेखोऽत्र वितनोति। अयं च सम्वादोऽत्र पार्वतीशङ्करयोः प्रश्नोत्तरेण निरूपितोऽस्ति मुम्बई-संस्करणे पूर्वखण्डे षोडशङ्ख्याके पूर्वजन्मशापद्योतक नामकेऽध्याये सविस्तरं प्रोक्तः।

काशी-संस्करणेऽपि चानेनैव नाम्ना त्र्यशीतिसङ्ख्याकेनाध्यायेन पूर्ववत्पार्वतीशङ्करसम्वादेनैव वर्णितः।

तथहि 'पार्वत्युवाच'—

देवदेव जगन्नाथ शूलपाणेवृषध्वज,।
केन योगेन मर्त्यानां बालस्य शिशुनाशनम्॥
शापमोक्षं च कृपया प्राणिनामल्पमेधसाम्।'

---

१. बृ० पा० पू० भा० १६।१, २ (मुम्बई-सं०)

काशीसंस्करणे—

केन योगेन पापेन ज्ञायतेऽपत्यनाशनम् ।
तेषां च रक्षणोपायं कृपया नाथ मे वद ॥[1]

*अथ द्वादशभावानां बलं गुरुलग्नेशसप्तमेशपञ्चमेशानां भावेशानाञ्च* बलाबलं ज्ञात्वा सन्ततिभावमधिकृत्य फलनिरूपणम् ।

सर्वेषु बलहीनेषु सन्तत्यभावः—

यदि पञ्चमे भावे सूर्यमङ्गलराहुशनयो बलयुता स्थिताः भवेयुस्तथा पुत्रकारकोऽपि क्षीणबली तदानपत्यतायोगः ।

विविधशापानाह । प्रथमंसर्पशापो निरूप्यते ।

पञ्चमे भौमदृष्टे भौमराशौ वा (मेषवृश्चिकयोः) राहौ, पञ्चमेशे राहुणा युते पञ्चमस्थे शनौ चन्द्रेण दृष्टे युते वा, पुत्रकारके राहुणा युते पञ्चमेशे बलहीने लग्नेशे भौमेन युते च, पुत्रकारके भौमेन युते लग्ने च राहुयुते पञ्चमेशे च दुःस्थे (षष्ठाष्टमद्वादशेषु) ।

भौमनवांशे भौमयुते पञ्चमेशे बुधे राहुगुलिकयुते (शनियुते वा), पञ्चमे भौमराशौ राहुणा युते बुधदृष्टे युते वा ।

पञ्चमे सूर्यशनिभौमराहुबुधगुरुयुते पञ्चमेशे लग्नेशे च निर्बले सति ।

लग्नेशे राहुयुते पञ्चमेशे भौमयुते पुत्रकारके च राहुणा दृष्टे, सर्पशापात्सुत्रनाशः ।

शापपरिहारप्रकारः—

स्वगृह्योक्तविधिना सुवर्णनिर्मितां नागप्रतिमां प्रतिष्ठाप्य सम्पूज्य च गोभूमितिलसुवर्णादिसंयुतां स्वशक्तिवित्तानुसारं च दद्यात् । एवं कृते शान्तिर्भवति पुत्रश्च जायते नागप्रसादिति भावः ।

---

१. वृ० पा० ८३।५ (काशी-सं०)

पितृशापमाह—

पञ्चमस्थे सूर्ये नीचस्थे पञ्चमराशौ नवांशके शनियुते पापग्रहमध्यस्थे सूर्ये त्रिकोणे च पापाक्रान्ते पापमध्ये पापदृष्टे वा, सूर्यराशिस्थे गुरौ पञ्चमेशे सूर्ययुते पंचमे लग्ने च पापाक्रान्ते, लग्नेशे दुर्बले पञ्चमस्थे पञ्चमेशे सूर्ययुते पञ्चमे लग्ने पापयुते, दशमेशे पञ्चमस्थे पञ्चमेशे च दशमस्थे पेञ्चमे लग्ने च पापयुते, दशमस्थानाधिपे भौमे सति पञ्चमेशेन संयुते लग्ने पञ्चमे दशमे पापयुते च।

दशमेशे दुःस्थे पुत्रकारके च पापराशिस्थे पञ्चमे लग्ने चापि पापे, लग्न-पञ्चमस्थेषु सूर्य भौमशनिषु चाष्टमे द्वादशे राहुगुरुयुते, लग्नादष्टमे सूर्ये पञ्च-मस्थे शनौ पञ्चमेशे राहुयुते लग्ने पापयुते च, द्वादशेशे लग्नस्थेऽष्टमेशे पञ्चमस्थे दशमेशेऽष्टमस्थे षष्ठेशे पञ्चमस्थे दशमस्थे वा पुत्रकारके राहुयुते च, सति पितृ-शापात्पुत्रक्षयः प्रोक्तः।

एतद्दोषशान्त्यर्थं गयाश्राद्धं कुर्वीत। सहस्रकं दशसहस्रकं ब्राह्मणानां भोजयेत्। कन्यादानं कृत्वा सवत्सकायाः गोदानं कुर्वीत। एवं कृते पितृशापशा-न्तिर्भवति। पितृप्रसादाच्च कुल वर्द्धते पुत्रपौत्रादिप्राप्तिर्जायते।

मातृशापमाह—

निम्नाङ्कितयोगेषु। अर्थात् पञ्चमेशे चन्द्रे नीचे पापमध्यगते वा चतुर्थे पञ्चमे च पापयुते।

एकादशे शनियुते चतुर्थे च पापाक्रान्ते पञ्चमस्थे नीचस्थे चन्द्रे।
पञ्चमेशे दुःस्थे लग्नेशे नीचस्थे चन्द्रे पापयुते।
पञ्चमेशे दुःस्थे चन्द्रपापनवांशगे लग्ने पञ्चमे पापयुते च।
पञ्चमेशे चन्द्रे शनिराहुमङ्गलयुते पञ्चमे नवमे वा पुत्रकारके।
चतुर्थेशे भौमे शनिराहुयुते सति पञ्चमे लग्ने च सूर्यचन्द्रयुते च।
लग्नेशे पुत्रेशे च षष्टस्थेऽष्टमस्थे चतुर्थेशे, दशमेशेऽष्टमेशे च लग्नस्थे।

षष्ठेऽष्टमेशे च लग्नस्थे द्वादशस्थे चतुर्थेशे, पञ्चमे गुरुचन्द्रयोगे पापयुते सति, पापमध्यगे लग्ने चन्द्रे तु सप्तमस्थे, चतुर्थे पञ्चमे च शनिराहुयुते, अष्टमेशे पञ्चमस्थे, पञ्चमेशेऽष्टमस्थे, चन्द्रे चतुर्थेशे च षष्ठाष्टमद्वादशान्यतमभावस्थे, मातृशापात्पुत्रक्षयः प्रोक्तः।

एवमेव कर्कलग्ने भौमराहुयुते, पञ्चमे च शनिचन्द्रयुते, लग्ने पञ्चमेऽष्टमे द्वादशे च भौमराहुसूर्य शनियोगे, लग्नेशे चतुर्थेशे च षष्ठाष्टमद्वादशान्यतमभावस्थे, अस्टमस्थे गुरौ भौमराहुयुते सति पञ्चमे शनिचन्द्रयुते चाप्येषु मातृशापादेव पुत्र क्षय इति पूर्ववज्ज्ञेयम्।

मातृशापशान्त्युपायमाह—

सेतुस्नानं (सेतुबन्धरामेश्वरे समुद्रस्नानमिति भावः) कुर्वीत। गायत्रीलक्षजपं विधाय ग्रहदानं (सर्वग्रहाणां कृते शास्त्रोक्तविधिना वस्तूनां दानमिति) कृत्वा रजतपात्रे दुग्धं च दद्यात्। पुनर्ब्राह्मणभोजनं कुर्वीत। प्रदक्षिणानामष्टोत्तरसहस्रक-मश्वथवृक्षस्य भक्तिचेतसा विदधीत। अनेनोपाययोगेन मातृशापशान्तिर्भवतिमातुः प्रसादाच्च कुलं वर्द्धते पुत्रपौत्रादिभिरिति भावः।

भ्रातृशापयोगाः—

तृतीयेशे पञ्चमस्थे भौमराहुयुते पञ्चेशे लग्नेशे चाष्टमभावस्थे सति लग्ने पञ्चमे च भौमशनियुते सति, तृतीयेशे नवमस्थे, गुरौ नीचगे पञ्चमस्थे च शनौ, पञ्चमेशेभौमे चाष्टमस्थे। लग्नेशे द्वादशस्थे, भौमे पञ्चमस्थे पञ्चमेशेऽष्टमस्थे पापयुते सति। पापमध्यगे लग्ने पञ्चमे च लग्नेशपञ्चमेशपुत्रकारकेषु च त्रिकस्थेषु। दशमेशे तृतीयस्थे पापयुते सति पञ्चमस्थे भौमे शुभयुते च। पञ्चमे बुधराशौ शनिराहुयुते सति द्वादशस्थे च भौमे। लग्नेशे तृतीयस्थे, तृतीयेशे च पञ्चमस्थे लग्ने तृतीये पञ्चमे च पापयुते। तृतीयेशेऽष्टमस्थे पुत्रकारके पञ्चमस्थे राहुगुलिकयुते दृष्टे वा। अष्टमेशे पञ्चमस्थे तृतीयेशेन युते, भौमशनियुते चाष्टमे च सति भ्रातृ-शापात्पुत्रक्षयो ज्ञेयः।

शान्त्युपायमाह—

विष्णुकीर्तनं श्रवणं च कुर्यात्। चान्द्रायण व्रतमाचरेत् कावेर्यां विष्णु-प्रतिमासन्निधौ चाश्वत्थवृक्षारोपण कुर्यात्। धेनूनां दशकस्य दानं कुर्वीत। प्राजा-पत्यमाचारेत्। फलयुतां पृथिवीमपि दद्यात् भक्तिसंयुत इति। एवं कृते पुत्रवृद्धि-र्भवति भ्रातृशापस्य च शान्तिर्भवति।

मातुलशापमाह—

पञ्चमस्थे बुधे, गुरौ राहुभौमयुते, लग्ने च शनियुते, लग्नपञ्चमेशयोः पञ्चमस्थयोः बुधभौमयुतयोः सतोः, अस्तपञ्चमेशे लग्नस्थे सप्तमस्थे च शनौ लग्नेशे बुधयुते सति, चतुर्थेशे द्वादशेशे च लग्नस्थे चन्द्रबभौमयुते च पञ्चमे भावे, सति मातुलशापात्पुत्रक्षयः प्रोक्तः ।

शान्त्युपायमाह—

मातुलशापदूरीकरणार्थं विष्णुप्रतिमां प्रतिष्ठापयेत् । सेतुबन्धरामेश्वरस्य दर्शनं कुर्यात् । वापीकूपतडागादीनाञ्च स्थापनं कुर्वीत् । मातुलशापशान्तिर्भवति कुलञ्च वर्द्धते ।

ब्रह्मशापमाह—

गुरुराशौ राहुयोगे पञ्चमे गुरुभौमशनियुते नवमेशेऽष्टमस्थे, नवमेशे पञ्चमस्थे पञ्चमेशेऽष्टमस्थे गुरुभौमराहुयुते सति, नवमेशे नीचस्थे द्वादशेशे पञ्चमस्थे राहुयुते दृष्टे वा, गुरौ नीचस्थे लग्ने पञ्चमे वा राहुयुते पञ्चमेशे त्रिकस्थे, पापयुते पञ्चमेशे गुरौ चाष्टमस्थे । पञ्चमेशस्य सूर्यचन्द्रयोश्च वाष्टमस्थयोः सतोः । शनिनवांशस्थे भौमयुते गुरौ, पञ्चमेशे च द्वादशस्थे लग्नस्थे गुरौ, राहुयुते शनौ च नवमस्थे, द्वादशस्थे वा गुरौ । एषु योगेषु ब्रह्मशापात्पुत्राभावः कथितः । ब्रह्मशापस्य लक्षणमाह यो मनुष्यो विद्यागर्वेण ब्राह्मणानामपमानं करोति स ब्रह्मशापयुतो भवति तेन शापेन सन्तत्यवरोधो भवतीति भावः ।

शान्त्युपायमाह—

*ब्रह्मकूर्चत्रयं कुर्वीत*
सदक्षिणां गां दद्यात् ।

पञ्चरत्नयुतसुवर्णस्य दानं कुर्यात् । ब्राह्मणानां सहस्रकं दशसहस्रकं वा भोजयेत् ।

अनेन ब्रह्मशापशान्तिर्भवति ।

पत्नीशापमाह—

सप्तमेशे पञ्चमस्थे शनौ च सप्तमेशस्य नवांशस्थे पञ्चमेशेऽष्टमस्थे च ।

सप्तमेशेऽष्टमस्थे द्वादशेशे पञ्चमस्थे पुत्रकारके च पापाक्रान्ते।
पञ्चमस्थे शुक्रे सप्तमेशेऽष्टमस्थे पुकारके च पापयुते।
द्वितीयस्थे पापे सप्तेमेशेऽष्टमस्थे पञ्चमे पापयुते च।
नवमस्थे शुक्रे सप्तमेशेऽष्टमस्थे लग्ने पञ्चमे च पापयुते सति।
नवमस्थे शुक्रे पञ्चमेशे षष्टस्थे गुरुलग्नेशसप्तमेशेषु च त्रिकस्थेषु सत्सु।

पञ्चमे शुक्रराशौ (तुलावृषयोः) राहुचन्द्रयुते द्वादशे लग्ने द्वितीये पापयुते सति।

शनिशुक्रयुते सप्तमे, अष्टमेशे पञ्चमस्थे, रविराहुयुते च लग्ने।
द्वितीये भौमे, द्वादशे गुरौ, पञ्चमे शुक्रे राहुदृष्टे युते वा।

द्वितीयेशे सप्तमेशे चाष्टमस्थे, पञ्चमे भौमे, लग्ने शनौ, पुत्रकारके पापयुते सति। लग्ने राहौ, पञ्चमे शनौ, नवमे भौमे, पञ्चमेशे सतमेशे चाष्टमस्थे।

एषु योगेषु पत्नीशापात्पुत्राभावो निगदितः।

शान्त्युपायमाह—

सर्वभूषणभूषितां लक्ष्मीनारायणप्रतिमां विप्रदम्पत्योर्कृते भूषण शय्यां च दद्यात्। धेनूनां दशकं प्रयच्छेत्। शापशान्तिर्भवति पुत्रोत्पत्तिर्जायते।

प्रेतशापमाह—

प्रेतशापविवेचनं विधत्ते। यस्य प्रेतक्रिया न भवति स प्रेतो भूत्वा वंशविच्छेदं कुरुते। पितृक्रियालोपेनास्य शापस्योत्पत्तिरिति।

योगानाह—

शनिसूर्ययुते पञ्चमे, क्षीणचन्द्रे च सप्तमे, लग्ने राहौ, द्वादशे गुरौ।
पञ्चमेशे शनौ चाष्टमस्थे भौमे लग्नस्थे पुत्रकारकेचाष्टमस्थे।
लग्नस्थे पापे, द्वादशे सूर्ये, पञ्चमे भौमसूर्यबुधयुते, पञ्चमेशेऽष्टमस्थे।
लग्नस्थे राहौ, पञ्चमस्थे शनौ पुत्रकारकेऽष्टमस्थे च।
लग्ने राहुशुक्रगुरुयुते, चन्द्रे च शनिना युते, लग्नेशे चाष्टमस्थे।
लग्ने राहौ, पञ्चमस्थे शनौ भौमदृष्टे युते वा।

पुत्रकारके नीचस्थे पञ्चमस्थे नीचदृष्टे नीचयुते वा ।

लग्ने शनौ, पञ्चमे राहौ, सूर्ये चाष्टमस्थे, द्वादशे च भौमे ।

सप्तमेशे त्रिकस्थे, पञ्चमे चन्द्रयुते, शनिगुलिकयुते च लग्ने, शनिशुक्रयुतेऽष्टमेशे पञ्चमस्थे पुत्रकारके चाष्टमस्थे, एषु योगेषु प्रेतशापात्पुत्रक्षय इति।

शान्त्युपायमाह—

विष्णु-श्राद्धं रुद्रस्नानं ब्रह्ममूर्तिदानं च कुर्यात् ।

तक्ष धेनुरजतपात्रनीलमण्यादीनां वस्तूनां दानं दद्यात् ।

एवं प्रेतशापनाशो भवति सुतोत्पत्तिश्च जायते इति भावः ।

## (इ) बहुपुत्रयोगाः

राहुसूर्यबुधयुते पञ्चमे पुत्रकारके शुभसंयुते दृष्टे वा ।

पञ्चमेशे शुभराशिस्थे शुभदृष्टे पुत्रकारके च केन्द्रस्थे ।

लग्नेशे पञ्चमस्थे पञ्चमेशे च लग्नस्थे गुरौ केन्द्रत्रिकोणगे सति ।

पञ्चमेस्थे शनिनवांश रहिते राहौ शुभदृष्टे च सति ।

पञ्चमेशे स्वोच्चस्थे लग्नेशे पुत्रकारके च शुभसंयुते ।

पञ्चमे पञ्चमेशे वा गुरुयुते शुभदृष्टे वा युते सति ।

पूर्णबलाढ्ये गुरौ, लग्नेशे च पञ्चमस्थे पञ्चमेशे चापि बलान्विते ।

पञ्चमस्थे बलयुते गुरौ लग्नेशे चापि बलवति ।

वर्गोत्तमांशे गुरौ, लग्नेशस्य नवांशपतौ शुभग्रहे पञ्चमेशेन युते दृष्टे वा सति ।

द्वितीयेशे पञ्चमस्थे पूर्ण बलयुते, गुरौ च वैशेषिकांशस्थे ।

स्वोच्चस्थे लग्नेशे पञ्चमेशे च परस्परं दृष्टे परस्परस्थाने गते वा ।

पञ्चमेशस्य नवांश पतौ शुभयुते दृष्टे वा ।

लग्नेश पञ्चमेशयोः शुभग्रहयुतयोः केन्द्रस्थयोश्च द्वितीये बलान्विते सति ।

लग्नेशे सप्तमस्थे, सप्तमेशे द्वितीयेशे च लग्नस्थे ।

सप्तमेशे ग्रहयुते स्वनवांशपतिराशिस्थे पञ्चमेशे द्वितीयेशे च लग्नस्थे ।

एषु योगेषु बहुपुत्रयोगो भवति ।

## (उ) अनपत्ययोगाः ।

नवम पञ्चमद्वितीयलग्नराशीशाः पापनवांशकाः पापयुताः स्युः ।
लग्नसप्तमपञ्चमेशा गुरुश्च यदि बलहीनाः स्युः ।
लग्ननवांशेशद्वादशेशौ चाष्टमस्थौ पञ्चमेशश्च क्रूरषष्ट्यंशस्थितश्चेत् ।
लग्नेशपञ्चमेशौ त्रिकस्थौ पुत्रकारकश्च नीचराशिगश्चेत् ।
गुरुः क्रूरषष्ट्यंशगः पञ्चमेशश्चाष्टमस्थोऽष्टमेशश्च पञ्चमस्थश्चेत् ।
एषु योगेस्वनपत्ययोगा भवन्ति ।

## (ऋ) चिरात्पुत्रयोगाः

लग्नेशे भौमे स्वोच्चस्थे, रविशनियुते शुभदृष्टे चाष्टमे सति ।
लग्ने शनौ, गुरौ चाष्टमे, द्वादशे भौमे शुभदृष्टे स्वोच्चस्थे वा सति ।
शनिगुरुबुधयुते पञ्चमे, पञ्चमेशे च लग्नस्थे शुभराशिस्थे वा सति ।
पञ्चमें राहुसूर्यशुक्रगुरुयुते शुभदृष्टे वा युते, पञ्चमेशे शुभराशिस्थे सति ।
लग्नस्थे बुधे, द्वितीये, तृतीये च पापयुते पञ्चमेशे शुभराशिस्थे सति ।
एषु योगेषु चिरात्पुत्रप्राप्तियोग इति भावः ।

## (लृ) दत्तकपुत्रयोगाः ।

पञ्चमे भौमे शनिराशौ लग्ने बुधेन युते दृष्टे वा ।
पञ्चमे बुधराशौ शनिराशौ वा शनिगुलिकयुते दृष्टे वा ।
पञ्चमे बुधराशौ बुधयुते दृष्टे वा लग्नेशे च शनौ सति ।
पञ्चमेशे शनियुते बुधभौमदृष्टे लग्नेशे बुधनवांशस्थे ।
सप्तमेशे चैकादशस्थे पञ्चमेशे शुभसंयुते, पञ्चमे शनौ बुधे वा ।
पञ्चमेशे नवमस्थे, नवमेशे दशमस्थे, पञ्चमे शनिदृष्टे ।
लग्नेशे शुक्रे चोच्चस्थे, पञ्चमे शनियुते, कारके च बलवति ।
पञ्चमे चन्द्रे लग्ने पञ्चमे च शनौ पूर्णबलवति गुरौ च ।
पञ्चमेशे सूर्ये लग्ने पञ्चमे शनिबुधयुते पञ्चमेशे बलवति च ।
लग्नेशे बुधे पञ्चमस्थे भौमदृष्टपुत्रकारके चैकादशस्थे ।
लग्नेशे गुरौ पञ्चमे शनिदृष्टे, पञ्चमेशे मङ्गलराशिस्थे (मेषवृश्चिकयोः)

एषु योगेषु दत्तकपुत्रयोगा भवन्ति ।

सूर्यादिग्रहानुसारं तत्तद्ग्रहकृतसन्यत्यवरोधफलदूरीकरणार्थं तत्तद्ग्रहानुसारं शान्त्युपायानाह ।

सूर्यदोषे हरिवंशपुराणश्रवणं, चन्द्रभौमदोषे च शङ्करपूजनं रुद्रीपाठश्च, बुधदोषे संपुटकांस्यपात्रविधिः, गुरुदोषे पितृपूजा, शुक्रदोषे गोप्रतिपालनं, शनिदोषे मृत्युञ्जयमन्त्रजपं, राहुदोषे कन्यादानं, केतुदोषे कपिलागोदानमेते चात्रोपायाः प्रोक्ता एषां विधिपूर्वकमनुष्ठानेन पुत्रोत्पत्तिर्भवति ।

अस्यैव प्रकारणस्याचार्यमन्त्रेश्वरेणापि फलदीपिकायां द्वादशोऽध्यायः पुत्र-चिन्तानाम्ना वर्णितः ।

पुत्रयोगमनपत्ययोगञ्चाधिकृत्य वर्णनानन्तरं सन्तानदोषपरिहारोऽपि चोल्लिखितः तथा हि ।

'विष्टिः स्थिरं वा करणं यदि स्यात् कृष्णं भजेत् पौरुषसूक्तमन्त्रैः ।
षष्ठ्यां गुहाराधनमत्र कार्यं यजेच्चतुर्थ्यां किल नागराजम् ॥
रामायणस्य श्रवणं नवम्यां यद्यष्टमी चेच्छ्वणव्रतं च ।
चतुर्दशी चेद्यदि रुद्रपूजां स्याद्द्वादशी चेत्स्मृतमन्नदानम् ॥
तृप्तिपितृणामिह पञ्चदश्यां कृष्णे दशम्याः परतोऽतियत्नात् ।
पक्षत्रिभागेष्वपि नागराजं स्कन्दं च सेवेत हरिं क्रमेण ॥'[1]

एवमत्र तिथिकरणदोषशान्तिरुक्ता—

पुत्रावरोधे शिवगरुडपितृमातृसुवासिनी भगवती ग्रामदेवता कार्तिकेयरिपु-ज्ञातिबालस्त्रीभ्रूणद्विजगुरुसर्पप्रेतादिकृतविविधशापानां तत्तद्ग्रहानुसारमुल्लेखो विहितः ।

---

१. मन्त्रेश्वरः, फलदीपिका, (१२।१६-१८) के० एन० कृष्णमूर्ति, ६५ पद्मनाभ रोड, बासावांगुदी, बंगलोर ।

पुष्पद्रुमाश्वत्थादिवृक्षाणां छेदोऽपि पुत्रावरोधे ग्रहानुसारमेव निर्दिष्टः।[1]

*जातकपारिजातेऽपि पुत्रभावमधिकृत्य यत्र विविधयोगाः प्रोक्तास्तत्र* पाराशरस्यानुकरणं कृत्य देवविप्ररिपुपितृमातृसर्पादीनां शापदोषेण तत्तद्ग्रहयोगानुसारं योगानामपि निरूपणं विहितम्।[2]

## (ग) द्वादशभावेशफलकथनम्।[3]

द्वादशभावेशानां पृथक् पृथक् द्वादशभावस्थित्यनुरूपं फलकथनम्।

द्वादशभावानां पृथक् पृथक् फलमुक्त्वास्मिन् प्रकरणे द्वादशभावेशानां द्वादशभावेषु पृथक् पृथक् स्थितिवशात्फलं निरूप्यते।

पूर्वं लग्नेशस्य फलमाह—

लग्नेशे लग्नस्थे पुष्टदेहस्वपराक्रमार्जितधनसम्पन्नो मनस्वी द्विभार्यः परस्त्रीगामी वा चञ्चलो भवति।

लग्नेशे द्वितीयभावस्थे धनी सुखी सुशीलो विद्वान् बहुभार्यो गुणवान् च प्रोक्तः।

लग्नेशे तृतीयस्थे— सिंहतुल्यविक्रमः सर्वसम्पत्तियुतो मानी द्विभार्यः सुखी बुद्धिमांश्च निगदितः;

चतुर्थस्थे लग्ने— पितृमातृसौख्ययुतो बहुभ्रातृकः कामी सुन्दरश्च कथितः।

पञ्चमस्थे लग्नेशे— मध्यमपुत्रसौख्ययुतो ज्येष्टापत्यहीनः क्रोधी राजप्रवेशकश्च ज्ञेयः।

---

१. तत्रैव १२।१६-२२.

२. कपिलेश्वर शर्मा, जातक पारिजातः १३।२२-३७, चौखम्बा संस्कृत सीरिज, बनारस।

३. बृ० पा०, १५ अध्यायः सकलः (मुम्बई-सं०)

षष्ठस्थे लग्नेशे— देहसौख्यहीनो भवति। यदि चात्र लग्नेशः शुभदृष्टि-रहितः पापेन युतो भवति तदा शत्रुतः पीडाऽपि प्रोक्ता।[1]

सप्तमस्थे लग्नेशे— भार्यामरणं प्रवासी दरिद्री विरक्तश्च भवति। (अत्र पापग्रहे सति भार्यामरणमिति काशी-संस्करणम्) नृपश्चापि जायते। (अनेन शुभग्रहे सतीति स्वतः प्रतीयते)।

अष्टमस्थे सति— सिद्धविद्यायुतो द्यूतकरश्चौरः क्रोधी परदाररतश्च विज्ञेयः।

नवमस्थे सति— भाग्यवान् जनप्रियश्चतुरो, वाग्मी, पुत्रधनदारयुतो विष्णुभक्तिरतश्च बोध्यः।

दशमस्थे सति— पितृसौख्ययुतो नृपमान्यः ख्यातः स्वार्जितधनयुतो भवति।

एकादशस्थे सति— बहुलाभयुतो बहुगुणौदार्यान्वितः ख्यातश्च प्रोच्यते।

द्वादस्थे सति— देहसौख्यहीनो व्यर्थव्ययकरो महाक्रोधी च भवति (अत्र मुम्बई) संस्करणे दशमैकादशद्वादशभावफलं नाङ्कित मिति प्रमाद एव कारणं ज्ञायते)।

**द्वितीयभावेशफलम्—**

द्वितीयेशे लग्नस्थे— पुत्रवान् कुटुम्बपालकः धनवान् परकार्यकृन्निष्ठुरश्च प्रोक्तः।

द्वितीयस्थे सति— धनवान् गर्वी सुतहीनो द्विभार्यस्त्रिभार्यो वा ज्ञेयः।

तृतीयस्थे सति— विक्रमी, गुणी, कामी, लोभी, देवनिन्दकः, परदाराभि-गामी च कथितः।

---

१. तत्रैव १५।१६, षष्ठस्थस्य लग्नेशस्य फलं नोल्लिखितम्। अत्र प्रमाद एव कारणमिति ज्ञायते।

चतुर्थस्थे पञ्चमस्थे च सति— सर्वसम्पत्तिमान् भवति। (अस्य मुम्वई-संस्करणे नोल्लेखः)

षष्ठस्थे सति— वित्तनाशो गुदोरुप्रदेशरोगश्च निगदितः।

सप्तमस्थे सति— वंद्यःपरदाराभिगामी च भवति तस्य पत्नी वेश्या माता च व्यभिचारिणी प्रोक्ता।

अष्टमस्थे सति— भूमिद्रव्यप्राप्तिः पत्नीसौख्यं स्वल्पं ज्येष्ठभ्रातृसुखाभावश्च विज्ञेयः।

नवमस्थे सति— धनवान्, उद्यमी, चतुरो, बाल्ये रोगी परतश्च सुखी निगदितः।

दशमस्थे सति—कामी, मानी, बहुस्त्रीधनयुतोऽपि पुत्रसुखहीनः कथितः।

एकादशस्थे सति— सर्वलाभयुतो सदोद्योगी मानी कीर्तिमांश्च जायते। (मुम्वई-संस्करणे नोल्लेखः)

द्वादशस्थे— मानी, साहसी, धनहीनो, ज्येष्ठापत्यसुखरहितो राजभृत्यश्च भवति।

**तृतीयेशफलमाह—**

तृतीयेशे लग्नस्थे चैकादशस्थे च फलसामान्यम्। स्वभुजार्जितधनयुतो मूर्खः कृशो महारोगी, साहसी, परसेवारतश्च प्रोक्तः।

द्वितीयस्थे सति— गुदाभञ्जनिकः, स्थूलः, परधनदाररतः, स्वल्पारम्भी, सुखहीनो, भवति।

तृतीयस्थे सति— विक्रमी, पुत्रधनसुखैश्चर्ययुतश्च प्रोक्तः।

चतुर्थस्थे पञ्चमस्थे— दशमस्थे च सति फलसामान्यम्। सुखी, धनबुद्धियुतश्च भवति। परं चास्य भार्यातिक्रूरा कथिता।

षष्ठस्थे सति— भ्रातृशत्रुर्महाधनी, मातुलसुखहीनो, मातुलानीप्रियश्च प्रोक्तः।

सप्तमस्थेऽष्टमस्थे च सति सामान्यं फलम्—

चौरः परदारगामी, बाल्ये कष्टयुतो राजद्वारे च मृत्युमाप्नोति।

नवमस्थेव्ययस्थे च सामान्यं फलम्—

स्त्रीभिर्भाग्योदयम्। पिता च महाचौरो निगदितः।

**चतुर्थेशफलमाह—**

लग्नस्थे सप्तमस्थे च— विद्यागुणमातृभूमिवाहनसुखयुतः सभायां मूकश्च भवति

द्वितीयस्थे— कुटुम्बधनसुखान्वितो, मानी, साहसी, मायावी, च भवति।

तृतीयस्थे चैकादशस्थे— नित्यरोगी, गुणवान्, स्वोपार्जिधनयुत, उदारश्च कथितः।

चतुर्थस्थे— मन्त्री, चतुरो, मानी, सुशीलः, सुखी, स्त्रीप्रियः, सर्वधनैश्वर्ययुतश्च जायते।

पञ्चमस्थे नवमस्थे च— सुखी, सर्वजनप्रियो, मानी, वैष्णवश्च भवति।

षष्ठस्थे— क्रोधी, चौरोऽभिचारी दुष्टचित्रो, मनस्व्यपि च जायते।

अष्टमस्थे द्वादशस्थे च सामान्यं फलम्—

सुखहीनः, क्लीबो, जारजश्च प्रोक्तः

दशमस्थे— राजमान्यो; रसायनी, महत्सौख्ययुतश्चभवति।

**पञ्चमेशफलमाह—**

लग्नस्थे तृतीयस्थे च तुल्यं फलम्—

मायावी पिशुनोऽतिकृपणश्च भवति।

द्वितीमस्थेऽष्टमस्थे च तुल्यं फलम्—

बहुपुत्रः कासश्वासरोगयुतो धनवान्, सुखहीनः, क्रोधी, च प्रोक्तः।

चतुर्थस्थे— मातृसुखयुतो, लक्ष्मीवान्, बुद्धिमान् मन्त्री, गुरुर्वा भवति।

पञ्चमस्थे— क्रूरभाषी, धार्मिको मतिमान्, पुत्रसुखहीनश्च भवति।

षष्ठे द्वादशस्थे च तुल्यं फलम्—

मृतपुत्रो, दत्तकपुत्रयुतो, धनवांश्च भवति। अस्य पुत्रेण शत्रुतापि जायते।

सप्तमस्थे— मानी, सर्वधर्मवान्, तुङ्गशरीरो भक्तियुतश्च विज्ञेयः।

नवमस्थे दशमस्थे च तुल्यं फलम्—

अस्य पुत्रो नृपतुल्यो, ग्रन्थकर्ता, कुलदीपकश्च प्रोक्तः।

एकादशस्थे— पण्डितो, जनप्रियो, ग्रन्थकर्त्ता, वहुपुत्रधनयुतो, महोदयश्च प्रोच्यते।

## अथ षष्ठेशफलमाह—

लग्नस्थे सप्तमस्थे चैकादशस्थे तुल्यं फलम्—

धनगुण-कीर्तिमान् साहसयुतः पुत्रहीनश्च प्रोक्तः।

द्वितीयस्थे दशमस्थे च तुल्यं फलम्—

साहसी, कुलख्यातः, परदेशवासी, वक्ता, स्वकर्मरतश्च कथितः।

तृतीयस्थे चतुर्थस्थे च तुल्यं फलम्—

क्रोधी, मनस्वी, पिशुनो, द्वेषी, चञ्चलोऽतिधनयुतश्च कथितः।

पञ्चमस्थे— दयालुः, सुखी, सौम्यः, स्वकार्यचतुरश्च निगदितः। मित्रधनादिकञ्चास्य चञ्चलं प्रोक्तम्।

अष्टमस्थे द्वादशस्थे च सामान्यं फलम्—

रोगी, परदाराभिगामी, जीवहिंसारतो, मनस्विनां शत्रुश्च प्रोच्यते।

नवमस्थे— काष्ठपाषाणव्यापारी कथितः। व्यापारे चापि क्वचिद्धानिः क्वचिद्वृद्धिश्चास्य ज्ञेया।

**सप्तमेशफलमाह्—**

लग्नस्थे सति— परदारलम्पटो, दुष्टश्चतुरो धीरो, हृदि वातरोगश्च भवति।

द्वितीयस्थे नवमस्थे च तुल्यं फलम्—
नानास्त्रीयुतः, आरम्भी, दीर्घसूत्री, स्त्रीषु चित्तासक्तश्च कथितः।

तृतीयस्थे चैकादशस्थे तुल्यं फलम्—
मृतपुत्रश्च, भवति। पुत्राणां जीवनं क्वचित्। यत्नेन पुत्रोत्पत्तिः स्यात्।

चतुर्थस्थे दशमस्थे सामान्यं फलम्—
धर्मात्मा, दन्तरोगी, सत्यवक्ता, च भवति। अस्य पत्नी पतिव्रता न कथिता।

पचमस्थे— सर्वगुणधनहर्षयुतो सदा सुखी मानी च प्रोक्तः।

षष्ठस्थेऽष्ठमस्थे च तुल्यं फलम्—
कामिनी, रोगिणी चास्य पत्नी भवति। क्रोधी, सुखही-श्चजायते।

सप्तमस्थे— स्त्रीसुखयुतो, बुद्धिमान् धीरो, वातरोगी च भवति।
(नास्य मुम्बई-संस्करणे चोल्लेखः)

द्वादशस्थे— दरिद्रः, कृपणो, निर्धनी, वस्त्राजीवी, च भवति। अस्य सुन्दरी भार्या प्रोक्ता।

**अष्टमेशफलमाह्—**

लग्नस्थे सप्तमस्थे सामान्यं फलम्—
द्विभार्योऽवैष्णवो, व्रणरोगी, च प्रोक्तः।

द्वितीयस्थे— बाहुबलरहितः, स्वल्पधनवान्, च कथितः। नष्टं वित्त-ञ्चास्य नोपलभ्यते।

तृतीयस्थे— मातृसौख्यहीनः, सालस्यो, बलहीनो मृत्यरहितश्च प्रोक्तः ।
(मुम्बई-संस्करणे पाठाभावः)

चतुर्थस्थे— मातृगृहभूमिसुखहीनो, मित्रद्रोही च कथितः ।
(मुम्बई-संस्करणे नोल्लेखः)

पञ्चमस्थे चैकादशस्थे तुल्यं फलम्—
अस्य वृद्धिर्न भवति धनञ्च न गृहे स्थीयते स्थिरबुद्धिश्च भवति ।

षष्ठस्थे द्वादशस्थे च तुल्यं फलम्—
नित्यं रोगी बाल्ये सर्पजलभययुतश्च कथितः ।

अष्टमस्थे— द्यूतकरश्चौरोऽन्यथावादी गुरुनिन्दारतो भवति । भार्या चास्य पररता ज्ञेया ।

नवमस्थे— महापापी नास्तिकः सुतहन्ता प्रोक्तः । भार्याचास्य वन्ध्या भवति । परदारधनरतश्च ज्ञेयः ।

दशमस्थे— पितृसुखहीनः पिशुनोऽकर्मण्यश्च बोध्यः ।
(मुम्बई-संस्करणे नास्योल्लेखः)

## नवमेशफलम्—

लग्नस्थे सप्तमस्थे च तुल्यं फलम्—
गुणवान् कीर्तिमान्, च प्रोक्तः । कार्यसिद्धिश्चास्य न जायते ।

द्वितीयस्थे तृतीयस्थे च तुल्यं फलम्—
सदा भाग्यचिन्तको, धनवान्, गुणवान्, कामी, जनप्रियः, पण्डितश्च कथितः ।

चतुर्थस्थे दशमस्थे च तुल्यं फलम्—
मन्त्री, सेनानायकः, पुण्यवान्, यशस्वी, वाग्मी साहसी क्रोधरहितश्च निगदितः ।

पञ्चमस्थे चैकादशस्थे तुल्यं फलम्—

भाग्यवान्, जनप्रियो, धीरा, मानी, गुणवान् गुरुभक्ति-रतश्च प्रोक्तः।

षष्ठस्थे द्वादशस्थे च तुल्यं फलम्—

भाग्यहीनमातुलसुखशून्यो ज्येष्ठभ्रातृरहितश्च कथितः।

अष्टमस्थे— पूर्ववत्फलम् (मुम्बई-संस्करणे नोल्लेखः)

**दशमेशफलम्—**

लग्नस्थे— कविर्बाल्ये सुखी परतश्चार्थवृद्धिरतो भवति।

द्वितीयस्थे तृतीयस्थे सप्तमस्थे च तुल्यं फलम्—

मनस्वी, वाग्मी, कामी, सत्यधर्मरतश्च ज्ञेयः।

चतुर्थस्थे दशमस्थे च तुल्यं फलम्—

ज्ञानवान्, सुखविक्रमी, गुरुदेवभक्तिरतो, धर्मात्मा, सत्य-वादी च भवति।

पञ्चमस्थे चैकादशस्थे सामान्यं फलम्—

धनपुत्रसुखयुतः सत्यवादी, सदा हर्षान्वितश्च कथितः।

षष्ठस्थे द्वादशस्थे सामान्यं फलम्—

शत्रुपीडितचतुरः, सुखहीनश्च ज्ञेयः।

अष्टमस्थे— भाग्यज्येष्ठभ्रातृसुखीनश्च विज्ञेयः (मुम्बई-संस्करणे नास्त्ययं पाठः)

नवमस्थे— बहुभाग्यगुणसौन्दर्यमातृसुखयुतो भवति। मुम्बई-संस्करणे नायं पाठः)

**एकादशेशफलम्—**

लग्नस्थे— धनकौतुकयुतो, वक्ता, समद्रष्टा, सात्विकश्च ज्ञेयः।

द्वितीयस्थे पञ्चमस्थे सामान्यं फलम्—

सर्वसिद्धिप्रदो, धार्मिको, नानासुखपुत्रान्वितश्च कथितः।

तृतीयस्थे— सर्वकार्यनिपुणतीर्थतत्परः सर्व-कार्य-कुशलश्च प्रोक्तः।
चतुर्थस्थे— तीर्थयात्रापरो मातृगृहभूमिसुखयुतो जायते।
षष्ठस्थे— नानारोगयुतः प्रवासी, सुखी, पर वञ्चकश्च कथितः।

सप्तमस्थे चाष्टमस्थे तुल्यं फलम्—
उदारो, गुणवान्, कर्मी, मूर्खश्च कथितः। भार्या तस्य न जीवति।

नवमस्थे दशमस्थे च तुल्यं फलम्—
राजपूज्यो, धनवान्, सत्यवादी, चतुरो निजधर्मपरश्च प्रोक्तः।

एकादशस्थे— वाग्मी, कविः, पण्डितश्च ज्ञेयः।
द्वादशस्थे— म्लेच्छसंसर्गरतः, कामी, बहुभार्यश्चञ्चलो, लम्पटश्च बोध्यः।

**द्वादशेशफलमाह—**

लग्नस्थे सप्तमस्थे सामान्यं फलम्—
स्त्रीसुखहीनः, दुर्बलो, धनविद्याशून्यः, कफरोगी च प्रोक्तः।

द्वितीयस्थे चाष्टमस्थे सामान्यं फलम्—
विष्णुभक्तियुतो, धार्मिकः, प्रियवादी, सर्वगुणयुतो भवति।

तृतीयस्थे नवमस्थे च सामान्यं फलम्—
गुरुद्वेषी, भार्याद्वेषी प्रियद्वेषी स्वशरीरपोषकश्च कथितः।

चतुर्थस्थे— मातृभूमिवाहनसुखहीनश्च कथितः।
*(मुम्बई-संस्करणे नोल्लेखः)*

पञ्चमस्थे— सुतविद्याहीनस्तीर्थयात्रापरः प्रोक्तः।
(मुम्बई-संस्करणे नोल्लेखः)

षष्टस्थे द्वादशस्थे च सामान्यं फलम्—

पापी, मातृहन्ता, क्रोधी, परदारलम्पटो दुःखी च कथितः।

दशमे चैकादशस्थे तुल्यं फलम्—

पुत्रसुखहीनो, मणिमाणिक्यमुक्तादियुक्तो भवति ।

## (घ) समीक्षा

### (अ) पूर्वपरम्परा—

यद्यपि द्वादशभावानां स्पष्टीकरणस्य विधिः पूर्वभागस्य तृतीयाध्याये दृश्यते। एवं च द्वादशभावानां भावेशानाञ्च फलमपि १४,१५ तमयोः अध्याययोर्मध्येऽवलोक्यते।[1] अस्य चर्चोत्तरभागस्य द्वितीयेऽध्यायेऽपि भावानां स्पष्टीकरणस्य तथा चतुर्थाध्याये द्वादशभावविचार्यवस्तूनामुल्लेखेन विद्यते।[2] अपि च द्वादशभावानां संज्ञानाम् निर्देशोऽपि नवमेऽध्याये उपलभ्यते।[3] भावफलशब्दोऽपि षोडशाध्याये दृश्यते। एवञ्चात्र निर्णीयते भावफलस्यास्मिन् ग्रन्थेऽष्टकवर्गवदायुर्दायवच्च भागद्वये एव चर्चा विद्यते। अतश्च भावफलस्यातीव प्राचीनत्वं दरीदृश्यते। होराशास्त्रस्य रचनैव भावफलमाश्रित्य सम्भूता। उत्तरभागे गर्गहोराया निर्देशस्य स्पष्टोल्लेखः।[4] अतश्च भावफले गर्गस्य पराशरात्पूर्ववर्तित्वं सिद्ध्यति। द्वादशभावानाश्रित्य ग्रहाणां फलकथनस्य प्रकारोऽपि नारदपुराणे विद्यते।[5] अत्र च ब्रह्मणो मानसपुत्राणां सनकसनन्दनसनत्कुमारसनातनैः सह नारदस्य सम्वादः। अत्र च सनन्दनो वक्ता नारदः श्रोता। अतश्च सनन्दनोऽपि जातकशास्त्रज्ञः पराशरात्पूर्ववर्ती सिद्ध्यति। बृहत्पाराशरेऽपि लोमशसुजन्मसम्वादेन ३३ तमो

---

१. बृ० पा० पू० भा० ३. १४, १५ अध्यायाः (मुम्बई-सं०)
२. तत्रैव, उ० भा० २।१ एवञ्च ४।२-६.
३. तत्रैव उ० भा० ६।१-६
४. तत्रैव उ० भा० १२।४२.
५. नारदमहापुराणम् (१।२।२४४-२५८) संक्षिप्तनारदविष्णुपुराणांकम्, कल्याणम्, जनवरी १९५४, गीता प्रेस, गोरखपुर।

अध्यायो विद्यते यत्र भावानां भावफलस्य चर्चा वर्त्तते।[1] शम्भुहोराप्रकाशे पुञ्जाचार्येण ६ तमो अध्यायोभावफलाध्याय नाम्नैवाङ्कितः अत्र च द्वादशभावनां पृथक्-पृथक् सुन्दरः फलविचारो विहितः। भावेशानां भावानुरूपं ग्रहाणाञ्चापि फलकथनं दृश्यते।[2]

मानसागर्यामपि १,२,३, तमेषु अध्यायेषु ग्रहाणां भावानुरूपं फलं द्वादशभावानां द्वादशभावेशानाञ्च पृथक्-पृथक् फलकथनमुपलभ्यते।[3]

एवमन्यैरपि परवर्त्तिभिराचार्यैः लेखकैश्चानुकरणं कृतम्। तच्च तत्रैव पुस्तकेषु द्रष्टव्यम्। विस्तारभयाच्चात्रनोल्लिख्यते।

## (इ) उत्तरवर्त्तिषु प्रभावः।

पराशरादुत्तरवर्त्तिषु भावफलकथनस्य सुतरां महान् प्रभावो दरीदृश्यते।

जैमिनिना तु न केवल लग्नादेव भावफलं कथितमपि तु पदादुपपदारमकारकादारमकारकांशचक्राद्भावघटीहोरालग्नेभ्योऽपि भावेभ्यः फलकथने पराशरवदेव सूक्ष्म विचारो निर्दिष्टः।[4] वराहमिहिरेण नारदपुराणवत्केवलं द्वादशभावस्थग्रहाणां फलमेव बृहज्जातकस्य विशाध्याये लिखितः।[5]

सारावल्यामपि कल्याणवर्मणा वराहमिहिरस्यैवानुकरणं कुर्वता ३० तमो अध्यायो ग्रहभावफलाध्यायनाम्नाङ्कितः।[6]

---

१. बृ० पा० पू० भा० ३३ तमो अध्यायः, (मुम्बई-सं०)

२. महीधर शर्मा, शंभुहोराप्रकाशः (६ तमो अध्यायः) गंगाविष्णु श्री कृष्णदास, लक्ष्मीवेंकटेश्वर स्टीम् प्रेस, कल्याण, बम्बई।

३. अनूप मिश्रः, मानसागरी (१, २, ३ तमा अध्यायाः) भार्गव पुस्तकालय, काशी।

४. अच्युतानन्द झा, जैमिनिसूत्रम् (प्रथमाध्याये प्रथमद्वितीयपादौ अन्यत्र च) चौखम्बा संस्कृत सीरिज, बनारस।

५. अच्युतानन्द झा 'बृहज्जातकम्', (२० तमो अध्यायः) चौखम्बा संस्कृत सीरिज, बनारस।

६ सीताराम झा, सारावली (३० तमो अध्यायः) मास्टर खेलाड़ीलाल एण्ड सन्स, बनारस।

जातकपारिजाते तु वैद्यनाथमहोदयेन ११, १२, १३, १४, १५, तमा अध्याया द्वादशभावफलाध्यायरूपेणाङ्किता अत्र च बृहत्पाराशरस्यानुसरणं कुर्वता बहुयोगपुरःसरं विशदोपन्यासो विहितः। मयाप्यत्र सर्वत्र जातकपारिजातस्युद्धरणानि लिखितानि। द्वादशभावेषु विचार्यवस्तूनां त्वत्र सुन्दरश्चमत्कारी च विचारो दृश्यते।[1] आचार्येण ढुण्ढिराजेन जातकाभरणे पृथक्-पृथक् द्वादशभावानां भावानुरूपं ग्रहाणाञ्च फलं लिखितम्। अत्र षष्ठोऽध्यायो द्वादशभावफलाध्यायनाम्नांऽकितः।[2] सर्वार्थचिन्तामणौ व्यङ्कटेशेन द्वितीयाध्यायादारभ्याष्टमाध्यायान्तं द्वादशभावानां विशदोविचारो विहितः। अत्रापि जातकपारिजातवद्-बहुयोगानां फलविन्यासः।[3]

जातकादेशमार्गेऽपि दशमोऽध्यायो भावविचारप्रकरणनाम्ना दृश्यते।[4]

कालिदासकृते उत्तरकालामृते ग्रहभावफलनाम्ना चतुर्थखण्डो विद्यते। अत्र संक्षेपेण ग्रहाणां भावानाञ्च योगायोगेन फलविवेचनं विहितम्।[5]

दैवज्ञजीवनाथरचितं भावप्रकाशनाम्ना भावानामद्भुतप्रकारेण फलकथने लघुपुस्तकमवलोक्यते यत्र पं० सीताराम-झा-महोदयेन टीकाऽपि विहिता। अत्र भावानां पृथक्-पृथक् फलं लिखितमुपलभ्यते।[6]

---

१. कपिलेश्वर शास्त्री, जातकपारिजातः (११, १२, १३, १४, १५ तमा अध्यायाः) चौखम्बा संस्कृत सीरिज, बनारस।

२. पं० वनमाली, जातकाभरणम्, ६ तमो अध्यायः, किशनलाल द्वारकाप्रसाद, भूषण प्रेस, मथुरा।

३. महीधर शर्मा, सर्वार्थ चिन्तामणि (२-८ तमौ अध्यायौः) गंगाविष्णु श्री कृष्णदास, लक्ष्मी वेंकटेश्वर प्रेस, कल्याण, बम्बई।

४. वी० सुब्रह्मण्यम्, जातकादेशमार्गः, (१० मो अध्यायः) ६५ थर्डक्रास रोड, वासावांगुदी, बंगलौर।

५. तत्रैव, 'उत्तरकालामृतम्' (४र्थः खण्डः)।

६. सीताराम झा, 'भावप्रकाशज्योतिषम्', मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

मन्त्रेश्वरेण फलदीपिकायामष्टमोऽध्यायो द्वादशभावाश्रयफलनाम्ना षोडशाध्यायश्च द्वादशभावानां समुदायफलनाम्नाङ्कितौ। अत्र संङ्क्षेपेण सारेण च सूक्ष्मविचारो भावानां ग्रहाणाञ्च योगायोगेनोपलभ्यते। अत्र च १०, ११, १२, १३ तमा अध्याया कलत्रभावपुत्रचिन्तायुभावनाम्ना क्रमशो लिखिताः। अत्र च पुत्रचिन्तायां तिथिदोषमधिकृत्य सन्तानदोषपरिहाररूपेण शान्त्युपायाश्चापि लिखिताः। यस्य मूलं वृहत्पाराशरे विद्यते एव।[1]

अतश्च लोमशमहर्षिरपि पराशरात्पूर्ववर्त्ती भावफलकथनात्मकजातकशास्त्रतत्त्वज्ञ आसीदिति दृश्यते। अतश्चेदं सिद्ध्यति यत्पराशरात्पूर्वमपि द्वादशभावफलकथनस्यास्तित्वमासीदिति स्पष्टम्। अथ च पार्वतीशङ्करसंवादे १६ तमो अध्यायः पूर्वजन्मशापद्योतको नामात्र ग्रन्थे विद्यते तेन च भगवतः शङ्करस्यापि सर्वज्ञत्वे सत्यपि जातकशास्त्रप्रवर्तकत्वेन सर्वेषाम् ऋषीणामाचार्याणाञ्च सर्वोपरि पूर्ववर्त्तित्वं ज्ञेयम्।[2]

## (उ) वैशिष्ट्यम्

भावानां भावेशानां भावानुरूपं ग्रहाणाञ्च फलकथने पराशरस्य चमत्कारिवैशिष्ट्यं वर्तते। सर्वैरेवानुवर्त्तिभिराचार्यैरस्यैवानुकरणं विहितम्। द्वादशभावेषु कस्मात्कस्माद्भावात् कस्मात्कस्माद्ग्रहाच्च कस्य कस्य वस्तुनो विचारो विधेय इति सुन्दररूपेणोपन्यासः कृतः शरीर-धन-पराक्रम-सुख-पुत्ररिपु-स्त्री-मरण-धर्म कर्माय-व्ययादिकानामन्येषां वस्तूनाञ्च विचारः क्रमाद्द्वादशभावेषु भावेशानां ग्रहाणाञ्च योगायोगेन कथं कार्यं इति निखिलमुल्लिखितम्।

पञ्चमं पुत्रभावमधिकृत्य पार्वतीशङ्करसंवादेनात्राद्भुतश्च पुत्रावरोधशापज्ञानप्रकारो लिखितः। तस्य शापस्य शान्त्युपायश्चापि दर्शितः शान्त्युपायानामनुवर्त्तिषु ग्रन्थेषु प्रायो दर्शनाभावः। केवलं फल दीपिकाकारेण मन्त्रेश्वरेण तिथिदोषमधिकृत्य सन्तानदोषपरिहारे शान्त्युपाया निर्दिष्टा इति मया पूर्वमत्र लिखितम्।

---

१. मन्त्रेश्वरः, फलदीपिका ८, १०, १२, १३, १६ तमा अध्यायाः, के० एन० कृष्णमूर्ति, ६५ पर्वतराय रोड, बासावांगुडी, बंगलोर।

२. वृ० पा० पू० भा० १६ अध्यायः (मुम्बई-सं०)

भावानामधिपतिवशाच्च ग्रहाणां शुभाशुभज्ञानप्रकारोऽपि चमत्कारी अद्भुतश्चेति पूर्वं लिखितन्तस्याप्यत्र भावफलाध्याये संन्निवेशस्य वैशिष्ट्यं हृदयग्राहि प्रत्यक्षेण चमत्कारि च दृश्यते।

अयमपि विशेषो यत् येषां वस्तूनां विचारो यस्माद्भावाद्विचार्य इत्युक्तस्तेषां वस्तूनां विचारस्तेषां भावानां स्वामिभ्योऽपि कर्तव्य इति वैशिष्ट्यम्।

## पञ्चमोऽध्यायः

# कारकनिरूपणम्

### (क) विषयावतरणम् ।

ज्योतिषशास्त्रे कारकविचारस्याप्यावश्यकत्वम् । कस्य भावस्य कस्य वस्तुनः को ग्रहः कारकः ? तस्य ग्रहस्य बलाबलज्ञाने सति तद्भावस्य तत्तद्वस्तुनो लाभालाभस्य च ज्ञानं भवति । अतश्चात्र कारकानां विचारस्य सुतरामावश्यकत्वम् ।

अस्मिन् बृहत्पाराशरे कारकविचारः पूर्वभागस्याष्टमाध्याये विहितः । कारकविचारज्ञानात्परतश्च कारकांश-कुण्डलीचक्रम्, जन्मकुण्डलीचक्रवन्निर्मीयते । तस्य विचारश्च नवमाध्यायेऽत्र विहितः ।

कारकांशचक्रवत्पदारूढचक्रस्योपपदचक्रस्य च ज्ञानमावश्यकमतश्च तयोरत्रैकादशद्वादशाध्याययोर्मध्ये विचारः कृतः ।

### (अ) कारकविचारः ।[1]

ज्योतिषशास्त्रे सूर्यादिग्रहसङ्ख्येव कारका अपि सप्त सङ्ख्याकाः प्रोक्ताः । आत्मामात्यभ्रातृपुत्रज्ञातिदारेति सप्त भेदेनेति । सप्तग्रहेषु यस्यांशा अधिकाः स आत्मकारकः । अंशतुल्ये विकलाधिक्यः इति कलासाम्ये विकलाधिक्य इति आत्मकारकान्न्यूनांशकलादिकोऽमात्यकारकः । तस्मादेवं न्यूनो भ्रातृकारकः । तन्न्यूनांशादिको मातृकारकः । तन्न्यूनांशादिकः पुत्रकारकः । पुत्रकारकान्न्यूनांशो ज्ञातिकारकः । तन्न्यूनांशादिको दाराकारकः ।

---

१. बृ० पा०, ८ अध्यायः सकलः (मुम्बई-सं०)

अत्रात्मकारकस्यैव प्रधानत्वम् । यथा राजा सर्वेष्वमात्यादिकेषु सर्वप्रधानः कर्तुमकर्तुं शक्त एवमत्रापि ग्रहेषु चात्मकारकस्येव प्रधानत्वमुक्तम् । जैमिनीयेऽपि—

'स ईष्टे बन्धमोक्षयोः'[1]

एते चात्र सप्त चरसञ्ज्ञकाः कारका उच्यन्ते ।

अत्र विशेषः । यदि ग्रहद्वयस्यांशादिकं तुल्यन्तदा राहुमपि कारकत्वेन गृह्णीयात् ।

काशी-संस्करणे चास्याधिक उल्लेखः तत्र राह्वंशादिकविचारो विलोमगमनमुक्तमर्थात् राहोरंशादिकं च त्रिंशदंशेषु न्यूनीकृत्यांशादिकान् गृह्णीयात् । जैमिनीय सूत्रेऽपि चायमेव भावो निगदितः—

'आत्माधिकः कलादिभिर्न भोगः सप्तानामष्टानां वा'

अत्र नीलकण्ठाचार्येण टीकायामिदमेव स्पष्टीकृतं यद्राहोर्गतिर्वैपरीत्यादशादिकेषु न्यूनत्वमेव ग्राह्यम् । अर्थादत्र यदिदमुक्तमंशाधिक एवात्मादिकारकस्तत्र राहुग्रहणे सति न्यूनांशेऽस्य बलत्वमिति भावः केषाञ्चिदाचार्याणां मते मातृकारकादेव पुत्रकारकविचारः कार्य,इत्यभिमतं काशी-संस्करणे[2] मुम्बई-संस्करणे नोल्लेखः । बीजन्त्वस्य जैमिनीये सूत्रे चोपलभ्यते—

'मात्रा सह पुत्रमेके समामनन्ति'[3]

अन्योऽपि विशेषः—

यदि ग्रहद्वयस्यांशादिकसाम्यं स्यात्तर्हि द्वयस्यैकारकत्वम् । ननु यदि द्वयस्यैक कारकत्वन्तदा सप्तकारकत्वे षट्कारकत्वं भविष्यति चेन्न यतो ह्यग्रिमकारकस्य स्थिरकारकाद्विचारो विधेयः । चरकारकश्च त्याज्य इति भावः ।

स्थिरकारकानाह—

सूर्यशुक्रयोर्मध्ये बलवान् पितृकारकः ।

---

१. बी० सूर्यनारायण रावः, जैमिनिसूत्राज, १।१।१२, रमण पब्लिकेशन्ज, बंगलोर ।
२. बृ० पा० ३२।१६ (काशी-सं०)
३ जैमिनिसूत्राज, १।१।१६, रमन पब्लिकेशन्ज, बंगलोर ।

चन्द्रमङ्गलयोर्मध्ये बली मातृकारकः। मङ्गलतश्च भगिनीनां श्यालकानां चापि विचारो विधेयः।

बुधश्च मातुलस्य भ्रातृतुल्यानाञ्च कारकः।

गुरुस्तु पुत्रस्वामिपितामहानां कारकः।

शुक्रश्च भार्या, माता पितरौ, मातामही, इत्यादिकानां कारकः।

शनिस्तु पुत्रकारक इति काशी-संस्करणे मुम्बई-संस्करणे शनेश्च नोल्लेखः। जैमिनीये सूत्रेऽपि—

**'रविशुक्रयोः प्राणी जनकः' 'चन्द्रारयोर्जननी'[1]। 'भगिन्यारतः श्यालः कनीयाञ्जननी चेति' मातुलादयो बन्धवो॥ मातृसजातीया इत्युत्तरतः 'पितामहः पतिपुत्राविति गुरुमुखादेव विजानीयात्' 'पत्नीपितरौ श्वशुरौ मातामहा इत्यन्तेवासिनः'[2]॥**

### (इ) भावानुरूपं कारककथनं फलविचारश्च—

जन्मलग्नमात्मकारम्। द्वितीयो धनभावस्तु स्त्रीकारकः।

एकादशो भावो ज्येष्ठभ्रातृकारकः।

तृतीयो भावस्तु कनिष्ठभ्रातृकारकः।

पंचमो भावः पुत्रकारकः।

(अन्यदपि) सूर्यस्थभावान्नवमो भावोऽपि पितृकारकः।

चन्द्राच्चतुर्थभावस्य मातृकारकत्वम्।

भौमात्तृतीयो भावो भ्रातृकारकः।

गुरुतस्तु पञ्चमो भावः पुत्रकारकः।

शुक्राच्च सप्तमो भावः स्त्रीकारकः।

शनितोऽष्टमो भावः पित्रादिकानां मृत्युकारकः।

अथ च

ग्रहा अपि क्रमाद्द्वादशभावानां कारका निम्नप्रकारेण प्रोक्ताः सन्ति।

---

१. जैमिनि सूत्राज, १।१।२०, रमन पब्लिकेशन्ज, बंगलोर।

२. तत्रैव १।१।२१, २२, २३.

लग्नस्य सूर्यः, द्वितीयस्य गुरुः, तृतीयस्य भौमः, चतुर्थस्य चन्द्रः, पञ्चमस्य गुरुः, षष्टस्य भौमः, सप्तमस्य शुक्रः, अष्टमस्य शनिः, नवमस्य गुरुः, दशमस्य बुधः, एकादशस्य गुरुः, द्वादशस्य च शनिरिति क्रमात्कारका ज्ञेयाः।

अन्योऽपि विशेषः—

जन्मकाले स्वोच्चस्थाः स्वस्था मूलत्रिकोणस्था मित्रस्था ग्रहाः परस्परं केन्द्रस्था विशेषेण सुखादिकयोगकारका निगदितः।

लग्नस्थाः, चतुर्थस्थाः, सप्तमस्था दशमस्थाः स्वोच्चादिकस्था ग्रहाः परस्परं विशेषेण कारकाः सन्ति। (अत्र मुम्बई-संस्करणे सप्तमस्था इति स्थाने चैकादशस्थाः कथिता एकादशस्य केन्द्रेषु गणनाभावात्सप्तमस्था इत्येवोचितम्) दशमस्थानस्य विशेषकारकत्वमत्र प्रोक्तम्।

स्वोच्चादिस्था ग्रहाः परस्परं कुत्रापि केन्द्रस्था योगकारकाः (लग्नादेव केन्द्रस्थाः स्युरिति नावश्यकमिति भावः)

यस्य जन्मकाले ईदृशा योगकारकाः स्युः स नीचकुलोत्पन्नोऽपि राजा भवति राजकुलोत्पन्नस्त्ववश्यमेव राजा भवतीति भावः।

पुनरपि विशेषमाह—

तृतीयैकादशाष्टमद्वितीयद्वादशेति षड्भावानां स्पष्टराश्यंशादिकानां योगः कार्यः योगे यो राशिर्भवेत् स च यस्मिन् भावे स्यात्तस्य भावस्य हानिरिति ज्ञेयम्। एवमेव केन्द्रचतुष्टयस्य त्रिकोणद्वयस्य च राश्यंशादिकयोगेन यो राशिः स यस्मिन् भावे भूयात्तस्य भवस्य समृद्धिमाहुरिति भावः।

अर्थात्पूर्वोक्तषड्राशियोगेन गृहीतो राशिः शुभोऽप्यशुभो भवति। केन्द्र-त्रिकोणषड्राशियोगेनागतो राशिरशुभोऽपि शुभो जायते।

## (ख) कारकांशकुण्डलीविचारः[1]

### (अ) कारकांशचक्रानयनप्रकारः।

आत्मकारको यस्मिन्नवांशे स्थितः स्यात्तं भावं लग्नरूपेण संस्थाप्य शेषा-

१. बृ० पा० नवमोऽध्यायः सकलः (मुम्बई-सं०)

न्ग्रहान् स्वस्वनवांशानुसारं तत्तद्भावेषु संस्थापयेत्तदेव कारकांशकुण्डलीचक्रं भवति।

तदधिकृत्य फलादेशप्रकारोऽपि पराशरेण सविस्तरं निगदितः—

जैमिनीये सूत्रेऽपि चास्य पल्लवनं दृश्यते।

कारकांशे मेषांशे मूषकमार्जारादिकभयं, वृषांशे चतुष्पादभयं, मिथुनांशे कण्ड्वादिव्याधियोगः, कर्कांशे जलाद्दुःखं भयञ्च सिंहांशे शुनकादिभयं, कन्यांशे कण्डुरोगदुःखमग्निदोषेण दुःखञ्च, तुलांशे व्यापारी क्रयविक्रयकर्ता, वृश्चिकांशे, सर्पादिभयं, मातुः स्तनपीड़ा च, धनुरंशे वाहनादुच्चैश्च पतनं, मकरांशे जलचरादिशङ्खमुक्ताप्रवालमत्स्यखेचरादिभ्यो लाभः, कुम्भांशे तडागादिकर्तृत्वं, धर्मत्वं कण्डुरोगादिकञ्च, मीनांशे सायुज्यमुक्तिलाभो, क्रमाद्भवतीति ज्ञेयम्।

**विशेषः—**

मेषे वृषे च पापग्रहयोगे विशेषभयं वृषे च शुभग्रहयोगे चतुष्पादेभ्यो लाभो भवति।

अन्यत्रापि पापयोगेऽशुभफलमधिकम्। शुभयोगेऽशुभफलस्य न्यूनत्वं भवति।

## (इ) कारकांशग्रहाणां फलकथनम्।

आत्मकारके लग्ने च शुभग्रहनवांशे धनवान् भवति।

शुभांशकेन्द्रेषु राजयोगः।

कारके लग्ने च शुभांशे स्वोच्चस्थे शुभग्रहे च पापदृष्टिशून्ये सति मोक्षयोगः। मिश्रे मिश्रफलं वैपरीत्ये वैपरीत्यमिति। (अर्थादशुभे नरकादियोग इति भावः)

क्रमाद्ग्रहेषुकारकांशस्थितेषु फलमाह—

कारकांशे सूर्ये राजकार्यतत्परः, पूर्णचन्द्रे शुक्रदृष्टे च सति भोगवान् विद्वान्, बलवति भौमे रसवादी कुन्तायुधी वह्निजीवी च, बुधे शिल्पी व्यवहारी व्यापारी च, गुरौ सर्वशास्त्रवेत्ता जगद्विख्यातः कर्मनिष्ठश्च, शुक्रे राजमानी, शतायुः सदिन्द्रियश्च शनौ राजपूजितो महत्कर्मकृच्च, राहौ धनुर्धरो जाङ्गल्यलोहयन्त्रादिकारकश्चौरसङ्गमी च, केतौ गजादीनां व्यवहारकर्ता चौरश्च क्रमाज्जातको भवति।

द्विग्रहयोगेन पापदृष्ट्यायुतेन च कारकांशे विशेषफलमाह।

कारकांशे रविराहुयोगे सर्पभयं भवति शुभदृष्टौ भयाभावः।

पापदृष्टौ च सर्पान्मरणमिति।

यदि कारकांशे रविराहू शुभषड्वर्गगौ तदा विषवैद्यो भवति।

भौमदृष्टियुते सति रविराहुयोगेऽन्यग्रहदृष्टिशून्ये सति स्वगृहपरदाहको भवति।

बुधदृष्टौ चाग्निदाहको न भवति। पापग्रहयुते गुरुदृष्टे च सति समीपगृह-दाहको भवति।

गुलिकयुते पूर्णेन्दुदृष्टे सति कारकांशे चौरापहृतधनो वा स्वयं चौरो भवति।

अन्यग्रहदृष्टौ बुधदृष्टौ वा सगुलिके कारकांशेऽण्डवृद्धियोगः पापग्रहदृष्टे केतुयुते कारकांशे कर्णच्छेदस्य कर्णरोगस्य वा योगः शुक्रदृष्टे च केतेयुते कारकांशे क्रियाकर्मसमन्वययोगः।

शनिबुधदृष्टे च बलवीर्यरहितो भवति।

बुधशुक्रदृष्टे च दासीपुत्रो जायते।

अन्यग्रहदृष्टौ शनिदृष्टिशून्ये सति सत्याचाररहितो भवति।

शुक्रसूर्यदृष्टे च राजप्रेष्यो भवति।

## (उ) कारकांशाद्द्वादशभावानां फलनिरूपणम्।

द्वितीयभावफलम्।

कारकांशाद्द्वितीये शुक्रमङ्गलयोगे परदारगामी भवति।

शुक्रमङ्गलदृष्टे सति मरणान्तपरस्त्रीरतयोगः केतौ सति परस्त्रीरतयोगा-भावः।

गुरौ सति स्त्रैणः। राहौ सति स्त्रीनिमित्तेन धनव्ययः।

(मुम्बई-संस्करणे चास्य पाठस्य नोल्लेखः)

तृतीय-स्थान-फलम्।

कारकांशात्तृतीये पापग्रहे शूरः प्रतापी च भवति शुभग्रहे कातरो भवति।

चतुर्थभावफलम्।

चतुर्थे चन्द्रशुक्रयुते दृष्टे वा सुन्दरगृहयुतो वा भवति। स्वोच्चस्थे ग्रहे प्रासादवान् भवति।

शनिराहुयुते दृष्टे वा शिलागृहं, मङ्गलकेतुशनिदृष्टे चैष्टिकं गृहं, गुरुयुते चाप्यैष्टिकं कणवेष्टितसंयुक्तं वा गृहं भवति।

सप्तमभावफलम्।

कारकांशे गुरुचन्द्रयुते सप्तमें सुन्दरी पतिभक्तिपरायणा च भार्या भवति।

राहुयोगे विह्वला, शनियोगे वयोऽधिकया रोगिणी तपस्विनी च, भौमयोगे विकलाङ्गी कान्ताद्यलक्षणा, रवियोगे स्वकुले गुप्ता परगृहासक्ता, बुधे कलावती, शुक्रे कलाभिज्ञा भवतीति।

(अत्र काशी संस्करणे विह्वलेति स्थाने विधवा पाठः)[1]
विधवा पाठ एवोचितो जैमिनीय सूत्रेऽपि दर्शनात्[2]।

नवम भावफलम्।

कारकांशे नवमे शुभग्रहयुते सत्यवादी गुरुभक्तः स्वधर्मनिरतश्च, पापग्रहयुते बाल्ये धर्मरतस्ततश्च मिथ्यावादी भवति।

शनिराहुयुते दृष्टे वा गुरुद्रोही शास्त्रविमुखो, भवति।
सूर्यगुरुयुते दृष्टे वा गुरुद्रोही, गुरुवाक्यविरोधी जायते।
शुक्रभौमयुते दृष्टे वा षड्वर्गाधिकयोगे च मरणं पारदारिदकं भवति।
भौमयुते दृष्टे वा परस्त्रीसङ्गमाद्वन्धकयोगः।
गुरुयुते दृष्टे वा स्त्रीलोलुपो विषयी नैव भवति।
दशमभावफलमाह।
कारकांशे दशमें बुधेन दृष्टे व्यापारे बहुलाभयोगः।
रविणा युते गुरुदृष्टे च महत्वैशिष्ट्यम्।
शुभग्रहदृष्टे स्थिरचित्तो गम्भीरो बहुवीर्यवान् भवति।
द्वादशभावफलम्।

---

१. वृ० ३३।४८, पृ० १६० (काशी-सं०)
२. जैमिनिसूत्राज १।२।१८, रमण पब्लिकेशन्स, बंगलोर।

द्वादशभावो मोक्षादिकस्य स्थानमतोऽत्र तदधिकृत्यैव वर्णनम्।

कारकांशे द्वादशभावे चोच्चस्थे शुभग्रहे शुभलोकसद्‌गतिप्राप्तियोगः।

शुभग्रहयुते दृष्टे वा केतौ सायुज्यपदमुक्तिलाभः।

मेषराशौ धनुषि वा केतौ शुभेन दृष्टे कैवल्यप्राप्तियोगः।

अशुभयोगमाह।

केवलं केतौ पापयुते दृष्टे वा न शुभलोकप्राप्तिर्न मुक्तिश्च।

कारकांशे द्वादशभावस्य ग्रहानधिकृत्य देवभक्तियोगानाह—

अत्र रविणा युते केतौ गौर्याः भक्तिः, चन्द्रेण युते सूर्यभक्तिः, शुक्रेण युते लक्ष्मीभक्तिः, भौमेन युते कार्तिकेयभक्तिः, बुधशनिभ्यां युते विष्णुभक्तिः, गुरुणा युते शिवभक्तिः, राहुणा युते कालीभक्तिः, भूतप्रेतादिसेवा वा, केतुना युते गणेश-भक्तिः, कार्तिकेयभक्तिर्वा, पापराशौ शनिना युते क्षुद्रदेवस्यभक्तिः, पापराशौ शुक्रेण युते क्षुद्रसेवा, च भवति।

अत्र विशेषमाह।

आत्मकारकान्न्यूनांशोऽमात्यकारकः। तस्यानुचराद्‌भ्रातृकारकादपि देवता-भक्तिविचारो विधेयः। अथवा सूर्यचन्द्रभौमान्यतमादष्टमो यो ग्रहस्तस्मादप्येवमेव फलं वाच्यम्। अथ च पापराशौ पापयुतेऽमात्यकारकस्य द्वादशे सत्यपि क्षुद्रदेवता-भक्तिर्भवति।

अन्यमपि विशेषमाह।

जन्मकुण्डल्यामप्यमात्यकारको यत्र तिष्ठति ततो द्वादशे सूर्यादिग्रहयुतिवशा-त्पूर्ववत्फलं बोध्यम्।

त्रिकोण-(पञ्चमनवमभावौ) फलमाह।

कारकांशे त्रिकोणे पापग्रहे क्षुद्रदेवस्य शुभग्रहे शुभदेवस्य तान्त्रिको भवति।

त्रिकोणे पापयुते दृष्टे च भूतानुग्रहकर्ता, पुत्रैश्वर्ययुतो राजानुग्रहकरो भवति।

लग्ने भौमराहुदृष्टे चन्द्रे श्वासकासादिरोगः क्षयरोगश्च भवति।

लग्ने द्वितीये पापद्वययुते तान्त्रिको भवति।

पापदृष्टे तन्त्रनिग्राहकः शुभदृष्टे तन्त्रानुग्रहकारक इति विशेषः।

चन्द्रशुक्रयोगे शुभदृष्टे च रसवादी धातुभस्मकारको भवति।

शुक्रचन्द्रबुधदृष्टे च सद्वैद्यः पीयूषपाणिः सर्वरोगहरो भवति।

कारकांशे शुक्रदृष्टे चतुर्थे चन्द्रे सति श्वेतकुष्ठयोगः।

कारकांशे नवमस्थे शुक्रदृष्टे चन्द्रे सति श्वेतकुष्ठाङ्गयोगः पाण्डुश्चित्री वा भवति।

भौमेण दृष्टे राजयोगो रक्तपित्तार्तियोगो वा भवति।

केतुनादृष्टे सति नीलकुष्ठयोगः।

**अन्यविशेषमाह—**

कारकांशे चतुर्थे पञ्चमे द्वितीये राहुभौमयोगे चन्द्रदृष्टे च विशेषे सति क्षयरोगयोगः।

लग्ने केवलं भौमयुते पिटिकादियोगः।

लग्ने केतौ सङ्ग्रहणीरोगः।

अष्टमे राहुगुलिकभौमे विषवैद्यो भवति।

द्वितीये चतुर्थे केवलं शनियोगे धनुर्विद्याधरयोगः।

चतुर्थे द्वितीये केवलं केतुयोगे घटिकायन्त्रवादी, इष्टशोधनतत्परो भवति।

पूर्वोक्तस्थानयोः बुधयोगे परमहंसः संन्यासी वा भवति।

राहुयोगे लोहयन्त्रादिकरो भवति। केतुयोगे खड्गधारी, भौमयोगे कुन्तधारी भवति।

**अन्यविशेषयोगमाह—**

कारकांशे लग्ने नवमे पञ्चमे वा गुरुचन्द्रयोगे सर्वविद्याविशारदो ग्रन्थकर्ता च भवति। शुक्रयोगे स्वल्पग्रन्थकारः।

बुधयोगे किञ्चिद्ग्रन्थकरः, शुक्रयोगे काव्यकर्ता, प्राकृतग्रन्थकर्ता च भवति। गुरुयोगे सर्वग्रन्थकर्ता, वैयाकरणो वेदान्ती तर्कशास्त्रकृद्भवति। यथा च सभाक्षोभो न भवति। शनियोगे सभाजाड्यो भवति। बुधयोगे मैमांसिकः।

भौमयोगे नैयायिकः गुप्तकाव्यकरो भवति।

चन्द्रयोगे साङ्ख्यशास्त्रविशारदो मतिमान्नरो भवति।

केतुयोगे गणितज्ञो ज्योतिशास्त्रवेत्ता भवति।

शुक्रयोगे साम्प्रदायिकशास्त्री भवति।

**विशेषमाह—**

ये योगा नवमस्थानेऽत्र प्रोक्तास्ते द्वितीयभावेऽपि ज्ञेयाः।

कारकांशे द्वितीये पापदृष्टे केतौ वाचालयोगः।

कारकांशमधिकृत्य केमद्रुमयोगमाह—

अशुभोऽयं योगः।

आत्मकारकनवांशे, पदे द्वितीयेऽष्टमे च ग्रहसाम्ये केमद्रुमयोगः (काशी-संस्करणे ग्रहसाम्य-स्थाने पापसाम्ये इति पाठः)

चन्द्रदृष्टे चास्य योगवैशिष्ट्यं भवति (फलं दारिद्र्यामिति भावः)

कारकांशयोगानां तत्तद्राशिपाककाले फलं ज्ञेयम्।

**विशेषमाह—**

दशारम्भकाले ग्रहस्पष्टं विधाय लग्नादिभावस्पष्टं कुर्यात्।

तस्मिन् काले यदि जन्मलग्नसदृशो योगस्तदा पूर्णफलम्। अन्यथाल्पफलमिति भावः।

अस्य सर्वपाठस्योल्लेखः जैमिनीयेसूत्रेषु।

प्रथमाध्यायस्य द्वितीयपादः।

"अथ स्वांशो ग्रहाणाम्, पञ्चमूषिकमार्जाराः, तत्र चतुष्पादः, मृत्यौ कण्डू स्थौल्यञ्च च, दूरे जलकुष्ठादि, शेषाः श्वापदानि।"

मृत्युवज्जायाग्निकणश्च लाभेवाणिज्यं,
अत्र जलसरीसृपा स्तन्यहानिश्चेत्यादि।

सकलो द्वितीयपादोऽस्य छायारूपः। शेषन्तत्रैव द्रष्टव्यम्।

केमद्रुमयोगस्यापि चर्चा—

"स्वपितृपवादभाग्यरोगयो पापे साम्ये केमद्रुमः।"[1]

अर्थाज्जन्मलग्नादथवा पदाद्द्वितीयाष्टमयोः भावयोः पापशुभग्रहसाम्ये केमद्रुमः।

---

१. जैमिनिसूत्राज, १।२।११६, रमण पब्लिकेशन्ज, बंगलोर।

अपि च—

"चन्द्रदृष्टौ विशेषेण"[1]

## (ग) पदविचारः

### (अ) पदज्ञानविधिः ।

लग्नाद्यावद्दूरं लग्नेशो वर्त्तते लग्नेशात्तावद्दूरस्थभावमधिकृत्य पदं निगदितम् ।

अस्यैवापरं नाम लग्नारूढमित्युच्यते—

यथा यदि लग्नेशो लग्नात्पञ्चमस्थस्तदा पञ्चमात्पञ्चमो नवमो भावो लग्नारूढ़ इति भावः ।

अत्र काशी-सस्करणे विशेषो दृश्यते ।[2]

स्वस्थानं सप्तमं नैवं पदं भवितुमर्हति,
तस्मिन् पदत्वे विज्ञेयं मध्यं तुर्यं क्रमात्पदम् ।
यथा तुर्यस्थिते नाथे तुर्यमेव पदं भवेत्,
सप्तमे च स्थिते नाथे विज्ञेयं दशमं पदम् ।

अर्थाद्यदि चतुर्थेशः चतुर्थे स्थाने तदा चतुर्थमेव लग्नारूढम् ।
सप्तमेशश्च यदा सप्तमे तथा दशमं स्थानं पदम् ।

अयं क्रमो मुम्बई-सस्करणे नास्ति जैमिनीये सूत्रेऽपि चाचार्यनीलकण्ठेन नायं मार्गोऽनुसृतः । तेन वृद्धवचनोद्धरणपुरःसरमिदं मतमेव पुष्टीकृतम् ।

'लग्नाद्यावतिथे तिष्ठेद्राशौलग्नेश्वरः क्रमात्,
ततस्तावथितं राशि जन्मारूढं प्रचक्षते ।'[3]

---

१. जैमिनिसूत्राज् रमण पब्लिकेशनज् बंगलोर २।२।१२०.
२. वृ० पा० २६।४, ५ (काशी-सं०)
३. नीलकण्ठः, जैमिनिसूत्राणि १।१।२६, पृ० ११, खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर प्रेस, मुम्बई ।

पाराशरोऽपि—

"जनुर्लग्नाल्लग्नस्वामी यावद्दूरं हि तिष्ठति,
तावद्दूरं तदग्रे च लग्नारूढं च कथ्यते ।'[1]

जैमिनीयसूत्रद्वयस्य व्याख्याने एव मतभेदः—

'स्वस्थे दारा सुतस्थे जन्म ।'

'इति सूत्रयोरर्थनिरूपणे चाचार्यनीलकण्ठेनेदमुल्लिखितम् ।'

यदि लग्नाच्चतुर्थस्थाने लग्नेशः तदा सप्तमस्थानं सप्तमस्थाने लग्नेशश्चेत् तदा लग्नमेवारूढपदमिति भावः । बहुसम्मतमिदमेवमतम् ।[2]

अन्यैः कैश्चिट्टीकाकारैः पूर्वोक्तं मतमेव पुष्टम् । तैः दारशब्दस्य चतुर्थो भावो जन्मशब्दस्य दशमो भावः स्वीकृतः । आचार्यनीलकण्ठमतमेव युक्तियुक्तम् । यतो हि ।

चतुर्थस्थे लग्नेशे लग्नेशाच्चतुर्थः सप्तम एवोचितः । एवमेव सप्तमस्थे लग्नेशे लग्नेशात्सप्तमं लग्नमेवयुक्तमिति ।

अत्रेदमपि ज्ञेयं यद्यदि लग्नस्थश्चेल्लग्नेशस्तदा लग्नमेव लग्नारूढमिति भावः ।

लग्नारूढकुण्डल्यां ग्रहन्यासस्तु जन्मकुण्डलीवदेव ।

## (इ) भावानुरूपं पदफलकथनम्

### एकादशभावफलमाह

एकादेकादशे शुभग्रहयुते दृष्टे वा जातको लक्ष्मीवान् पुत्रवान् शीलवान् न्यान्योपार्जितवित्तवान् नीतिवान्, आस्तिकः, शास्त्रनिष्ठश्च जायते ।

अन्यथा पापग्रहयुते दृष्टे वा नास्तिकोऽन्योपार्जितवित्तवान् भवति ।

मिश्रग्रहयुते दृष्टे वा मिश्रं फलं वाच्यम् ।

---

१. बृ० पा० पू० भा० ११।४ (मुम्बई-सं०)
२. जैमिनिसूत्राणि १।१।३०, ३१, खेमराज श्रीकृष्णदास, मुम्बई ।

अत्र यदि सर्वे ग्रहा एकादशस्थानं पश्यन्ति तदा प्रबलधनयोगः। परं चात्र द्वादशे कस्यचिद्ग्रहस्य दिष्टिर्न भाव्या। यदि ग्रहा स्वोच्चादिकस्थास्तदा योगे विशेषप्राबल्यम्।

अर्गलामधिकृत्यापि विशेषोऽत्र। यदि पदादेकादशेऽनेकशुभग्रहार्गलायोगस्तदा बहुधनयोगः। अर्गलाकारकग्रहाणां स्वोच्चादिकस्थेषु च योगस्यातिवैशिष्ट्यम्।

परञ्च द्वादशभावे ग्रहयोगस्याभावः स्यात्। अर्थाद्द्वादशस्थे ग्रहयोगे पूर्वोक्तयोगस्य ग्रहसङ्ख्यायोगानुसारं न्यूनत्वं ज्ञेयम्।

अपि च लग्ननवमादिशुभस्थानस्थशुभग्रहाणां योगे सति चोत्तरोत्तरं भाग्यवृद्धिर्वाच्या।

जैमिनीयसूत्रेऽपि—

"व्यये सग्रहे ग्रहदृष्टे श्रीमन्तः, शुभैर्न्याय्यो लाभः"
'पापैरमार्गेण उच्चादिभिर्विशेषात्'[1]

**द्वादशभावफलमाह।**

द्वादशभावे शुभाशुभग्रहयोगे बाहुल्यव्ययः। शुभयोगे शुभमार्गे व्ययः। अशुभग्रहयोगेऽशुभमार्गे व्यय इति बोध्यम् सूर्यादिग्रहाणां तत्तद्योगानुसारं व्यये योगानाह।

द्वादशस्थे शुक्रे सूर्यराहुदृष्टे राजमूलाद्धनव्ययः। चन्द्रदृष्टौ तु व्ययाधिक्यमिति विशेषोऽत्र।

द्वादशस्थे बुधे शुभग्रहयुते दृष्टे वा सति ज्ञातिकृते व्ययः।

पापदृष्टे युते च कलहेन व्ययो इति विशेषः।

अथान्यग्रहदृष्टे गुरौ करमूलाद्व्ययः। शनौ भौमयुतेऽन्यग्रहदृष्टे भ्रातृवर्गाद्धनव्ययः।

---

१. अच्युतानन्द झा, जैमिनिसूत्रम् १।३।६-१२, चौखम्बा संस्कृत सीरिज, बनारस।

एवमत्र यान् ग्रहानधिकृत्य व्ययविवेचनन्तथैव तेषां ग्रहाणामेकादशस्थाने स्थितेषु तत्तद्ग्रहकृतलाभयोगो ज्ञेयः । यथा चैकादशे शुक्रे राहुसूर्यदृष्टे राजमूलाद्धनप्राप्तियोग एवं सर्वत्र ज्ञेयम् ।

जैमिनीयसूत्रेऽपि—

'नीचे ग्रहदृग्योगाद् व्ययाधिक्यम्'
रविराहुशुक्रैर्नृपात्' 'चन्द्रदृष्टौ निश्चयेन'
बुधेन ज्ञातिभ्यो विवादाद्वा' 'गुरुणा करमूलात्',
'कुजशनिभ्यां भ्रातृमुखात् एतैर्व्यय एवं लाभः'[1]

**सप्तमभावफलम् ।**

सप्तमे राहुयुते चोदरव्यथा केतुयोगे चाधिक्यम् । तथा च पापदृष्टे युते च केतौ साहसी, श्वेतकेशी दीर्घलिङ्गी च भवति ।

(काशी-संस्करणे चात्र दीर्घस्थाने वृद्धशब्दः) ।

गुरुचन्द्रशुक्रेष्वेकस्मिन् द्वये त्रये वा सति लक्ष्मीवान् भवति ।

उच्चग्रहयुते सप्तमेऽपि श्रीमाध् कीर्तिमांश्च प्रोक्तः ।

**द्वितीयभावफलम्—**

द्वितीयभावस्य फलं सप्तमभाववज्ज्ञेयम् ।

विशेषः ।

पदाद्द्वितीये शुभग्रहे सर्वदेशाधिपः सर्वज्ञो राजा भवति शुक्रे च कविर्वक्ता व भवतीति विशेषः ।

लग्नारूढात्सप्तमेऽन्यकेन्द्रे त्रिकोणेषु च सप्तमभावस्यारूढलग्नेऽथवा लग्नसप्तमारूढलग्नयोः प्राबल्ये बलवच्छुभग्रहयुते सति श्रीमान् देशख्यातश्च भवति ।

लग्नारूढादष्टमे षष्ठे द्वादशे वा सप्तमभावारूढलग्ने सति निर्धनयोगः ।

पदात्सप्तमे केन्द्रत्रिकोणे तृतीये चैकादशे शुभग्रहयोगे भार्याभर्तृसुखप्रदयोगः ।

---

१. अच्युतानन्द झा, जैमिनिसूत्रम् १।३।६-१२, चौखम्बा संस्कृत सीरिज, बनारस ।

एवं पदात्पुत्रभ्रातृमातृपितृभावानां लग्नारूढेष्वपि ज्ञेयम् । अर्थाद्यदि पदादेषां भावानामारूढलग्नानि केन्द्रत्रिकोणस्थानि तदा तेषां मैत्री । षष्टाष्टमद्वादशस्थानि चेत्तदा शत्रुतेति भावः ।

जैमिनीयसूत्रे चास्या वर्णनस्योल्लेखः—

'लाभपदे केन्द्रे त्रिकोणे वा श्रीमन्तः',
'अन्यथा दुःस्थे' 'केन्द्रत्रिकोणापचयेषु
द्वयोर्मैत्री' 'रिपुरोगचिन्तासु वैरम्'

इत्यादि ।[1]

विशेषः—

अत्र येषां ग्रहयोगानामारूढलग्ने चर्चा विहिता, ते कारकांशचक्रेऽपि प्रयोक्तव्याः ।

अर्थात्कारकांशचक्रस्य फलमप्यारूढलग्नवज्ज्ञेयम् । जैमिनिसूत्रेऽप्येवमेव ।[2]

## (घ) उपपदनिरूपणम् ।[3]

### (अ) उपपदज्ञानविधिः ।

लग्नाद्द्वादशभावमधिकृत्योपपदस्य व्याख्यानम् ।

यथा लग्नाद्यावद्दूरं लग्नेशो लग्नेशाच्च तावद्दूरं पदमुच्यते । इत्थमत्रापि द्वादशभावाद्यावद्दूरं द्वादशभावेशो भवेत् द्वादशभावेशाच्च तावद्दूरं यो भावः स उपपदवाच्य इति ।

यथा हि यदि द्वादशेशः (कर्कलग्ने मिथुनराशीशः) द्वादशाच्चतुर्थस्थस्तदा (लग्नात्तृतीयस्थः कन्याराशिस्थ इति) द्वादशेशात् चतुर्थो भावः (धनराशिः) एवोपपदमिति ज्ञेयम् ।

---

१. अच्युतानन्द झा, जैमिनिसूत्रम्, १।३।१८-२१, चौखम्बा संस्कृत सीरिज, बनारस ।
२. तत्रैव, १।३।१७.
३. बृ० पा० पू० भा० १२ अध्यायः सकलः (मुम्बई-मं०)

तथा हि ग्रन्थकारः[1]—

पदारूढाद् व्ययस्थाने पदं चोपपदं स्मृतम् ।
लग्नानुचरसञ्ज्ञोपपदं च द्विजसत्तम ।

काशी-संस्करणे च पाठभेदः ।[2]

तनुभावपदं विप्र प्रधानपदमुच्यते ।
तयोरनुचराद्यत् स्यादुपारूढं तदुच्यते ।।

अत्र टीकायां झा-महोदयेन 'तनुभावस्यानुचरः (पुत्रभाव इति)

इत्थमनुचरशब्देनोपपदाय पञ्चमभावा गृहीतः तन्नोचितः, अत्रानुचरशब्देन द्वादशभावस्यैव ज्ञानात् ।

जैमिनीयसूत्रेऽपि[3] उपपदं पदं पित्रनुचरात् 'अत्र पितृशब्देन कटपयपद्धत्या लग्नशब्दस्यैव ज्ञानम् । कैश्चिट्टीकाकारैरत्र पितृशब्देन सप्तमस्योल्लेखो विहितस्त-स्याचाचार्यनीलकण्ठेन निराकरणं कृतम् । यदि लग्नस्थाने सप्तमस्यैवाभिप्राय आसीत्तदा "उपपदं लाभादिति जैमिनिना लेख्यमासीत् । तथा चात्र होराशस्त्रे लग्नानुचरमिति स्पष्ठः पाठः ।

अत्र केचित्पित्रनुचरशब्दस्य विषमलग्ने क्रमगणनया द्वादशभावस्य सम-लग्ने चोत्क्रमगणनया द्वितीयभावस्य पदमुपपदमिति स्वीकुर्वन्ति ।[4]

'पित्रानुचर' इति शब्दस्य जैमिनीयसूत्रटीकाकारेण कृष्णस्वामिना च द्वितीयभाव एवार्थः कृतः ।

आचार्य नीलण्ठेन तु पर्वेषां निराकरणं कृत्वा द्वादशभाव एव स्वीकृतः स एव बहुसम्मतः । 'पदारूढाद् व्ययस्थाने' इति पाठस्यात्र मुम्बई-संस्करणे स्पष्टोल्ले-खाच्च ।

---

१. बृ० पा० पू० भा० १२।२ (मुम्बई-सं०)
२. बृ० पा० ३०।२ (काशी-सं०)
३. अच्युतानन्द झा, जैमिनिसूत्रम् १।४।१, चौखम्बा संस्कृत सीरिज, बनारस ।
४. तत्रैव, पृ० ११३ ।

## (इ) उपपदानुसारं फलकथनम् ।

उपपदे विचार्यवस्तुकथनम् ।

उपपदारूढस्य द्वितीयभावे पापग्रहयुते दृष्टे सम्बन्धे, नीचग्रहे नीचसम्बन्धे वा प्रव्रज्यायोगः, अथ वा भार्याविरोधो भार्यानाशो वा बोध्यः । (काशी-संस्करणे विशेषोऽत्र शुभयोगे युते दृष्टे वा स्त्रीपुत्रसौख्यं वाच्यम्)[1]

अत्र सूर्यस्य सिंहराशौ पापत्वं न प्रोक्तम् । अर्थाद्यदि द्वितीयभावे सिंह—राशौ सूर्यः स्थितश्चेत्तदा न दारनाशः । अपितु गृहिणीसुखमिति भावः । जैमिनीयेऽपि :—

**'तत्र पापस्य पापयोगे प्रव्रज्या दारनाशो वा'**

**'उपपदस्याप्यारूढत्वादेव नात्र रविः पापः'**[2]

मेषादि पापराशौ च सूर्ये स्थिते दारनाशयोग एव केवलं सिंहराशिरेव सूर्यकृते न पापराशिरिति ज्ञेयम् ।

विशेषः—

उपपदद्वितीयभावे, शुभग्रहयुते दृष्टे सम्बन्धे उच्चस्थे, उच्चनवांशे मिथुनराशौगेऽपि बहुदारयोगः प्रोक्तः ।

स्वस्वामियुते वृषस्थे तुलास्थे शुक्रे चापि चोत्तरायुषि पत्नीनाशयोगः ।

उपपदस्यद्वितीयभावेशे चोच्चस्थे श्रेष्ठकुलाद्दारप्राप्तिः । शुभग्रहयुते दृष्टे च रूपवती भार्यायोगः ।

*अत्र शनिराहुयोगे स्त्रीत्यागस्य नाशस्य वा योगः ।*

केतुशुक्रयोगे भार्याया रक्तप्रदररोगयोगः ।

बुधकेतुयोगे चास्थिस्रावरोगयोगः । स्थूलाङ्गीयोगो वा शनिरविराहुयोगे चास्थिज्वररोगयोगः ।

बुधराशौ भौमयुतेऽथ्वा वा मङ्गलशनियोगे घ्राणरोगार्तिपित्तयोगः ।

---

१. वृ० पा० ३०।४ (काशी-सं०)

२. अच्युतानन्द भा, जैमिनिसूत्रम् १।४।२, ३, चौखम्बा संस्कृत सीरिज, बनारस ।

अत्र बुधमङ्गलयोगे शनियोगे वा कर्णरोगवती नेत्ररोगवती वा पत्नी भवति।

भौमबुधयोगेऽथा वा राहुगुरुयोगे दन्तरोगार्ता भवति।

अत्र कन्याराशौ वान्यराशौ शनिराहुयोगे पङ्गुयोगयुक्ता पत्नी कथिता।

अत्रापवादः। पूर्वोक्तयोगेषु शुभग्रहयुते दृष्टे वा सति वैपरीत्यम्। अर्थात्ते योगाः पूर्वोक्तकुफलप्रदा न भवन्तीति भावः।

अस्यैव छाया सर्वा जैमनीये सूत्रे द्रष्टव्या[1]

तथा हि—

**'शुभदृग्योगान्न'।**

इत्यादि।

अत्र विशेषमाह।

लग्नात् पदादुपपदाच्च यो सप्तमो भावस्तस्मादपि तस्य नवांशात्तस्य भावस्वामिसकाशाद्वा पूर्वोक्तयोगेषु पूर्वोक्तं फलं बोध्यम्। जैमिनीयेऽपि—

**'सप्तमांशग्रहेभ्यश्चैवम्।'[2]**

काशी-संस्करणेप्येवमेव।[3]

उपपदादपि सन्ततिविचारमाह।

लग्नादुपपदाद्वा सप्तमे भावे सप्तमभावनवांशे वा सप्तमेशस्य नवांशे सप्तमेशस्थराशौ वा पापयुते दृष्टे वा शनिबुधशुक्रयोगेऽनपत्ययोगः।

पदोपपदजन्मलग्नानां पञ्चमस्थे पुत्रकारके गुरुसूर्यराहुयोगे च बहुपुत्रयोगः। पुत्रश्च बलवीर्यवान् प्रचण्डविजयी शत्रुहन्ता भवन्ति।

अत्र केवलं चन्द्रयोगे चैक एव पुत्रः कथितः।

अत्र पापशुभमिश्रयोगे च चिरात्पुत्रयोगः।

अत्र भौमबुधयोगे चानपत्ययोगः। अथवा दत्तकपुत्रकयोगो भवति। अथ वा सहोढपुत्रवान् भवति (कन्यास्थाने परपुरुषकृतगर्भयुताया स्त्रियः सह विवाहो वा भवति तस्यां जातस्य पुत्रस्य योग इति भावः)।

---

१. अच्युतानन्द झा, जैमिनिसूत्रम् १।४।४-२१, चौखम्बा संस्कृत सीरिज बनारस।

२. तत्रैव १।४।२३।

३. बृ० पा० ३०।२३, २४ (काशी-सं०)

काशी-संस्करणे भौमशनियोग इति पाठः ।[1]

अत्र विषमराशौ बहुपुत्रयोगः । (मिथुनराशि विहायेति)

मिथुनराशौ समराशौ च स्वल्पापत्ययोगः ।

अत्र सिंहराशौ सूर्ययोगे तथोपपदलग्ने च सिंहराशौ चन्द्रयुते दृष्टे वा स्वल्पपुत्रयोगः कन्यायोगो वा ।

अन्ययोगाः ।

अत्र पञ्चमभावनवांशात्पुत्रकारकात्त्रिंशांशकुण्डल्यामपि पञ्चमभावनवांशात् पञ्चमभावस्वामितो वा पूर्वोक्तसन्ततियोगा विचार्या इति विशेषः ।

जैमिनीयसूत्रेऽपि—

'सप्तांशग्रहेभ्यश्चैवम्'

इत्यादि सूत्राणि द्रष्टव्यानि ।[2]

उपपदाद्भ्रातृविचारमाह—

उपपदाद्तृतीये शनिराहुयोगे भ्रातृनाशः । अयं योगश्चैकादशे भावे स्यात्तदा ज्येष्ठभ्रातृनाशः ।

तृतीये च कनिष्ठभ्रातृनाश इति विशेषः ।

अत्र तृतीये शुक्रे कनिष्ठगर्भस्य तथैकादशे शुक्रे पूर्वगर्भस्य (ज्येष्ठस्य) नाशयोगः ।

उपपदलग्नेऽष्टमे वा शुक्रयुते दृष्टे पूर्वोक्तयोगे च मातृगर्भनाशयोगः ।

अत्र तृतीये भौमगुरुबुधचन्द्रयोगे बहुभ्रातृयोगः । मातृणाञ्च प्रजापित्व-योगोऽपि ।

अत्र शनिभौमयुते दृष्टे वा तृतीये चैकादशे कनिष्ठज्येष्ठभ्रातृनाशयोगः । केवलं शनियोगे स्वं विना भ्रातृनाशयोगः ।

अत्र केतुयोगे बहुभगिनीयोगः ।

उपपदात्सप्तमे द्वादशे वा राहुयुते दृष्टे वा ज्ञानवान् बहुभाग्ययुतो जातकः भवति ।

---

१. बृ० पा० ३०।२७ (काशी-सं०)

२. अच्युतानन्द झा, जैमिनिसूत्रम् १।४।२३-३१, चौखम्बा संस्कृत सीरिज, बनारस ।

उपपदस्य सप्तमेशाद् द्वितीये केतुयुते दृष्टे वा जातकः स्तब्धवाक् स्खलितवाग्वा भवति ।

उपपदात्षष्ठस्थे पापग्रहे शुभदृष्टिशून्ये च जातकश्चौरो भवति।

उपपदलग्ने बुधयुते सर्वदेशाधिपयोगः । गुरुयुते सर्वज्ञयोगः । शुक्रयोगे कविर्वक्ता व भवति ।

उपपदाद्द्वितीये शुभग्रहे सर्वद्रव्याधिपयोगः । धीमान् वा भवति ।

उपपदस्य द्वितीयेशस्थराशितो द्वितीये पापयुते चौरो भवति ।

अत्र सप्तमेशाद् द्वितीये राहुयुते मूकयोगः । केतुयोगे दन्तुलयोगः वातव्याधिश्च ।

शनियोगे गौरः श्यामो नीलपीतो वुद्धिमान् भवित ।

अन्यविशेषयोगानाह—

एषां योगानामुपपदेन न सम्बन्धः । परञ्चास्य जैमिनीये सूत्रेऽस्मिन्नेव प्रकरणे लेखो विद्यतेऽतोऽत्रापि समुल्लेखः ।

परञ्चास्य काशी-संस्करणे नोल्लेख इति ।

अस्य प्रकरणस्य जैमिनीये सूत्रे पराशरस्यानुकरणमथवा चास्मिन् ग्रन्थे जैमिनीयसूत्रस्यानुकरणमिति विवादास्पदम् ।

तथा हि[1] जैमिनीयसूत्रे—

'अमात्यानुचराद्देवताभक्तिः'

अत्रापि[2]—

'अमात्यानुचराद्विप्रदेवभक्तिं विचिन्तयेत्'

अर्थादमात्यकारकान्यूनांशकात् देवताभक्तिविचारः कार्यः । तस्य पापत्वे क्रूरदेवोपासना शुभत्वे च शुभदेवताभक्तिः ।

---

१. अच्युतानन्द झा, जैमिनिसूत्र १।४।४३, चौखम्बा संस्कृत सीरिज, बनारस ।

२. बृ० पा० पू० भा० १२।४५ (मुम्बई-सं०)

**जारजयोगाः**

आत्मकारकस्य नवांशे पापदृष्टे सम्बन्धे पापनवांशे वा। शुभग्रहयुतिरहिते च जारजयोगः यदि चात्मकारकनवांशपतिपापश्चेत्तदा जारजयोगाभावः।

अन्यग्रहाणां पापयोगेऽथ वाष्टमस्थे पापे जारजयोगाभावः।

अत्र शनिराहुयोगेऽथ वा शनिराहुक्षेत्रे वा जारज इति लोके प्रसिद्धिः स्यात् (वस्तुतस्तु स न जारज इति भावः)

अत्र शुभग्रहवर्गे शुभग्रहयोगे चापि न जारजः केवलं 'जारज' इति कथन-मात्रं लोके ज्ञेयम्।

अत्रात्मकारकनवांशे स्वोच्चस्थग्रहद्वययोगे जातकः कुलमुख्यः प्रोक्तः।

अपि च यदि लग्नात्पूर्वषट्कर्यन्त सर्वे ग्रहास्युस्तदा सौख्यप्राप्तियोगः।

जैमिनिसूत्रेऽप्येवं प्रोक्तम्—

'स्वांशे केवलं पापसम्बन्धे परजातः',
'नात्र पापात्' 'शनिराहुभ्यां प्रसिद्धिः'
'गोपनमन्येभ्यः' 'शुभवर्गेऽपवादमात्रम्' 'द्विग्रहे कुलमुख्यः'[1]

**(ङ) समीक्षा**

**(अ) पूर्वपरम्परा।**

कारकांशफलाध्याये पराशरेणेदं लिखितम् यदयं विचारः पूर्वं भगवता शङ्करेण रुद्रयामले ग्रन्थे भाषितम् तथा हि।

**यथावद्भाषितं शूलिना प्रोक्तंयद्रुद्रयामले।**[2]

अनेनेदं ज्ञायते यत्कारकानां ज्ञान-प्रक्रिया पराशरात्पूर्वमप्यसीदिति। अच्यु-तानन्द-झा-महोदयेन जैमिनिसूत्रस्य व्याख्याने प्रसङ्गेन पराशरकारिकाया

---

१. अच्युतानन्द झा, जैमिनिसूत्रम् १।४।४४-४६, चौखम्बा संस्कृत सीरिज, बनारस।

२. वृ० पा० ३।३ (मुम्बई-सं०)

वचनं कारकविवेचनावसरे उद्धृतम् । ते च श्लोका अस्य बृहत्पाराशरहोरशास्त्र-स्यैव सन्ति ।

तथा हि—

'आत्मकारकखेटेन न्यूनभागो हि यद्ग्रहः
आमात्यसञ्ज्ञा तस्यैव ज्ञायते द्विजसत्तम ।'

अनेन ज्ञायते यद्वृद्धपरम्परायां कारकप्रक्रिया आसीदिति । अस्तु । ग्रन्थ-परम्पराया विशेषचर्चा नोपलभ्यते परञ्च पराशरात्पूर्वमस्य व्याख्यानस्यास्तित्वं तूपलभ्यते एव ।

## (इ) उत्तरवर्तिषु प्रभावः ।

कारकानां कारकांशकुण्डलीचक्रस्य पदोपपदयोर्विशेषचर्चा पराशरवज्जैमि-निसूत्रे पूर्णरूपेण दृश्यते । जैमिनिना प्रथमाऽध्यायस्य प्रथमपादे कारकानयनप्रकारो दर्शितः । तथा च तत्र तेन **'स इष्टे बन्धमोक्षयोः'**, इति सूत्रे आत्मकारकस्यैव प्राधान्यं दर्शयिता बन्धमोक्षयोः चर्चा कृता । बन्धनमोक्षौ एव भारतीयधर्मसंस्कृति-परम्परायां महत्त्वं धारयतः । अनेनात्मकारक एव बन्धमोक्षयोराधारभूतो द्वितीयो जीवात्मैवेति दर्शनशास्त्ररहस्यमप्यत्र प्रकटीकृतम् ।[1]

कारकांशफलमपि प्रथमाध्यायस्य द्वितीयपादे विशेषेणाङ्कितम् । कारकां-शादेव सुखदुःखरोगाजीविकापुण्यकर्मनिर्याणकारणगृहनिर्माणगुरुभक्तिकलत्र-विचारमरणानन्तरगन्तव्यस्थानादिकस्य, शिवगौरीलक्ष्मीस्कन्दादीनां भक्तिकारणस्य विविधरोगाणां विविधव्यवसायस्य च चर्चा दृश्यते । पदोपपदाभ्यामपि पूर्वोक्त-विविधफलज्ञानमङ्कितम् ।[2]

आचार्यवराहमिहिरेण नानुसृतोऽयं मार्गः । तेन केवलं प्रकीर्णकाध्याये भावानुरूपं ग्रहाणां कारकत्वं स्वीकृतम् । अर्थात्केन्द्रस्थाः ग्रहाः परस्परं कारका-स्तत्रापि दशमस्थो ग्रहो विशेषेण कारक इत्यादिकं लिखितम् ।

---

१. अच्युतानन्द झा, जैमिनिसूत्रम्, पृ० ३४, ३७, चौखम्बा संस्कृत सीरिज, बनारस ।

२. तत्रैव, प्रथमाध्यायस्य प्रथम-द्वितीय-पादौ ।

सारावलीकारेण कल्याणवर्मणापि वराहमिहिरस्य मार्गोऽनुसृतः।

केवलं विविधवस्तुजातस्य कस्मात्कस्माद्ग्रहाद्विचारो विधेय इति प्रतिपादितम्। अर्थात्तत्तद्वस्तुजातस्य स स ग्रहः कारक इति पराशरस्यानुकरणं विहितम्।[1] अस्य चर्चाऽत्र वृहत्पाराशरशास्त्रे विद्यते।[2]

जातकपारिजातकारेण वैद्यनाथमहोदयेन नैवास्य प्रकरणस्य चर्चा विहिता स्वग्रन्थे इति। सर्वार्थचिन्तामणिकारेण व्यङ्कटेशेन शम्भुहोराप्रकाशकारेणाचार्यपुञ्जेनाऽप्ययमेव मार्गोऽनुसृतः ताभ्यामपि अस्मिन् विषये मौनमेव स्वीकृतम्। कालिदासकृते उत्तरकालामृते कारकत्वनामकः खण्डो विद्यते यत्र द्वादशभावेषु किं विचार्यमुत वा द्वादशभावः केषाञ्च वस्तूनां कारका इति लिखितम्। एवमेव सूर्यादिग्रहाणामपि कारकत्वं प्रतिपादितम्।[3] कारकांशपदोपपदादिचर्चा नैव दृश्यते। आचार्यदुण्ढिराजमहोदयेनाऽपि जातकाभरणे नैव चर्चा विहिता। दैवज्ञाभरणकर्त्रापि न किञ्चदङ्कितमस्ति। अनेनेदं प्रतीयते यद् जैमिनितः परवर्तिकाले ज्योतिर्विदिराचार्यैरस्योपयोगित्वं पृथक्त्वेन नैव दृष्टम्।

अथवा पराशरेणाप्यङ्कितत् यद्वस्तुजातमात्मकारकारकाद्विचार्यं तद्वस्तुजात लग्नादपि। एवञ्च यत्पुत्रकारकात्तच्च पञ्चमेशादिति। यथा हि—

'चिन्तयेत् कारकांशे व जनुर्लग्नेऽथ वा द्विज'
आत्मकारकपुत्राभ्यां योगमेकं प्रकल्पयेत्
तनुपञ्चमनाथाभ्यां तथैव द्विजसत्तम इत्यादि।[4]

तेनेदं प्रतीयते यज्जन्मलग्नादिकस्यैव प्राधान्यं पश्यद्भिरनुवर्तिभिराचार्यैर्नायं पन्था अनुसृत इति।

---

१. सीताराम झा 'बृहज्जातकम्' २२ अध्यायः, मास्टर खेलाड़ीलाल एण्ड सन्स, बनारस।

२. बृ० पा० ८।४०-४८ (मुम्बई-सं०)

३. सुब्रह्मण्य शास्त्री, उत्तरकालामृतम्, ५ खण्ड, ५० थर्डक्रास रोड, बासावागुडी, बगलोर।

४. बृ० पा० ३६।३, ४ (काशी-सं०)

वचनं कारकविवेचनावसरे उद्धृतम् । ते च श्लोका अस्य बृहत्पाराशरहोरशास्त्रस्यैव सन्ति ।

तथा हि—

'आत्मकारकखेटेन न्यूनभागो हि यद्ग्रहः
आमात्यसञ्ज्ञा तस्यैव ज्ञायते द्विजसत्तम ।'

अनेन ज्ञायते यद्वृद्धपरम्परायां कारकप्रक्रिया आसीदिति । अस्तु । ग्रन्थपरम्पराया विशेषचर्चा नोपलभ्यते परञ्च पराशरात्पूर्वमस्य व्याख्यानस्यास्तित्वं तूपलभ्यते एव ।

## (इ) उत्तरवर्तिषु प्रभावः ।

कारकानां कारकांशकुण्डलीचक्रस्य पदोपपदयोर्विशेषचर्चा पराशरवज्जैमिनिसूत्रे पूर्णरूपेण दृश्यते । जैमिनिना प्रथमाऽध्यायस्य प्रथमपादे कारकानयनप्रकारो दर्शितः । तथा च तत्र तेन **'स इष्टे बन्धमोक्षयोः'**, इति सूत्रे आत्मकारकस्यैव प्राधान्यं दर्शयिता बन्धमोक्षयोः चर्चा कृता । बन्धनमोक्षौ एव भारतीयधर्मसंस्कृतिपरम्परायां महत्त्वं धारयतः । अनेनात्मकारक एव बन्धमोक्षयोराधारभूतो द्वितीयो जीवात्मैवेति दर्शनशास्त्ररहस्यमप्यत्र प्रकटीकृतम् ।

कारकांशफलमपि प्रथमाध्यायस्य द्वितीयपादे विशेषेणाङ्कितम् । कारकांशादेव सुखदुःखरोगाजीविकापुण्यकर्मनिर्याणकारणगृहनिर्माणगुरुभक्तिकलत्रविचारमरणानन्तरगन्तव्यस्थानादिकस्य, शिवगौरीलक्ष्मीस्कन्दादीनां भक्तिकारणस्य विविधरोगाणां विविधव्यवसायस्य च चर्चा दृश्यते । पदोपपदाभ्यामपि पूर्वोक्तविविधफलज्ञानमङ्कितम् ।[१]

आचार्यवराहमिहिरेण नानुसृतोऽयं मार्गः । तेन केवलं प्रकीर्णकाध्याये भावानुरूपं ग्रहाणां कारकत्वं स्वीकृतम् । अर्थात्केन्द्रस्थाः ग्रहाः परस्परं कारकास्तत्रापि दशमस्थो ग्रहो विशेषेण कारक इत्यादिकं लिखितम् ।

१. अच्युतानन्द झा, जैमिनिसूत्रम्, पृ० ३४, ३७, चौखम्बा संस्कृत सीरिज, बनारस ।

२. तत्रैव, प्रथमाध्यायस्य प्रथम-द्वितीय-पादौ ।

सारावलीकारेण कल्याणवर्मणापि वराहमिहिरस्य मार्गोऽनुसृतः।

केवलं विविधवस्तुजातस्य कस्मात्कस्माद्ग्रहाद्विचारो विधेय इति प्रतिपादितम्। अर्थात्तत्तद्वस्तुजातस्य स स ग्रहः कारक इति पराशरस्यानुकरणं विहितम्।[1] अस्य चर्चाऽत्र बृहत्पाराशरशास्त्रे विद्यते।[2]

जातकपारिजातकारेण वैद्यनाथमहोदयेन नैवास्य प्रकरणस्य चर्चा विहिता स्वग्रन्थे इति। सर्वार्थचिन्तामणिकारेण व्यङ्कटेशेन शम्भुहोराप्रकाशकारेणाचार्यपुञ्जेनाप्ययमेव मार्गोऽनुसृतः ताभ्यामपि अस्मिन् विषये मौनमेव स्वीकृतम्। कालिदासकृते उत्तरकालामृते कारकत्वनामकः खण्डो विद्यते यत्र द्वादशभावेषु किं विचार्यमुत वा द्वादशभावः केषाञ्च वस्तूनां कारका इति लिखितम्। एवमेव सूर्यादिग्रहाणामपि कारकत्वं प्रतिपादितम्।[3] कारकांशपदोपपदादिचर्चा नैव दृश्यते। आचार्यढुण्ढिराजमहोदयेनाऽपि जातकाभरणे नैव चर्चा विहिता। दैवज्ञाभरणकर्त्रापि न किञ्चदङ्कितमस्ति। अनेनेदं प्रतीयते यद् जैमिनितः परवर्तिकाले ज्योतिर्विदिराचार्येरस्योपयोगित्वं पृथक्त्वेन नैव दृष्टम्।

अथवा पराशरेणाप्यङ्कितत् यद्वस्तुजातमात्मकारककारकाद्विचार्यं तद्वस्तुजात लग्नादपि। एवञ्च यत्पुत्रकारकात्तच्च पञ्चमेशादिति। यथा हि—

> 'चिन्तयेत् कारकांशे व जनुर्लग्नेऽथ वा द्विज'
> आत्मकारकपुत्राभ्यां योगमेकं प्रकल्पयेत्
> तनुपञ्चमनाथाभ्यां तथैव द्विजसत्तम इत्यादि।[4]

तेनेदं प्रतीयते यज्जन्मलग्नादिकस्यैव प्राधान्यं पश्यद्भिरनुवर्तिभिराचार्यैर्नायं पन्था अनुसृत इति।

---

१. सीताराम झा 'बृहज्जातकम्' २२ अध्यायः, मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

२. बृ० पा० ८।४०-४८ (मुम्बई-सं०)

३. सुब्रह्मण्य शास्त्री, उत्तरकालामृतम्, ५ खण्डः, ५० पर्डक्रास रोड, बासावागुदी, बंगलोर।

४. बृ० पा० ३६।३, ४ (काशी-सं०)

## (उ) वैशिष्ट्यम् ।

सूक्ष्मवस्तूनां फलज्ञाने कारकप्रकरणस्य महत्त्वपूर्णं स्थानं जैमिनिना त्वस्य पूर्णरूपेणानुकरणं कृतम् । भावानां ग्रहाणाञ्च नवांश एव तत्त्वमत एव यद्वस्तुजातं भावैः ग्रहैश्च न स्पष्टं भवति तच्च नवांशेन स्पष्टं ज्ञायते । नवांशस्य फलितशास्त्रे महन्महत्त्वं विद्यते । तथा च यस्य ग्रहस्यांशा अधिका स ग्रहो बलवानिति मन्यते स एवात्रात्मकारकेनाङ्गीकृतः । अतश्च कारकाणां कारकांशकुण्डलीचक्रेण फलकथनमतीव चमत्कारि । सर्वत्र लग्नेशस्यैव महिमा ज्योतिषशास्त्रे । अतश्च लग्नेशस्य तस्यानुचरस्य द्वादशेशस्य वा बलज्ञानेन पदोपपदयोरपि फलज्ञानमतीव मनोरममिति ज्ञायते ।

## षष्ठोऽध्यायः

# आयुर्दायनिरूपणम्

### (क) विषयावतरणम्

महत्वपूर्णस्यायुर्दायस्य महर्षिपराशरेणास्मिन् ग्रन्थे यत्र तत्र सुतरां विचारो विहितः। पूर्वभागे २३, २४, २६, २७ तमा अध्याया एवमुत्तरभागेऽपि १०, ११, १२ तमा अध्याया आयुर्दाय-विचारे उपलभ्यन्ते। तत्र २३ तमो अध्यायः मारकनाम्नाङ्कितः। अत्र कस्य भावस्य स्वामी ग्रहो मारको भवति। अथवा कस्य भावेशस्य ग्रहस्यान्तर्दशायां मारको जायते इति निरूपितम्। शेषाणां पूर्वभागीयानां २४, २५, २६ तमानां तथा चोत्तरभागीयानां १०, ११, १२ तमानामध्यायानामायुर्दायनामेव दृश्यते। अथ च पूर्वभागीये २७ तमेऽध्याये पितृमातृभ्रातृपुत्रस्त्रीकुटुम्बादिकस्य चायुर्दायद्योतको निर्णयविचारो विहितः।

रिष्टारिष्टभङ्गनामकस्य ५ सङ्ख्याकस्याध्यायस्याप्यत्रैव सन्निवेशो विहितः। यतोऽत्रापि च मरणस्यैव विचारो दृश्यते। यत्र बालारिष्टस्य जन्मकाले एव जातकस्य तस्य पित्रोश्चापि मरणविचारो दृश्यते। अपि च मरणानन्तरं गन्तव्यस्थानस्य विचारोऽपि आयुर्दाये दृश्यते। अतश्च मया पूर्वजन्मवर्णननामकस्य ३३ सङ्ख्याकस्याध्यायस्यात्रैव सन्निवेशः कृत इति ज्ञेयम्। आयुर्दायस्यान्यत्रापि अष्टकवर्गादिप्रकरणेषु यत्रोपलभ्यते तस्य तत्रैव विचारो विहित इति तत्रैव द्रष्टव्यम्। मनुष्यस्य जीवने आयुष एव महन्महत्त्वं तेन विना सर्वं भूतभविष्यवर्तमानात्मकं राजयोगादिकं ज्ञानं फलं च निष्फलमिति ज्ञात्वास्यायुर्दायविचारस्य ज्योतिषफलप्रक्रियायां मूर्धन्यस्थानमिति दरीदृश्यते। अत एव फलदीपिकाकारेण मन्त्रेश्वरेणाङ्कितम्।

'जाते कुमारे सति पूर्वमार्यैरायुर्विचिन्त्यं हि ततः फलानि।
विचारणीया गुणिनि स्थिते तद्गुणाः समस्ताः खलु लक्षणज्ञैः ॥'[1]

### (अ) आयुर्दायस्वरूपम्[2]

आयुर्दायस्यापि ज्यौतिषशास्त्रेऽतिशयो महिमा वरीवर्ति। यतो हि जातको भाग्यान्वितो राजयोगयुक्तोऽपि यद्यल्पायुयोगाश्रितस्तर्हि भविष्यस्य किं प्रयोजनम्। अपितु तस्य भाग्यस्यापरजन्मनि प्रयोगः। एतादृशा अपि बहवो मानवा इतिहासे दरीदृश्यन्ते येऽल्पायुर्योगिनो द्वात्रिंशवर्षेभ्योऽपि पूर्वं राजयोग युक्तास्तेजस्विनो विश्वेऽनुपमकार्यं सम्पाद्यमाना कालग्रासकलविता बभूवुः।

केचिच्च योगभ्रष्टा जना महति कुलेसमुत्पन्ना ऐश्वर्यं बाल्यकाले एव भुक्त्वा पञ्चत्वमापन्नाः।

निर्भाग्या अपि दीर्घायुर्योगिनो महत्कष्टं भुञ्जमाना जीवनमसहमाना मृत्योः प्रतीक्षां कुर्वाणा भगवन्तं परमात्मानं प्रार्थयन्ते अचिरात्स्वर्गलोकंगन्तुं। अतश्च ज्योतिषशास्त्रस्य मुख्यं प्रयोजनं भविष्यद्योतनम्। यदि मानवस्यायुरेव नास्ति तर्हि भविष्यज्ञानस्य किं प्रयोजनम्।

अत एव भाग्यज्ञानवदायुषोऽपि ज्ञानं मानवजीवने सुतरामावश्यकम्।
ज्योतिर्विद्विद्वद्भिरस्यां दिशायामपि महान् प्रयासो विहितः।
महर्षिपराशरेण सर्वाङ्गीणो विचारो विहितोऽत्र।

### (इ) आयुषो भेदाः।

त्रिविधत्वमायुषो ज्यौतिषे शास्त्रेऽल्पायुर्मध्यमायुर्दीर्घायुर्भेदात्।

द्वात्रिंशात्पूर्वमल्पायुः। चतुःषष्टि वर्षेभ्योऽर्वाङ्मध्यमायुर्योगः। एभ्यो भेदेभ्यो योऽन्योऽप्येको योगो निगदितः। यः केवलं कतिपयैरेव भाग्यशालिभिर्मनवैरवाप्यते स उत्तमायुर्नाम योगोऽस्य लक्षणं शतादूर्ध्वमायुःप्राप्तिरिति कथितम्।

---

१. मन्त्रेश्वरः, फलदीपिका २३।१, के० एम कृष्णमूर्ति, ६५ थर्ड मास रोड, बासावांगुदी, बंगलोर।

२. बृ० पा० पू० भा०, २३-२७, मध्याया द्रष्टव्याः (मुम्बई-नं०)

चतुर्विंशतिवर्षेभ्यः पूर्वमायुषो ज्ञानं सम्यक्प्रकारेण न ज्ञातुं शक्यते। एभ्यो वर्षेभ्योऽर्वाङ् मृत्युर्बालमृत्युर्नाम। अस्यापि त्रिविधत्वम्।

पितृदोषमृत्युर्मातृदोषमृत्युररिष्टदोषमृत्युश्चेति।

अतो बालमृत्युयोगपरिहारार्थं जपहोमचिकित्साद्यैर्बालरक्षां यत्नेन कुर्यात्।

अत्र मन्त्रेश्वरः—

**तद्दोषशान्त्यै प्रतिजन्मतारमाद्वादशाब्दं जपहोमपूर्वम्।**
**आयुष्करं कर्म विधाय तातो बालं चिकित्सादिभिरेव रक्षेत्।[1]**

अत्रापि त्रिविधस्यायुर्योगस्यापि प्रत्येकस्य पुनस्त्रिविधत्वेन नव भेदाः।
अर्थादल्पायुर्योगस्याल्पमध्यपूर्णभेदेन त्रिविधत्वम्।
एवं मध्यमायुर्दीर्घायुर्योगयोरप्यवगन्तव्यम्।
मारकस्थानस्य मारकनक्षत्रस्य च विचारः।
अल्पायुर्योगिनस्तु विपत्तारायां मृत्युर्भवति।

एवञ्च मध्यमायुर्योगिनः प्रत्यरितारायां दीर्घायुर्योगयुक्तस्य च वधतारायां प्राणान्तो भवतीति भावः।

ताराज्ञाने तु जन्मनक्षत्रात्तृतीयनक्षत्रं विपत्तारा पञ्चमञ्च प्रत्यरिस्तथा सप्तमञ्च वधतारेति ज्ञेयम्।

## (उ) मारकविचारः[2]

जन्मकुण्डल्यां तृतीयाष्टमौ भावौ मनुष्यस्यायुर्द्योतकौ।

तयोर्व्ययभावौ द्वितीयसप्तमौ भावौ मारकभावावित्यर्थः। तत्रापि सप्तमाद्द्वितीय भावस्य मारकत्वं बलवत्तरम्। इति सामान्यविचारः।

विशेषविचारोऽप्यत्र विहितः—

आत्मकारकांशलग्नात्तथा जन्मलग्नाच्च ये तृतीयषष्ठाष्टमद्वादशद्वितीय-

---

१. मन्त्रेश्वरः, फलदीपिका १३।५, के० एस० कृष्णमूर्ति, ६५ थर्ड क्रास रोड, बासावागुडी, बंगलोर।
२. वृ० पा० पू० भा० २३ अध्यायः (मुम्बई-सं०)

सप्तमस्थानाधिपास्ते सर्वे मारका उच्यन्ते। तेषु बलवत्तरो मुख्यमारक इति। सर्वेष्वेषु समानबलवत्सु षष्ठेश एव मुख्यमारक इति भावः।

मारकग्रहाश्रितराशिदशायामथ च मारकग्रहराशिदशायां (अत्राद्ये चरदशायामुत्तरे विंशोत्तर्यामिति भावः) पापग्रहयोगे निश्चितो मृत्युरिति।

यदि सर्वे मारका बलशालिनस्तर्हि तेषां दशाकाले रोगकष्टादिसम्भवः परञ्च मृत्युस्तु षष्ठेशस्य दशायामेव निश्चितः।

एषां मारकानामन्तर्दशास्वपि भयशोकौ तस्कराग्निभीतिरोगदुःखार्तिरिति कष्टादिकस्य सम्भव इति विशेषः।

षष्ठाष्टमेशयोर्मध्येऽपि प्रायश अष्टमेश एव मारकः। परञ्च षष्ठेशे पापबाहुल्ये सति स एव मुख्यमारकः।

दीर्घायुर्मध्यामायुर्योगत्वेन मारकत्वं दर्शयति। मध्यमायुर्योगे षष्ठात्षष्ठेतराद्वापि त्रिकोणगो ग्रहो मारकः। षष्ठेशाश्रितराशीशदशायामपि मृत्युर्योगः।

दीर्घायुर्योगे तु षष्ठराशेस्तदीशस्य वा त्रिकोणस्थो यो ग्रहस्तस्य तदाश्रितस्य राशीशस्य वा दशायां मृत्युर्योगः।

राहुकेतू अपि लग्नसप्तमाष्ठमद्वादशभावस्थौ मारकेशयुतौ मारकेशात्सप्तगौ वा मारकौ भवतः। विशेषत्वमत्र काशी-संस्करणे षष्ठाष्ठमद्वादशगो राहुः केवलं कष्टकरः स्वदशायां शुभदृष्टश्च न कष्टकृदिति। पापदृष्टश्चेत्तर्ह्येव मारक इति ज्ञेयम्।

त्रिविधायुर्योगज्ञानप्रकारः।[१]—

लग्नेशाष्टमेशावत्रायुर्भेददर्शने मुख्याविति। यदि चरराशिस्थौ, तथा चैनयोर्मध्ये स्थिरस्य एको द्विस्वभावस्थश्चान्यस्तर्हि दीर्घायुयोगः।

यदि द्वावेव द्विस्वभावगौ तथा चैनयोर्मध्ये चरस्थश्चैक स्थिरस्थश्चान्यस्तर्हि मध्यमायुर्योगः।

---

१. बृ० पा० २४ मध्यायः (मुम्बई-सं०)

यदि द्वावेव स्थिरस्थौ तथा चेकश्चरस्थोऽन्यश्च द्विस्वभावस्थस्तर्हि दीर्घायुर्योगः।

जैमिनीये सूत्रे तु सङ्क्षेपेण महत्त्वपूर्णमुक्तम्।[1]

**'आयुः पितृदिनेशाभ्याम्' 'प्रथमयोरुत्तरयोर्वा दीर्घम्', 'प्रथमद्वितीययोरन्त्ययोर्वा मध्यमम्, मध्ययोराद्यन्तयोर्वा हीनम्'**

अनेनैव प्रकारेण लग्नचन्द्राभ्यामपि विज्ञातव्यम्। तथा च होरालग्नजन्मलग्नाभ्यामपि।

यदि प्रकारत्रयेणैकमायुर्भवेत्तर्हि युक्तमेव। अथ च प्रकारद्वयेन समं स्यादेकेन च भिन्नन्तर्हि प्रकारद्वयस्य मतं ग्राह्यम्। प्रकारत्रये विभिन्नत्वे सति जन्मलग्नहोरालग्नाभ्यामागतमायुर्ग्राह्यम्।

(अत्र द्वितीयप्रकारे जैमिनीये सूत्रे मन्दचन्द्राभ्यामिति पाठस्तत्र च टीकासु महान् भेदः। कैश्चिट्टीकाकारैर्मन्दचन्द्राभ्यामित्य लग्नचन्द्राभ्यामित्यर्थः कृतः कैश्चित्तु शनिचन्द्राभ्यामित्यर्थो विहितः। मुम्बई-संस्करणे शनिचन्द्राभ्यामित्यपि पाठोऽस्ति। परं जैमिनीये सूत्रे चाचार्य नीलकण्ठप्रभृतिविद्वद्भिर्लग्नचन्द्राभ्यामित्येवार्थः स्वीकृतः। तैश्च शनिचन्द्राभ्यामित्यस्य निर्देशोऽपि न विहितः। मन्दशब्देन शनिर्गृह्यते परं पाराशरीये शास्त्रे क्वचित्तथा जैमनीये सूत्रे तु सर्वत्र कटपयेति प्रकारचतुष्टयेन वर्णसङ्ख्ययैव शब्दार्थो भवति तेन च मन्दशब्देनैकसङ्ख्यया लग्नमेवोचितं प्रतिभाति। आङ्ग्लभाषाटीकाकारेण सुप्रसिद्धेन ज्योतिर्विदा सूर्यनारायणरायमहोदयेनाप्येष एव पन्थाऽनुसृतः।[2] अत्रास्मिन् ग्रन्थे व्याख्यानमिदमप्युपलभ्यते यच्छनिचन्द्राभ्यामायुर्ज्ञानं कुर्यात्तथा च लग्ने सप्तमे च चन्द्रः स्यात्तदा लग्नचन्द्राभ्यामायुर्विचारः कुर्यात्। जैमिनिसूत्रे तूभयत्र मन्दचन्द्राभ्या

१. जैमिनीयसूत्राणि २।१।१-४, गंगाविष्णु श्रीकृष्णदास, लक्ष्मी वेंकटेश्वर प्रेस, बम्बई।

२. (क) जैमिनीयसूत्राणि २।१।५-४, नीलकण्ठटीका, खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर प्रेस मुम्बई, वैक्रमाब्दा १६६०।

(ख) बी० सूर्यनारायण राव:, जैमिनिसूत्राज, पृ० १२७, रमण पब्लिकेशन्ज, बंगलोर।

मेव पाठः। सत्यपि शनिचन्द्राभ्यामिति पाठे लग्नचन्द्राभ्यामित्यर्थस्यैवौचित्यं प्रतिभाति यतोऽत्र मुम्बई-संस्करणे तु स्पष्टरूपेणायं पाठ उपलभ्यते।

**लग्नाष्टमेशयोरेकः त्वपरं लग्नचन्द्रयोः।**
**विलग्नहोरयोरन्यदिति पक्षत्रयं द्विजेति।**[1]

अत्र सुस्पष्टमेव। काशी-संस्करणे च मन्दचन्द्राभ्यामित्येव पाठः। परं टीकाकारेणार्थे शनिचन्द्राभ्यामिति लिखित तच्च नोचितं मुम्बई-संस्करणे स्पष्टतया लग्नचन्द्राभ्यामिति पाठस्य दर्शनात्तथाचार्यनीलकण्ठप्रभृतिकविद्वद्गणप्रतिकूलत्वादिति भावः)[2]

वर्षसङ्ख्याभेदेनापि नवभेदप्रकारोऽत्र—

द्वात्रिंशत्, चतुष्षष्टिः, षण्णवति, षट्त्रिंशत्, द्विसप्ततिः, अष्टोत्तरशतं, चत्वारिंशदशीतिर्विंशोत्तरशतमिति भेदेन एषां ज्ञानाय विचारो निम्नप्रकारेण विहितः।

यद्येकेन प्रकारेणाल्पायुस्तदा द्वात्रिंशद्वर्षसङ्ख्याकम्। मध्यमायुश्चेत्तर्हि चतुः षष्टि दीर्घायुश्चेत् षण्णवति। इत्थं प्रकारेणद्वयेन सति षट्त्रिंशत्द्विसप्ततित्यष्टोत्तरशतं ज्ञेयम्। प्रकारत्रयेण सति चत्वरिंशदशीतिर्विंशोत्तरशतमिति ज्ञेयम्।

स्पष्टायुर्योगं निरूपयति—

प्रकारेणैकेनायुषः सम्पन्ने योगकारकयोः (लग्नेशाष्टमेशयोर्होरालग्नयोर्लग्नचन्द्रयोर्वेति भावः) ग्रहयोरंशादिकं द्विभिर्विभजेत् लब्धांशादिकं प्राप्तखण्डेन (अल्पायुषि द्वात्रिंशता मध्यमायुषि षड्त्रिंशता दीर्घायुषि चत्वारिंशत्सङ्ख्ययेति सर्वत्र प्रकारत्रये ज्ञेयम्) गुणीकृत्य पुनर्द्वादशसङ्ख्यया गुणीकुर्यात्ततश्च त्रिंशत्सङ्ख्याहृते मासा भवन्ति।

द्वादशसङ्ख्याहृते वर्षादिकं बोध्यम्। तच्चानुपातेनाल्पायुर्योगे द्वात्रिंशत्स-

---

1. बृ० पा० पू० भा० २४।३३ (मुम्बई-सं०)
2. बृ० पा० ४३।३५ (काशी-सं०)

ङ्ख्यायां मध्यायुपि षड्त्रिंशत्सङ्ख्यायां दीर्घायुपि चत्वारिंशत्सङ्ख्यायां न्यूनीकुर्यात्ततश्च स्पष्टायुर्योगः ।

एवमेव प्रकारद्वये लब्धायुपि पूर्ववत् योगकारकयोर्ग्रहयोरंशादिकं चतुर्भिर्हरेत् लब्धांशादिकं पूर्ववदायुःखण्डेन. गुणीकृत्य पुनश्च द्वादशभिर्गुणीकुर्यात् शेषा क्रिया पूर्ववत् । एवं प्रकारत्रयेण लब्धायुपि ग्रहाणामंशादिकं षड्सङ्ख्याया हरेत् पुनश्च द्वादशभिर्गुणीकुर्याच्छेषा क्रियात्रापि पूर्ववदेवबोध्या ।

## [ऋ] कक्ष्याह्रासवृद्धिविचारः ।

पूर्वोक्तप्रकारेण लब्धायुपि कक्ष्याह्रासवृद्धिरपि भवति ।

पूर्वं ह्रासनिरूपणम् ।

अत्र यदि शनिरायुर्योगकारकश्चेत्तर्हि कक्ष्याह्रासो भवति ।

(कक्ष्याह्रासेनात्रोत्तमायुश्चेत्तर्हि दीर्घायुः दीर्घायुश्चेत्तर्हि मध्यमायुर्मध्यमायुश्चेत्तर्हि अल्पायुरल्पायुश्चेत्तर्ह्यायुपोऽभाव इत्यर्थः) ।

अर्थाद्यदि शनिर्लग्नेशेन होरेशेन वान्वितः स्यादथवा नीचराशिगः पापयुतो दृष्टो वा स्यादिति भावः ।

अन्यथा स्वोच्चस्थः शुभग्रहयुतो दृष्टो वा शनिः कक्ष्यावृद्धिकरः (अर्थादत्राल्पायुर्योगे सति मध्यमायुर्मध्यमायुपि दीर्घायु दीर्घायुपि चोत्तमायुरिति भावः) जैमिनिसूत्रे[1] त्वत्र विकल्पोऽपि दृश्यते । यथा—

**'शनौ योगहेतौ कक्ष्याह्रासः' 'विपरीतमित्यन्ये' ।**

द्वितीयसूत्रे विपरीतेति शब्देन शनौ योगकारके सति न कक्ष्याह्रासः कैश्चित्स्वीक्रियते ।

एवमेव लग्ने सप्तमे वा गुरौ स्वोच्चस्थे शुभग्रहयुते दृष्टे वा सति चायुपः कक्ष्यावृद्धिर्ज्ञेया ।

अधुना द्वारबाह्यराशिभ्यां मृत्युविचारः निरूप्यते ।

---

१. 'जैमिनीयसूत्राणि २।१।१०, ११, खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर प्रेस, मुम्बई ।

द्वारशब्देन स राशिरत्र गृह्यते यस्माच्चरस्थिरब्रह्मग्रहनवांशादिभेदेन दशारम्भो भवति।

कुत्रचित्तल्लग्नात्कुत्रचित्सप्तमात्कुत्रचिद्ब्रह्मग्रहान्नवांशाद्वा दशारम्भो भवति। अतः स लग्न एव द्वारलग्नो यस्माद्दशारम्भो जायते इति भावः। अस्यैव द्वितीयं नाम पाकराशिरिति। जन्मलग्नाद्यावद्दूरं बाह्यराशिरुच्यते। जैमिनि-सूत्रेऽपि।

**'दशाश्रयो द्वारम्' 'ततस्तावतिथं बाह्यम्'[1]**

यदिमौ द्वौ राशी राशीशौ वा पापौ पापाक्रान्तौ पापदृष्टौ वा भवेताम्, तदा तयोर्नवांशराशीशयोर्वा नवांशदशायां मृत्युयोगः। जैमिनिसूत्रेऽपि प्रोक्तम्।

**'मलिने द्वार-बाह्ये नवांशे निधनं'**
**'द्वारद्वारेशयोश्च मालिन्ये' 'शुभदृग्योगान्न'[2]**

*अन्यदपि जन्मलग्नादष्टमेशे चोच्चस्थे न नवांशदशायां मृत्युरिति। अपि तु नवाब्दायुर्वृद्धियोगः। पाराशरीयेऽस्मिन् ग्रन्थे लग्नेशेऽपि तुङ्गस्थेऽयमेव योगः।*

अस्मिन्वृद्धियोगे सति पदाश्रितराशीशस्य (लग्नारूढराशीशस्येति भावः) दशान्तरेऽथ वास्यैव नवांशदशायां मृत्युयोगः। जैमिनीये सूत्रेऽपीत्थमेव।[3]

पदेशस्यैव लग्नाष्टमत्रिकोणदशायां वा मृत्युर्योगः। चरदशावत्पदेशस्य त्रिकोणदशायां नवांशदशायां लग्नाष्टमेशयोः राशिकोणपयोर्वा दशायां मृत्युर्योगः।

प्रकारान्तरेणायुर्दायविवेचनम्—

लग्नेशाष्टमेशयोर्मध्ये यो वलवान् स च यदि केन्द्रस्थस्तदा दीर्घायुर्योगः। स पणफरस्थश्चेत्तर्हि मध्यमायुर्योगः। आपोक्लिमराशिस्थश्चेत्तर्हि चाल्पायु-

---

१. जैमिनीयसूत्राणि (२।३।२-३) *खेमराज श्रीकृष्णदास श्रीवेंकटेश्वर प्रेस, मुम्बई।*
२. तत्रैव २।१।१५।
३. तत्रैव, २।१।१८.

योगः। जैमिनिसूत्रमप्यत्र 'पितृलाभरोगेशे प्राणिनिकण्टकादिस्थे स्वतश्चैवं त्रिधा।'[1]

अत्रापवादमाह—

जन्मलग्नस्य सप्तमस्थानान्नवमभावे (जन्मलग्नात्तृतीये स्थाने इत्यर्थः)।

चात्मकारको ग्रहश्चेत्तर्हि वैपरीत्यम्। अर्थाद्दीर्घायुश्चेदल्पायुरल्पायुश्चेद्दीर्घायुर्मध्यमायुश्चेन्मध्यमायुरेवेति।

नीलकण्ठाचार्येण जैमिनिसूत्रटीकायामस्य प्रकारस्योल्लेखः केषाञ्चिदाचार्याणां मतेन निर्दिष्टः। स्वकीयमतन्त्वस्येदम्। दीर्घञ्चेन्मध्यं चेदल्पमल्पञ्चेन्न किञ्चिदित्यर्थः।[2]

आचार्यनीलकण्ठस्य मतन्तु पाराशरशास्त्रानुसारमेव—

**अत्र विशेषः**

लग्नेशाष्टमेशौ यदि पञ्चमैकादशस्थौ दीर्घायुः प्रदौ। तृतीये चैकादशे स्थितौ मध्यायुर्दौ। एवमेकादशे द्वितीये च स्थितौ चाल्पायुःप्रदौ। द्वावेव चैकादशे तदायुषोऽभावः।

प्रकारान्तरमाह—

पूर्वनिर्दिष्टप्रकारेणाल्पायुर्योगश्चेत्तथा लग्नेशाष्टमेशौ लग्नगौ स्यातान्तदा विंशतिवर्षायुर्योगः। यदि द्वौ पञ्चमस्थौ भवेतान्तर्हि चतुर्विंशतिवर्षायुर्योगः। यदि द्वौ नवमस्थौ स्यातान्तर्हि षट्त्रिंशदाब्दायुर्योगः।

एवमेव मध्यमायुर्योगश्चेत्तदा लग्नस्थयोर्द्वयोः सतोः चतुश्चत्वारिंशदायुः। *पञ्चमस्थौ षष्ट्यब्दायुःप्रदौ। नवमस्थौ तु द्विसप्ततिवर्षायुःकारकौ।*

एवमेवदीर्घायुर्योगेऽपि लग्नस्थौ चतुरशीतिवर्षायुःकारकौ पञ्चमस्थौ षण्णवतिवर्षप्रदौ नवमस्थौ अष्टोत्तरशतायुःप्रदौ।

अष्टमेशमधिकृत्य विशेषो विचारः—

अष्टमेश उच्चस्थः पर्यायार्द्धायुर्वृद्धिकरः प्रोक्तः।

---

१. जैमिनिसूत्राणि २।१।१९ खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर प्रेस, मुम्बई।

२. तत्रैव, २।१।२०।

नीचस्थश्चायुर्क्षयकरः।

एवमेव नीचाष्टमेशयुता ग्रहा अपि पर्यायार्द्धायुःक्षयकराः प्रोक्ताः।

उच्चस्था अष्टमेशयुक्ता ग्रहा वृद्धिकरा इति स्वतः स्पष्टम्।

सूर्यमङ्गलशनिराहवश्चोत्तरोत्तरं मरणे बलवत्तराः।

केतुश्चापि शनिवन्मृत्युनिमित्ताकरः।

अष्टमेशेन संयुक्ताः शनिराहुमङ्गलसूर्याः शुभग्रहदृष्टिशून्या मृत्युकराः।

एषु य एको बली तस्य दशायां मृत्युयोगः।

द्वादशस्थे दशमस्थे वा राहौ पापयुते दृष्टे वा सति तद्दशायां मरणं ध्रुवम्।

केतौ च द्वादशस्थे दशमस्थे वा शुभग्रहदृष्टे सति पूर्वोक्तयोगो न भवति।

पुनरपि कक्ष्याह्रासविषये विशेषमाह।

लग्नपञ्चमनवमेषु पापयोगे सति कक्ष्याह्रासः।

जन्मलग्नवत्कारकांशलग्नादपि विचार्यम्। जन्मलग्नात् कारकाच्च लग्ने सप्तमे द्वितीये द्वादशे षष्ठेऽष्टमे च शुभग्रहयोगे सति कक्ष्यावृद्धिः।

जन्मलग्नकारकलग्नाच्च त्रिकोणे नीचग्रयोगे कक्ष्याह्रासः। उच्चग्रहयोगे तु कक्ष्यावृद्धिरिति।

अयमेव विचारः बृहस्पतिस्थितराशितोऽपि कार्यः।

जैमिनीये सूत्रेऽपि—

'तस्मिन्पापे नीचेऽतुङ्गेऽशुभसंयुक्ते च' 'अन्यदन्यथा'

'गुरौ च' सूत्रत्रयेष्वस्यैव व्याख्यानम्।[1]

प्रथम सूत्रस्यायं भावः। यद्यात्मकारकग्रहः पापो नीचराशिस्थश्च तदा कक्ष्यावृद्धिः। अथ चायं नोच्चस्थोऽपि तु पापयुतस्तदा कक्ष्याह्रासः।

द्वितीयसूत्रस्य 'अन्यदन्यथा' इत्यस्यायमर्थः। यदात्मकारको लग्नेशः सप्तमेशो वा शुभग्रहमध्यस्थः स्यात्तर्थतेषां त्रिकोणे शुभग्रहाः स्युरथवात्मका-

---

१. नीलकण्ठः, जैमिनिसूत्राणि, २।१।२५-२७, खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम प्रेस, मुम्बई।

रकः शुभो न नीचस्थोऽथ वा शुभः स्वोच्चस्थः सन् शुभग्रहयुतश्चेत्तदा कक्ष्यावृद्धिः ।

कक्ष्याह्रासलक्षणमप्युक्तमत्र ।[1]

**दीर्घस्य मध्यमा याता भवेदायुषि मध्यमे ।**
**अल्पादल्पं च विज्ञेयं कक्ष्याह्रासस्य लक्षणम् ॥**

लग्नपञ्चमनवमेषु पापयोगे सति कक्ष्याह्रासः ।

कारकांशलग्नेशस्य तत्सप्तमेशस्य वा पापमध्यवर्तित्वे कक्ष्याह्रासः । जन्मलग्नात्कारकलग्नाच्च लग्ने सप्तमे द्वितीये द्वादशे षष्ठेऽष्टमे च शुभग्रहयोगे सति कक्ष्यावृद्धिः । त्रिकोणेप्येनयोः शुभग्रहयोगे कक्ष्यावृद्धिः । अत्र पूर्वोक्तस्थानेषु नीचपापग्रहयोगे सति कक्ष्याह्रास इति स्पष्टम् ।

अथ च बृहस्पतिरपि द्वितीयद्वादशषष्ठस्थोऽथ वा त्रिकोणे पापयुतेऽथ वा नीचस्थः पापाक्रान्तश्चेत्तर्हि कक्ष्याह्रासः ।

लग्नादात्मकारकाच्च (बृहस्पतेरपि) द्विद्वादिशषष्ठाष्टमत्रिकोणेषु शुभग्रहयोगप्रकरणे पूर्णचन्द्रशुक्रयोर्योगे सति न कक्ष्यावृद्धिः ।

प्राप्तदशायां केवलमेकवर्षयोगः कार्यः ।

शनिना योगे सति कक्ष्याह्रास एकराशिह्रास इत्यर्थः जैमिनीयेऽपि—

**'पूर्णेन्दुशुक्रयोरेकराशिवृद्धिः'[2] 'शनौ विपरीतम्'**

इति सूत्रद्वयेन स्पष्टम् ।

अपवादान्तरमाह—

दशाप्रकरणे स्थिरदशास्वरूपे चरस्थिरद्विस्वभावराश्यनुसारं सप्ताष्टनवसङ्ख्यावर्षाण्युक्तानि । तदनुसारं दशाराशित आरम्य राशित्रयविभागपूर्वकं खण्डचतुष्टयम् । अत्र खण्डानुसारं मृत्युयोगमधिकृत्य मरणं ज्ञेयम् । अत्र जैमिनीयसूत्रे टीकाकारैः खण्डत्रयं स्वीकृतमस्ति । तदनुसारमेवाल्पायुश्चेत्प्रथमखण्डे

---

१. बृ० पा० पू० भा० २५।७५ (मुम्बई-सं०)
२. जैमिनीयसूत्राणि २।१।२८, २६, खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर प्रेस, मुम्बई ।

मध्यमायुश्चेद्द्वितीयखण्डे दीर्घायुश्चेत्तर्हि तृतीयखण्डे मरणम्। मरणखण्डात्पूर्वमारकराशेर्दशाप्रवृत्तौ च क्लेशाधिक्यं न मरणमिति विशेषः। अत्र मृत्युकारके खण्डे पापग्रहमध्यस्थे राशौ लग्नात्कारकलग्नाच्च पापाक्रान्ते त्रिकोणराशौ द्वादशेऽष्टमराशौ वा मृत्युयोगः। द्वादशाष्टमेशयोः क्षीणचन्द्रशुक्रदृष्टयोः सतोः तयोर्दशायामपि मरणम्।

दशाप्रदराशितोऽष्टमेशो यं राशिं पश्यति तस्य तथा जन्मलग्नादष्टमेशषष्ठेशदृष्टराशेर्दशाया वा मरणमिति। पापग्रहद्वयमध्यवर्तिराशिदशायामथ वा दशाप्रदराशितोऽष्टमे द्वादशे पञ्चमे नवमे च पापग्रहयोगे सति तद्दशायामेव मरणम्। द्वादशाष्टमेशौ क्षीणचन्द्रशुक्रदृष्टौ नान्यग्रहदृष्टियुतौ चेत्तर्हि तयोर्दशायां मरणमिति भावः।

अत्र जैमिनीयसूत्राण्यपि—

'पापमध्ये पापकोणे रिपुरोगयोः पापे वा'

'तदीशयोः केवलक्षीणेन्दुशुक्रदृष्टौ वा'[1]

ग्रहाणां शूलरुद्रमहेश्वरब्रह्मेति चतुष्टयभेदमधिकृत्यायुर्दाये मृत्युविचारः।

**पूर्वं शूलस्यलक्षणम्—**

लग्नसप्तमयोर्मध्ये यो ग्रहो बली सः शूलग्रह इत्युच्यते।

द्वितीयाष्टमेशयोर्मध्ये यो बली सः रुद्र इत्युच्यते। अत्र भेदद्वयम्। एतयोर्मध्येऽपि यः शुभदृष्टः स बलवान् रुद्र इति कथ्यते। द्वितीयो यो बलवान्नास्ति। अपि तु पापदृष्टश्च स द्वितीय गौणरुद्र इति निगदितः। अत्र जैमिनीये सूत्रेऽपि[2]।

'पितृलाभभावेशप्राणी रुद्रः' 'अप्राण्यपि पापदृष्टम्'

सूत्रद्वयमुपलभ्यते। अत्र शूलस्यापि द्वादशराशीनां दशाराशित आरभ्य भेदत्रयमस्ति प्रथमद्वितीयतृतीयसञ्ज्ञया।

---

१. जैमिनीयसूत्राणि २।१।३२, ३३ खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर प्रेस मुम्बई।

२. तत्रैव, २।१।३५, ३६।

**महेश्वरलक्षणम्—**

कारकलग्नादष्टमेशो महेश्वरग्रहः यद्यात्मकारकेशः स्वोच्चस्थस्तदात्मकारकादष्टमेशद्वादशेशयोर्मध्ये यो वलवान् सो महेश्वरः। यदि द्वावेव वलिनौ तर्हि द्वावेवाष्टमद्वादशेशाविति महेश्वरौ।

यद्यात्मकारको राहुणा केतुना वा युतश्चेदथवात्मकारकादष्टमस्थो राहुर्केतुर्वास्यात्तदाष्टमेशद्वादशेयोर्मध्ये वलवानेव महेश्वरः।

कारकलग्नादष्टमस्थो ग्रहोऽपि महेश्वरः।

अथ च कारकादष्टमस्थसूर्यादिग्रहेभ्यः षष्ठेशोऽपि महेश्वरः। अथवा कारकात्षष्ठस्थानगो ग्रहो महेश्वर इति।

**ब्रह्मग्रहलक्षणमाह—**

लग्नसप्तमयोर्मध्यो यो वलो तस्मादष्टमेशषष्ठेशद्वादशेशेषु यो वली स ग्रहो लग्ने वलवति तस्य पृष्ठराशिषु (सप्तमादारम्य द्वादशान्तम्) सप्तमे वलवति च तस्य पृष्ठराशिषु (लग्नादारम्य षष्ठस्थानपर्यन्तम्) विषमराशौ स्थितो ग्रहो ब्रह्मेति सञ्ज्ञकः।

अत्र विशेषः। यदि शनिराहुकेतुषु कश्चिदेको ब्रह्मलक्षणं प्राप्नोति तर्हि स न ब्रह्मेति परञ्च तेभ्यः षष्ठो ग्रहो ब्रह्मेति कथ्यते। अत्र गणना सूर्यादिग्रहसङ्ख्यया परिज्ञेया।

वहुषु ब्रह्मसञ्ज्ञां गतेषु सत्सु आत्मकारक (सर्वाधिकांशीति) एव ग्रहो ब्रह्मेति।

पूर्वमुक्तं यत्शनिराहुकेतूनां ब्रह्मत्वाभावः परञ्च यद्यात्मकारकत्वेन राहोर्यदि ब्रह्मत्वं प्राप्तं भवेत् तर्हि किं कार्यमस्य प्रश्नस्येदमुत्तरं सर्वाधिकांशयुक्तस्यात्मकारकस्य स्थाने न्यूनांशयुक्तस्य ग्रहस्य ब्रह्मत्वमित्येकः प्रकारः न्यूनांशश्चेद्राहुः तदा सोऽपि ब्रह्मा भवितुमर्हतीति द्वितीयः प्रकारः। जैमिनीयसूत्रे विविधटीकासु प्रकारद्वयस्यास्य व्याख्यानमुपलभ्यते। आचार्यनीलकण्ठेन तु—

**'वहूनां योगे स्वजातीयः' 'राहुयोगे विपरीतम्'**[1]

१. जैमिनीयसूत्राणि २।१।४६,५०, खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर प्रेस, मुम्बई।

VIDY

इति सूत्रद्वयस्य व्याख्याने द्वितीयप्रकारस्यैवौचित्यं स्वीकृतम्। तेनेदं स्पष्टं भवति यद्यनेकग्रहेषु ब्रह्मलक्षणं प्राप्तेषु ग्रहेषु राहोरपि ब्रह्मेति सञ्ज्ञा प्राप्ता चेत्तर्हि सोऽपि ब्रह्मा भवति यदि सर्वेभ्यो न्यूनांश इति स्पष्टम्।

अत्र ग्रहाणां बलव्याख्यानेऽपि विशेषः। सोऽत्रप्रसङ्गान्निरूप्यते। अग्रहात्सग्रहो राशिर्बलवान्। सग्रहादपि बहुग्रहयुक्तो राशिर्बलवानिति। ग्रहसङ्ख्यायामपि राशिद्वयमध्ये सति यत्रोच्चग्रहस्तिष्ठेत्तद्राशेर्बलवत्त्वमिति। उच्चादिबले साम्येऽपि निसर्गबलं ग्राह्यम्। अर्थान्निसर्गबले चरराशितः स्थिरराशिः स्थिरतो द्विस्वभावराशिर्बलवानिति भावः।

अत्र जैमिनीये सूत्रेऽन्योऽपि विशेषः।

**'तदभावे स्वामिनः इत्थं भावः'**

अत्र राशेर्बलाभावे राशीशस्यैव बलविचारो विधेयः।

**'आग्रायतोऽत्र विशेषात्'[1]**

इति द्वितीय सूत्रस्यायं भावः यदेकराशौ बहुग्रहेषु सत्सु तेषां राशिद्वारबलसाम्ये सति त्वधिकांशको ग्रहो बलवानिति भावः।
शूलरुद्रमहेश्वरब्रह्मग्रहादिकमधिकृत्यायुर्दाये विचारः।

बलवद्रुद्रग्रहः शुभग्रहदृष्टश्चेत्तर्हि रुद्रशूलान्तमायुरिति। अयं भावोऽत्रशुभदृष्टे बलवद्रुद्रग्रहे चायुषोऽल्पायुर्योगे प्रथमराशिदशान्तमायुः।
मध्यमायुर्योगश्चेत्तर्हि पञ्चमराशिदशान्तमायुः।
दीर्घायुर्योगश्चेत्तदा नवमराशिदशान्तमायुरिति।
निर्बले रुद्रग्रहे तु शुभयुते सति पूर्ववत्ज्ञेयम्। न तु दृष्टे सतीति भावः।
अत्रापवादः। पापदृष्ठे बलवद्रुद्रे पापयुते च निर्बलरुद्रे तु पूर्वोक्तफलं न भवति। परञ्च सूर्यं विहायेदं ज्ञेयम्। अर्थात्सूर्यस्यात्र योगे न पापत्वमिति।
अत्र पाराशरेण कैमुतिकन्यायमनुसृत्य (किमुताव्ययशब्दात् ठकि कैमुतिकः शब्दः वाचस्पत्येऽस्यायमर्थः प्रदत्तो यद्बह्वायाससाध्यकर्मसमर्थस्याल्पायाससाध्यकर्मसामर्थ्यम्) रुद्रग्रहोपरि दृष्टित्रयप्रकारेण मृत्युविचारो विहितः।

---

१. जैमिनिसूत्राणि, २।३।१०, ११ खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर प्रेस, मुम्बई।

रुद्रग्रहे (निर्वले सवले वा) शनिभौमचन्द्रदृष्टे सति शुभग्रहयोगाभावः स्यादिति प्रथमः प्रकारः।

पापग्रहयोगयुक्ते सति द्वितीयः प्रकारः।

शुभग्रहदृष्टियुक्ते सति तृतीयः प्रकारः।

एष्वेकतमे योगे सति शूलान्यतमस्थत आयुर्योगः।

अर्थात्प्रथमपञ्चमनवमस्योऽग्रिमराशिशूले मरणमित्यर्थः।

अत्र प्रसङ्गात्पापग्रहाणामपि लक्षणं निरूपयति।[1]

सूर्यभौमशनिराहवः क्रूरास्तदैव भवन्ति यदि ते क्रूराराशिमापन्नाः स्युः शुभराशिगाश्चेत्तर्हि शुभा भवन्ति।

गुरुकेतुशुक्रबुधाश्च सौम्या (आयुर्दायप्रकरणे एव केतुः शुभोऽत्र प्रोक्तो ग्रन्थकारेण। जैमिनिमतमिदमेव। तेन केतोः शुभत्व स्वीकृतम्)

अपि कूरराशिगाः सन्तोऽसौम्या भवन्ति।

## 'चरदशाया (मत्र) शुभः केतुः'[2]

बुध शुक्रकेतुगुरवोऽप्युत्तरोत्तरं शुभाः।

बुधे विशेषः। शुभराशिस्थ उच्चस्थो वा बुधः सौम्योऽन्यथा त्वसौम्य इति।

रुद्रशूलविचारे शुभपापयोगमधिकृत्यापि विशेषविचारं वितनोति।

यद्यत्र शुभग्रहयोगः स्यात्तर्हि पापयोगस्यातिदुर्वलप्वं भवति।

शुभग्रहदृष्टियोगश्चेत्तर्हि पापदृष्टियोग दूरीकर्तुं न समर्थः।

शुभग्रहयोगे शुभग्रहदृष्टे च सति पापयोगो विनश्यति।

अत्रायुर्दाये प्रकरणेऽस्य विचारोऽवश्यं विधेयः।

पापमात्रस्य शूलत्वे प्रथमराशावेव मृत्युयोगः।

बलवन्निर्वलरुद्रद्वयस्यैकत्र मित्रमध्यमशूलराशौ शुभे स्थिते सत्यन्तिमे शूले मृत्युः।

द्वयोः पापत्वे प्रथमे शूले एव मृत्युः।

---

१. बृ० पा० पू० भा० २६।५३-६२ (मुम्बई-सं०)

२. जैमिनीयसूत्राणि २।३।२६, खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम् प्रेस, मुम्बई।

क्रूरा ग्रहा यदि शुभराशिगास्तदेतरेषां शूलर्क्षमृत्युयोगः ।

शुभग्रहा यदि क्रूरराशिगास्तदा जातकस्य शूलर्क्षे मृत्युयोगो निश्चितः ।

अत्र शूलत्रयानुसारमायुर्योगस्य विचारो विहितः तथा च प्रायः रुद्राश्रिते राशौ मरणम् । परञ्च यदि शुभपापयोगादिप्रङ्गेन पूर्वोक्तरराशौ रुद्राश्रितराशितः मृत्युः स्यात्तर्हि रुद्राश्रितराशौ प्रथमे द्वितीये वा शुलेऽपि कष्टयोगो भवति न मरणम् । मेषलग्ने सति विशेषेण रुद्राश्रितराशौ मरणम् । वैपरीत्ये कुष्टरोगादिकं भवति न मरणमिति ज्ञेयम् ।

द्वन्द्वराशौ[1] (अत्र द्वन्द्वेनाष्टमभावो गृहीतो जैमिनिसूत्रे टीकाकारेणाच्युतानन्द-झामहोदयेन । अस्य सूत्रस्यान्यग्रन्थेषु पाठाभावः कटपयादिवर्णार्थन्यायेन स्वयमेवार्थः प्रतिभाति सूत्रञ्चेदम् 'द्वन्द्वे रुद्रे तदन्तं प्रायः' इदं सूत्रं कथन्नाचार्यनलकण्ठप्रभृति-भिर्गृहीतमिदं विचार्यं भवति । अत्र पाराशरेऽस्य पाठस्य विद्यमानत्वात् ।[2] द्वावेव रुद्रौ स्थितौ स्यातान्तर्ह्यन्तिमे शूले मृत्युरिति । अत्र जैमिनीयसूत्रेऽप्येवम् ।

'रुद्राश्रयेऽपि प्रायेण' 'क्षिपे पितरि विशेषेण ।'[3]

प्रथममध्यमोत्तशेषु वा तत्तदायुषाम् ।

अनेनायंभावोऽत्र स्पष्टः । यदि द्वावेव रुद्रौ (निर्वलबलिनौ) पापौ तर्हि प्रथमशूले मृत्युः ।

यद्येकः शुभोऽन्यः पापस्तर्हि द्वितीयशूले मृत्युः ।

यदि द्वावेव शुभौ तर्हि तृतीये (अन्तिमे) शूले मृत्युः ।

**महेश्वरग्रहमधिकृत्यायुर्विचारः—**

स्थिरदशायां ब्रह्मग्रहाश्रितराशिमारम्य महेश्वराश्रितराशिदशायामायु-र्भवति ।

तत्रापि महेश्वराश्रितराशिमहादशायामपि महेश्वराश्रितराशितोऽष्टमेश

---

१. अच्युतानन्द झा, जैमिनिसूत्रम् २।१।४४, चौखम्बा संस्कृत सीरिज आफिस बनारस ।

२. बृ० पा० पू० भा० २६।६१ (मुम्बई-सं०)

३. जैमिनिसूत्रम् २।१।४२, ४३, चौखम्बा संस्कृत सीरिज, बनारस ।

राशीशस्य त्रिकोणदशायां मृत्युयोगः अस्य प्रकरणस्य काशीसंस्करणे संक्षेपेण वर्णनम्। रुद्रशूलमहेश्वरादिचर्चाभावः[1]।

अत्रायुषां भेद-निरूपणे विशेष उपलभ्यते।

बालारिष्टयोगारिष्टाल्पमध्यदीर्घदिव्यामितभेदेन।

बालरिष्टेऽष्टौ योगारिष्टे विंशतिरल्पायुषि द्वात्रिंशद्मध्यायुषि चतुःषष्टि-दीर्घायुषि विंशोत्तरशतं दिव्ये सहस्रकं वर्षाणामायुः क्रमशः प्रोक्तम्। युगान्तमुनि-तुल्यायुर्द्वयस्यापि विशेषोल्लेखः।[2]

ग्रहस्थितिवशाच्च पूर्णायुर्योगस्यापि विशदो विचारोऽत्र दृश्यते।[3]

कर्कलग्नस्थौ गुरुचन्द्रौ, बुधशुक्रौ च केन्द्रगौ रविशनी च तृतीयषष्टैकादशगौ भवेयुस्तदामितायुर्योगः।

सर्वे सौम्या ग्रहाः केन्द्रत्रिकोणगाः स्युः पापाश्च तृतीयषष्ठैकादशगास्तथा-ष्टमे शुभग्रहराशौ च दिव्यायुर्योगः।

कर्कलग्ने गुरुश्च गोपुरांशगः केन्द्रस्थः स्याच्छुक्रश्च पारावतांशस्थस्तदा युगान्तायुर्योगः।

देवलोकांशगे शनौ पारावतांशस्थे च भौमे सिंहासनांशलग्नस्थे च गुरौ मुनि-तुल्यायुर्योगः।

केन्द्रगाः शुभग्रहा लग्ने च बलवति गुरुदृष्टे वा पूर्णायुर्योगः। लग्नेशे केन्द्रगे गुरुशुक्रयुते दृष्टे वा पूर्णायुर्योगः। लग्नेशाष्टमेशौ पुरस्कृत्य यदि ग्रहत्रयमुच्चस्थ-मुष्टमभावश्च पापरहितस्तदा पूर्णायुः यदि ग्रहत्रयं स्वोच्चमित्रस्थमष्टमभावे लग्नेशे च बलवति पूर्णायुर्योगः।

केन्द्रे शुभास्तृतीयषष्ठैकादशेषु च पापा लग्नेशे बलवति पूर्णायुः। षष्ठे सप्तमेऽष्टमे च शुभा तृतीयैकादशयोः पापाः पूर्णायुः। षष्ठे द्वादशे पापा लग्नेशः केन्द्रगोऽष्टमेशश्च सूर्यमित्रं स्यात्तदा पूर्णायुर्योगो ज्ञेयः।

---

१. बृ० पा० ४३।५२-५४ (काशी-सं०)

२. तत्रैव ४३।५७-५८।

३. तत्रैव ४३।५६-७३।

द्विस्वभावे लग्नेशे च स्वोच्चस्थे केन्द्रगे त्रिकोणगे वा दीर्घायुः।

**अल्पायुर्योगाः**[1] ।

तृतीयेशो मङ्गलश्चाष्टमेशः शनिश्चास्तो पापयुतौ दृष्टौ वा स्यातान्तदाल्पायुर्योगः।

लग्नेशः पापाक्रान्तः षष्टेऽष्टमे द्वादशे वा भवेत्तदाऽल्पायुर्योगः।

शुभग्रहदृष्टिहीना पापग्रहा यदि केन्द्रगाः स्युः, लग्नेशे च निर्बले तदाल्पायुर्योगः।

शुभग्रहदृष्टिशून्याः पापाद्वितीये द्वादशे वा स्थिताःस्युस्तदाल्पायुर्योगः। लग्नाष्टमेशौ नीचास्तगौ स्यातान्तदाल्पायुर्योगः।

अत्र प्रसङ्गेन विभिन्नजातीनां परमायुरपि वर्णितम्।[2]

देवमहर्षीणां चानन्तायुर्ग्घ्रोलूकशुककाकसर्पाणाञ्च सहस्रवर्षकं राक्षसाणाञ्च सार्द्धशतं मनुष्याणां कुञ्जराणाञ्च विंशोत्तरशतमश्वानां द्वात्रिंशत् खरोष्ट्राणाञ्च पञ्चविंशत् वृषाणां महिषाणाञ्च चतुर्विंशन्मयूराणाञ्च विंशच्छागानाञ्च षोडश, हंसानां चतुर्दश, कोकिलकुक्करकपोतानाञ्च द्वादश, कुक्कुटानाञ्चाष्ट बुदबुदाद्यण्डजानाञ्च सप्ततिः क्रमशः वर्षाणां संख्या परमायुः प्रोक्तम्।

मुम्बई-संस्करणे चाप्युत्तरभागे चायुषो योगमधिकृत्य विचारो विहितः। अत्राध्यायत्रयमस्ति दशमैकादशद्वादशकम्।[3]

एकादशे चायुर्योगमधिकृत्य वर्णितम्। तथा हि। यदि शनिभौमौ वक्रौ चान्योन्यभागौ तदा मृत्युयोगः। क्षीणचन्द्रो लग्नेशोऽष्टमेशश्चैते त्रयो यदि चतुर्थषष्ठाष्टमद्वादशगा भवेयुस्तदा मृत्युयोगः। सर्वे ग्रहा अष्टमस्था मृत्युप्रदाः। अथ वा सर्वे ग्रहा मेषवृश्चिकमकरकुम्भराशिगाः शुभदृष्टिशून्याः पापदृष्टाश्च भवेयुस्तदा मृत्युयोगः।

**दीर्घायुर्योगाः** ।

---

१. बृ० पा० ४३।७४-७८ (काशी-स०)
२. तत्रैव ४३।२४-२६।
३. बृ० पा० उ० भा० १०, ११, १२ अध्यायः द्रष्टव्यः (मुम्बई-सं०)

शुभग्रहा केन्द्रकोणगाः पापाश्च पष्ठतृतीयगाः स्युरष्टमश्च ग्रहहीनो भवेत्तदाष्टोत्तरशतमायुर्ज्ञेयम् ।

लग्ने गुरौ चतुर्थे शुक्रे पञ्चमे बुधे पष्ठे च सूर्ये नवतिवर्षायुर्योगः । यदि शनिचन्द्रभौमाः शत्रुराशिमष्ठमभावञ्च विहायान्यत्रकुत्रापि स्थिता भवेयुस्तदा पण्णवतिवर्षायुर्योगः ।

चतुर्थस्थे गुरौ पञ्चमस्थे बुधे पष्ठस्थे शुक्रे पड्सप्ततिवर्षायुः । अस्मिन् योगे सप्तमस्थे गुरौ दशमस्थे वा क्रमेणाष्टाशीतिवर्षायुरेकाशीतिवर्षायुश्च ज्ञेयम् ।

सर्वेपु ग्रहेपु केन्द्रगेपु सत्सु शतवर्षायुः । सर्वेपु पणफरेपु नवतिवर्षायुः । आपोक्लिमगेपु चाशीतिवर्षायुः ।

## (लृ) पैण्ड्यनैसर्गिकादिकानामायुषां निरूपणम्

अत्रायुर्दाये विशेपविचारार्थं पिण्डायुर्निसर्गायूरश्म्यायु रिति भेदचतुष्टयमपि निर्दिष्टमेतच्च सर्वग्रहलग्नांशकादिकमधिकृत्य वर्तते ।

पूर्वं पिण्डायुप आनयनप्रकारमाह—

सूर्यस्य १९ चन्द्रस्य २५, भौमस्य १५, बुधस्य १२, गुरोः १५, शुक्रस्य २१, शनेः २०, एते ध्रुवाङ्का एपां ग्रहाणां क्रमेणसन्ति। यदीमे परमोच्चस्था भवेयुः । परमनीचस्थाश्चेत्तदार्धमुक्तध्रुवाङ्कानां ज्ञेयम् ।

त्रैराशिकक्रमेण प्रत्येकग्रहस्य पृथक् ध्रुवाङ्कानुसारमायुः स्पष्टो भवति ।

अर्थात्सूर्यादिग्रहाणां राश्यादिकात् तत्तद्ग्रहाणामुच्चराश्यादिकं न्यूनीकुर्यात् ।

शेपराश्यादिकन्तस्य पूर्वोक्तपिण्डध्रुवाङ्केन गुणीकुर्याल्लब्धाङ्कान् भगणादिक्रमेण सवर्णीकुर्यात्तदेव वर्षादिकं ग्रहस्यस्पष्टायुर्भवति ।

निसर्गायुपः आनयनप्रकारः ।

सूर्यस्य २०, चन्द्रस्य १, भौमस्यस्य २, बुधस्य ९, गुरोः १८, शुक्रस्य २०, शनेश्च ५० क्रमाद्ध्रुवांकाः सन्ति। अत्रापि सूर्यादिग्रहाणां परमोच्चे सति सकले परमनीचे सति चार्धं, शेपमायुर्दायानयनप्रकारश्च पिण्डायुर्वज्ज्ञेयम् ।

**अंशायुष आनयनप्रकारः—**

अत्रापि पिण्डायुर्वत्सूर्यादिग्रहाणां राश्यादिकमुच्चराश्यादिकान्न्यूनीकृत्य शेष तत्तद्ग्रहाणां नवांशस्यसङ्ख्यया गुणीकृत्य तत्सङ्ख्यां ५४०० इति सङ्ख्यया विभजेत्। लब्धानि वर्षाणि। एवमेव शेषं १२ सङ्ख्यया गुणीकुर्यात् ५४०० सङ्ख्यया च विभक्ते मासा भवन्ति। एवमेव ३० सङ्ख्यया च विभक्ते दिनानि। एवमेव घट्यादिकं बोद्ध्यम् ग्रहस्य स्पष्टायुर्भवति। अत्र विशेषः मकरादिषट्राशिषु लब्धवर्षादिकं त्रिगुणितायां ध्रुवाङ्क सङ्ख्यायां न्यूनी कुर्याच्छेषमायुःस्पष्टम्।

कर्कादिषु षट्सु चार्धीकृते ध्रुवाङ्के युञ्जीत ततश्चायुःस्पष्टमिति।

**अष्टकवर्गायुर्विचारः—**

अष्टकवर्गस्य त्रिकोणशुद्धञ्चैकाधिपत्यशुद्धञ्च राशिगुणाङ्केन गुणीकुर्यात् (७, १०, ८, ४, १०, ५, ७, ८, ६, ५, ११, १२ क्रमान्मेषादीनां राशीनां गुणाङ्काः सन्ति) अष्टकवर्गस्य विशेषविचारोऽष्टकनिरूपणे एव द्रष्टव्यः) लब्धसङ्ख्यां त्रिशत्संख्यया हरेल्लब्धं वर्षादिकं स्पष्टायुर्भवति। अयं भिन्नाष्टके विचारः।

एवमेव समुदायाष्टकवर्गेऽपि बोध्यम्। केवलं राशिगुणकसङ्ख्यया गुणोत्तरसङ्ख्यां त्रिशत्सङ्ख्यास्थाने सप्तविंशतिसङ्ख्यया हरेत्। लब्धं वर्षादिकं स्पष्टायुर्भवति।

**अत्र प्रसङ्गेन नवांशायुषो नक्षत्रायुषश्चानयनप्रकारो निरूप्यते।**

नवांशायुषि सूर्यादीनां क्रमात् ५, २१, ७, ६, १०, १६, ४ एते ध्रुवाङ्काः सन्ति शेषं पैण्ड्यदशावज्ज्ञेयमिति।

नक्षत्रायुषि चापीत्थमेव ६, १०, ७, १८, १६, १६, १७, २० एते ध्रुवाङ्काः क्रमात्सूर्यादीनां ग्रहाणां कथिताः सन्ति। शेषं पैण्ड्यदशावज्ज्ञेयम्। अर्थात्परमोच्चे ग्रहे सकलं नीचे चार्धमिति भावः।

निसर्गायुष एवापरं नाम ध्रुवायुरिति ज्ञेयम्।
अंशायुष एव द्वितीयं नाम स्वरांशायुरिति बोध्यम्।

**अत्र पैण्ड्यायुषो द्वात्रिंशद्भेदानाह—**

निसर्गायुरंशायू रश्म्यायुरष्टकायुरिति पैण्ड्यायुषः पूर्वं भेदचतुष्टयम्। पुनश्चास्य भेदचतुष्टयस्य प्रत्येकायुषो भेदचतुष्टयेन षोडशभेदास्तेषां भेदानामपि नक्षत्रांशायुभेदेन द्वात्रिंशद्भेदा भवन्ति। नक्षत्रांशायुषोरपरं नाम कालचक्रायुरिति कथ्यते।

रश्म्यायुर्दाये सूर्यस्य १६, चन्द्रस्य २०, भौमस्य १, बुधस्य ६, गुरोः ८, शुक्रस्य ६, शनेश्च २५, २६ वा ध्रुवाङ्का बोध्याः एते ध्रुवांका उच्चग्रहाणामेव बोध्याःनीचानामत्रार्धभागः कार्यः। अन्यत्रानुपातेन बोध्यम्। आनयनप्रकारश्च शेषं पिण्डायुर्वद्बोध्यम्।

**अथ च पुनरपि पिण्डायुषो भेदानाह—**

पूर्वं ये पिण्डायुषो द्वादश भेदा उक्तास्तत्र नीचत्वेनार्धांशहानिकृते अष्टत्रिंशद्भेदा भवन्ति। तत्रापि उच्चादिकसंस्कारेण संस्कृते सति द्विगुणिते षट्सप्ततिभेदा जायन्ते। द्वादश भावानामनुवर्तिग्रहाणां स्थितिवशाच्चतुरशीति भेदाः कथिताः पुनश्च स्वोच्चमूलत्रिकोणादिस्थानस्थितिनिमित्तेन १५१२ भेदा भवन्ति।

**भावायुर्दायज्ञानमप्याह—**

पूर्वोक्तायुर्दायप्रकारेष्वेकतममायुर्गृहीत्वा स्वेन स्वेन विवक्षितभावबलेन हत्वा बलयोगेन सर्वभावबलसमूहेन विभजेत् तेन यल्लब्धं वर्षादिकं तदेव भावायुःस्पष्टमिति भावः।

अथवा नवांशायुर्दायेन परमायुर्ष्यं हत्वा षड्वर्गेशानां बलेन विभजेत्। लब्धं वर्षादिकं भावायुर्दाय इति।

एवमत्र सप्त प्रकाराश्चायुष उक्ताः।

अत्रायुषोह्रासप्रकारमाह। ह्रासस्तु षड्विधः। अस्तङ्गतग्रहहरणम्। शत्रुक्षेत्रग्रहहरणम्। क्रूरोदयस्थहरणम्। सचन्द्रराहुहरणम्। व्ययस्थपापग्रहसर्वदायहरणम्।

ह्रासस्वरूपमाह। द्वादशस्थः पापश्चेत्सर्वायुषो हरणम्।

एकादशेत्वर्धायुषोहरणम् । दशमे तृतीयभागस्य । अष्टमे पञ्चमांशस्य । सप्तमे षष्ठांशस्यायुषो हरणमिति ज्ञेयम् । इति व्ययादिसप्तमान्त वामचारेणा-युर्हरणप्रकारः । एषु भावेषु शुभग्रहश्चेत्तदार्धायुष एव केवलं हरणं प्रोक्तम् ।

एवमेव द्वादश सधिस्थानां ग्रहाणां पापानां वांशादिकं स्वायवर्षेण गुणीकृत्य लब्धमंशादिकं सञ्चितो न्यूनीकृत्य शेषमायुष्यहरणस्पष्टमिति । सन्धिस्थबहुग्रहस-मागमे यो बलीग्रहः स एवायुष्यहरः । ग्रहद्वये तु पाप एव केवलमायुष्यविनाशकृत् । शुभग्रहद्वये तु पापवर्गस्थोऽथवा वामाचारेण व्ययादिसप्तभावस्थश्चायुष्यविनाश-करः । पापानां रविक्षीणचन्द्रमङ्गलसपापबुधशनीनां मध्ये सूर्यमङ्गलशनिष्वेवा-युष्यहरणं प्रोक्तम् ।

एषु भावेषु स्थितानां पापग्रहाणामायुष्यहरणत्रत्करणान्यपि प्रोक्तानि । अर्थात् द्वादशस्थः पापः कुटुम्बभरणकृत् । एकादशस्थो दुश्चित्तकरः । दशमस्थो लाभकरः । नवमस्थो मेधां प्रतिभाञ्च ददाति । अष्टमस्थः शान्तिप्रदः । सप्तम-स्थोऽल्पक्रोधप्रदः ।

अस्तङ्गतग्रहाः सर्वेऽर्धायुष्यहरा इति ।

**अत्र लग्नायुर्दायमपि वितनोति—**

लग्ने सबले चन्द्रे सति चन्द्रराश्यंशादिकं गृह्णीयात् । हीनबलचन्द्रयुतेऽथवा चन्द्ररहिते लग्ने सति लग्नराश्यंशादिकस्य ग्रहणम् । एषामंशादिकानां षष्ठि-सङ्ख्यया गुणनं कुर्यात् । शतद्वयेन च विभजेत् । लब्धं वर्षादिकं भवति ।

लग्नस्थः पापग्रहश्चेत्तदा लग्नस्य स्पष्टांशादिकं पापग्रहस्य नवांशसङ्ख्या-ङ्केन गुणीकृत्य अष्टोत्तरशत (१०८) सङ्ख्यया विभजेत् । लब्धं वर्षादिकं लग्नायुर्दायान् न्यूनीकुर्यात् शेषः स्पष्टायुर्दायो भवति ।

अत्रापवाद । लग्नस्थः पापग्रह उच्चो मूलत्रिकोणीयो वा भवेत्तदा पूर्वोक्त-क्रमेण लब्धवर्षादिकस्यार्द्धं लग्नायुर्दायान् न्यूनीकुर्यात् ।

एवञ्च यद्य पापग्रहो मित्रस्याधिमित्रस्य वा राशिस्थश्चेत्तदा पूर्वोक्त-प्रक्रियया लब्धवर्षादिकस्य चतुर्थांशं लग्नायुर्दायाद् हीनं कुर्यादिति भावः ।

अन्यविशेषमाह—

यदि पापग्रहाः शुभग्रहयुता लग्नस्था भवेयुस्तदा पापग्रहस्यैव विधिर्ग्राह्यो न तु शुभस्य।

अथ च लग्ने पापग्रहबाहुल्यञ्चेत्तदा यः सर्वेषु ग्रहेषु बली भवेत्तस्य ग्रहस्य पूर्वोक्तप्रक्रिया ग्राह्या।

अष्टमभावस्थः पापश्चेत्तदा लग्नेशेतरस्याष्टमांशमायुषो हरणं करोति। तत्र यदि बहवः पापाः स्युस्तदा तेषु बलवान् आयुष्यहरणं विधत्ते।

अथ चेदत्र यदि पापाः शुभाश्च उभे स्थिता भवेयुस्तदा पापशुभग्रहाणामायुष्यान्तरं कुर्यात्। शेषमायुर्विजानीयात्।

राहुचन्द्रयोगमधिकृत्याह—

लग्नस्थौ राहुचन्द्रौ यदि स्यातान्तदा लग्नवदायुर्दायस्पष्टं विधाय राहुचन्द्रयोः दृष्ट्या गुणीकृत्य षष्टिसङ्ख्यया विभजेत्। तत्र यदि मकरादिराशिषट्कं स्यात्तदा लब्धमायुर्दाये युञ्जीत। यदि कर्कादिषट्कं भवेत्तदा हीनं कुर्यात्।

द्रेष्काणमधिकृत्य वृद्धिक्षयौ निरूपयति।

भावस्य तद्द्रेष्काणस्य च राशितुल्यं भवेत्तदा भावस्थानफलस्य वृद्धिः। राशिभिन्नत्वे भावफलस्य क्षय इति भावः।

अस्तङ्गतानां ग्रहाणामायुर्दायेऽर्धभागो ग्राह्यः परञ्च शनिशुक्रौ अस्तङ्गतौ भवेतान्तदा चतुर्थांश एव हीनः कार्यः।

शत्रुराशिस्था ग्रहाश्चेत्तत्र भौमं विहायान्यग्रहाणामायुर्दायात् तृतीयांशं न्यूनं कुर्यात्।

मित्रवर्गस्था ग्रहाश्चेत्तदा षष्ठांशो हीनः कार्यः।

अष्टकवर्गे विशेषः—

अष्टकवर्गीयायुर्दाये हरणं न भवति। अपितु वक्ष्यमाणप्रक्रियया वृद्धिर्जायते।

उच्चस्थो ग्रहश्चेत्तदा लब्धवर्षादिकं त्रिगुणीकुर्यात्। स्वराशिश्चेत्तदा

द्विगुणितं ग्राह्यम्। अधिमित्रस्थश्चेत्तदा सार्धं कुर्यात्। मित्रस्थश्चेत्तदा तृतीयांशयुतं ग्राह्यम्। अत्रापवादः।

यदि शत्रुस्थोऽतिशत्रुस्थो वा ग्रहः स्यात्तदायुर्दाये तृतीयांशो हीनः कार्य इत्यष्टकवर्गे हानिरपि निगदिता।

आयुर्दायदशामन्तर्दशानयनप्रकारमाह—

अत्र पूर्वोक्तायुर्दाय एव दशा बोध्या तत्रान्तर्दशानयनविधिरत्र निरूप्यते। अन्तर्दशाभावमाह—

आयुर्दायाधिपस्य दायार्धमायुर्दायाधिपेन सहस्थो ग्रहो गृह्णाति तथा दायपात्पञ्चमनवमस्थो ग्रहः सर्वदायस्य तृतीयांशं गृह्णाति। सप्तमस्थश्च ग्रहः सर्वदायस्य सप्तमांशं परिगृह्णाति। तथा चाष्टमचतुर्थस्थो ग्रहः चतुर्थांशं गृह्णाति।

अन्तर्दशानयनप्रकारः—

अत्रांशच्छेदसमच्छेदान् कृत्वांशादिकं गुणीकुर्यात्ततश्च पिण्डं कृत्वा विभजेत् लब्धान्तर्दशा भवति।

पूर्वोक्तहरणविधिः नीचरहिते अष्टकवर्गोत्थदायभागे अंशायुर्दायविषये च न निगदितः। अर्थादत्र न ग्राह्यः। पूर्वोक्तविषयत्रये ग्रहबाहुल्यं वर्त्तते तदा तत्र सम्पूर्णायुष्यग्रहणं प्रोक्तम्।

यदि च सर्वे ग्रहा लग्नचतुर्थसप्तमदशमगाः स्युस्तदार्धं विहाय शेषायुःप्रदा भवन्ति।

यदि च द्वितीयपञ्चमाष्टमैकादशगा भवेतुस्तदा तृतीयांशं विहाय शेषायुः प्रदाः कथिताः।

अथ च तृतीयषष्ठनवमद्वादशगाः स्युस्तदा चतुर्थांशं विहाय शेषायुःप्रदाः प्रोक्ताः।

अन्तर्दशाधिपः स्वराशिस्थश्चेत्तदा सर्वायुर्दायं भुङ्क्ते।
यदि स च होरेशः षोडशांशेशो वा स्यात्तदा द्वितीयांशं भुङ्क्ते।

द्रेष्काणेशो नवांशेशस्त्रिशांशेशो वा स्यात्तदा तृतीयांशंभुङ्क्ते सप्तमांशेशश्चतुर्थांशं द्वादशांशेशः षष्ठांशं कालहोरेशः सप्तमांशं षष्ट्यंशेशश्चाष्टमांशं भुङ्क्ते इति सर्वे ग्रहाः स्वस्वान्तर्दशायां स्वस्वांशं भुञ्जते इत्यन्तर्दशायाः पाचकक्रमः प्रोक्तः ।

भावानुसारं ग्रहाणां हारकभागांशानाह—

प्रथम भावस्य सर्वदायो, द्वितीयस्यार्धदायस्तृतीयस्य चतुर्थांशश्चतुर्थस्य सप्तमांशः, पंचमस्याष्टमांशः, षष्ठस्य षष्ठांशः, सप्तमस्य तृतीयांशः, अष्टमस्य नवांशः, नवमस्य दशांशः, दशमस्य सप्तमांशः, एकादशस्य चतुर्थांशः, द्वादशस्य षष्ठांशः, एते भागांशाः ग्रहाणां भावानुसारं प्रोक्ताः सन्ति ।

अत्र विशेषमाह—

एकादशद्वादशभावद्वये हरणं कृत्वा शेषं स्वस्वबलेन गुणनं कृत्वा सर्वबलयोगेन विभजेत् लब्धंचेकादशद्वादशभावद्वयस्यान्तर्दशास्वरूपं ज्ञेयम् । तृतीयभावस्य सर्वांशः, चतुर्थस्य द्वितीयांशः, पञ्चमस्य तृतीयांशः, सप्तमस्य चतुर्थांशः, अष्टमस्य तृतीयांशः, नवमस्य पञ्चमांशः, दशमस्य सप्तमांशः, प्रथमस्य सर्वदायः, द्वितीयस्यार्धदायः एते भावानाञ्च क्रमेण भागांशा कथिता इति बोध्यम् ।

एषामायुर्दायानां ग्रहणे विशेषः—

अर्थात्कुत्र च पैण्यायुषो ग्रहणं कुत्र च निसर्गायुष इति विभिन्नपरिस्थतौ आयुष्यग्रहणे भिन्नप्रकरान् निरूपयति ।

(१) लग्नसूर्यचन्द्रभौमबुधगुरुशुक्रशनिषु बलवत्सु क्रमात्पैण्ड्यनिसर्गशतस्वरनक्षत्रनवांशस्वरांशायुषां ग्रहणम् ।

(२) ग्रहेषु स्वोच्चवर्गे पैण्डयस्य नीचवर्गे, निसर्गस्य, त्रिवर्गे स्वरांशस्य शत्रुवर्गे च नाक्षत्रिकस्य, अतिनीचनवांशे समुदायाष्टकवर्गस्य, अतिशत्रुनवांशे भिन्नाष्टकवर्गस्य क्रमादायुष्यस्य ग्रहणम् ।

अत्र विशेषः । यदि ग्रहो मूलत्रिकोणस्यस्तदा पूर्वोक्तप्रकारेणायुषो वृद्धिः । नीचशत्रुवर्गे च हानिः । समशत्रुवर्गे च साम्यमर्थान्निर्हानिर्न वृद्धिरिति भावः ।

(३) लग्नमधिकृत्यायुषो ग्रहणम् ।

लग्ने स्वोच्चस्थे, त्रिकोशएस्थे स्वराशिस्थेऽधिमित्रस्थे शत्रुक्षेत्रस्थेऽधि-शत्रुक्षेत्रस्थे नीचस्थे च सूर्यादिके ग्रहे क्रमशः पैण्ड्यस्य स्वरांशस्य ध्रुवस्य प्रक्रमानुगतस्य, ग्रंशस्य, भिन्नाष्टकवर्गस्य, समुदायाष्टकवर्गस्य, ग्रंशस्य चायुषां ग्रहण-मिति।

(४) मतान्तरमाह।

लग्नाच्चतुर्थस्थे ग्रहे ध्रुवस्य दशमस्थे द्वितीयस्थे च स्वरांशस्य, तृतीयस्थे पञ्चमस्थे सप्तमस्थे च पैण्ड्यस्य, षष्ठस्थे भिन्नाष्टकवर्गस्य, अष्टमस्थे समुदाया-ष्टकवर्गस्य, एकादशस्थे पैण्ड्यस्य स्वरांशस्य ध्रुवस्य वा, चात्रायुर्दायस्य ग्रहणं प्रोक्तम्।

(५) अथ द्वादशभावेषु ग्रहाणां मिश्रायुर्दायग्रहणक्रमं निरूपयति।

एकादशभावे मिश्रायुषो ग्रहणार्थं सूर्यचन्द्रमङ्गलबुधगुरुशनयश्चायुर्दाये स्थिता ज्ञेयाः लग्नतृतीयपञ्चमनवमभावेषु गुरुमङ्गलबुधसूर्यचन्द्रशनिशुक्राश्च क्रमेणायुर्दायस्थिताः प्रोक्ताः। द्वितीयभावे शुक्रशनिगुरुबुधसूर्यमङ्गलचन्द्रा आयु-र्दायप्रदा निगदिताः। चतुर्थभावे बुधसूर्यमङ्गलचन्द्रशुक्रशनिगुरवश्च क्रमेणायुर्दातारः कथिताः।

सप्तमभावे चन्द्रमङ्गलसूर्यबुधगुरुशनिशुक्राश्चायुःप्रदाः कथिताः। अष्टम-भावे सूर्यशनिगुरुशुक्रबुधचन्द्राः षष्ठे सूर्यचन्द्रशुक्रशनिमङ्गलगुरुबुधाः, द्वादशे बुधसूर्यचन्द्रशुक्रशनिमङ्गलगुरवः, दशमे मङ्गलगुरुबुधसूर्यचन्द्रशुक्रशनयश्च क्रमेणा-युप्रदतारः ज्ञेया। शुक्रशनिमङ्गलगुरुबुधसूर्यचन्द्राश्च वै कल्पेनैकादशे भावे आयुःप्रदा बोध्या।

अमिश्रायुर्दायभेदानाह—

अमिश्रायुर्दायस्य ३८ भेदा प्रोक्ताः तत्रापि नवांशद्वादशांशषोडशांशभेदन २२१ भेदा जायन्ते।

अत्रायुर्दायग्रहणे विशेषः।

एकस्मिन् भावे यदि ग्रहद्वयमायुःप्रदं भवेत्तदा द्वयोर्योगं कृत्वा अर्द्धांशा ग्राह्याः। यदि द्विसङ्ख्यातः ऊर्ध्वं त्रिचतुः पञ्चादिकं वा सङ्ख्याग्रहाणां भवेत्तदा तया

सङ्ख्ययैव । सर्वेषां ग्रहाणामायुर्योगं विधाय विभजेत् । शेषमायुर्दशा ग्राह्या ।

(६) सूर्ये चोच्चराशिगे सति तथान्येषु ग्रहेषु बलवत्सु राजयोगकरणोक्तशशहंसदीर्घायुसनफानफादुरुधरादिराजयोगेषु चन्द्रे च बलिष्ठे वा पिण्डायुषो ग्रहणम् ।

(६) प्रकारान्तरमाह ।

गुरौ लग्नस्थे सूर्ये दशमस्थे बलिष्ठे चन्द्रे चतुर्थस्थे सप्तमस्थे वा शुभग्रहेषु च पञ्चमनवमतृतीयषष्ठैकादशेषु स्थितेषु द्वादशलग्नद्वितीयसप्तमाष्टमेषु च पापेषु लग्नचतुर्थसप्तमदशमतृतीयषष्ठैकादशेषु च वा शुभेषु सूर्ये च द्वादशस्थे भौमे चाष्टमस्थे चन्द्रे च षष्ठस्थे वा लग्नाष्टमसप्तमेषु षष्ठद्वादशदशमेषु नीचभिन्नेषु शुभेषु ग्रहेषु सत्सु पैण्ड्यायुषो ग्रहणम् ।

(७) लग्ने च तुलाराशिस्थे शनौ ध्रुवायुष्यस्य ग्रहणम् ।

(८) वीणाकार्मुकचक्रगदार्धचन्द्रनामकेषु राजयोगेषु, सूर्ये च बलवति पैण्ड्यायुष्यस्य, लग्ने बलवति चांशायुषः, चन्द्र च बलवति ध्रुवायुषः, भौमे च बलवति भिन्नाष्टकवर्गस्य, बुधे च बलवति नाक्षत्रिकस्य शुक्रे च प्रक्रमानुगतस्य शनौ च समुदायाष्टकवर्गस्यायुषो ग्रहणम् ।

(९) वापीशरपद्मसमुद्रपाशादिके पञ्चराजयोगेष्वन्यतमे चैके सूर्ये चन्द्रे भौमे बुधे गुरौ शुक्रे शनौ च बलवत्सु क्रमेण नवांशस्य, ध्रुवस्य, पैण्ड्यस्य स्वरांशकस्य, भिन्नाष्टकवर्गस्य, अंशस्य नाक्षत्रिकस्य चायुषां ग्रहणम् ।

(१०) रज्जुमालामूसलेषु विहङ्गनलयोश्च राजयोगेषु सत्सु क्रमात् पैण्ड्यस्य ध्रुवस्य चायुष्यस्य ग्रहणम् ।

(११) गण्डे प्रक्रमस्य, शक्तौ रश्मिजस्य, शकटे ध्रुवस्य, यूपे चांशस्य, केदारे च भिन्नाष्टकवर्गस्य शूले समुदायाष्टकवर्गस्य सूर्यादिग्रहेषु बलवत्सु राजयोगेषु क्रमेणायुषां ग्रहणम् ।

(१२) नौकाछत्रवज्रदामाख्येषु योगेषु सूर्यादिषु च नीचेषु स्वरांशायुषो ग्रहणम् ।

(१३) कूटे पैण्ड्यस्य, गण्डे ध्रुवस्य, शरेऽष्टकवर्गस्य, नागे प्रक्रमस्य, गोले चांशस्य शृंगाटके स्वरांशस्य कालकूटे रश्मिजस्य क्रमेणायुषां ग्रहणं प्रोक्तम्।

(१४) द्रेष्काणानुसारमायुष्यग्रहणमाह।

लग्नस्य प्रथमे द्रेष्काणे पैण्ड्यस्य द्वितीये च ध्रुवस्य तृतीये च स्वरांशस्यायुषो ग्रहणम्।

(१५) नवांशे क्रमेण नवांशानां ध्रुवादिकायुर्दायाः प्रति नवांशे क्रमशो ग्राह्याः।

द्वादशांशेऽशायुर्दायादिका द्वादशभेदभिन्नाः क्रमात्प्रत्यंशे ग्राह्याः।

ग्रहाणामुच्चस्थे भिन्नाष्टकवर्गसमुदायाष्टवर्गौ ग्राह्यौ।

(१६) रश्मिवशादायुर्दायग्रहणे प्रकारमाह।

३०, ३४, ३७, ३३, ३२, ३१, ३६, ३५, २७, २६, २१, २४ एतत्सङ्ख्याकासु रश्मिषु क्रमाद्द्वादशभेदाः पैण्ड्यायुषो ग्राह्याः।

मतान्तरमाह—

३०, ३४, ३७, ३३, ३२, ३१, ३६, ३५, २७, २६, २१, २४ आसां सङ्ख्यानामेकतमायां जन्मकाले रश्मिसङ्ख्यायां पैण्ड्यस्य २५, ३६, २६, २३ आसु ध्रुवस्य, १, २, ३, आसु समुदायाष्टकस्य, ४, सङ्ख्याकायां रश्मौ भिन्नाष्टकवर्गस्य, १३, १४ स्वरांशस्य, १५ रश्मौ नाक्षत्रिकस्य, १६, १७, १८, १९ प्रथमपैण्ड्यस्य, २० प्रक्रमस्य, ३८ अष्टवर्गस्य, ४०, ४१, ४२ पैण्ड्यस्य ४३, ४४, ४५ नाक्षत्रिकस्य २२, २८, ४६, ४७, ४८, ४९ रश्मिषु च पैण्ड्यस्य क्रमादायुषां ग्रहणम्।

## (ख) मातापित्रोरायुर्दायानयनविचारः।

मातृकारकपितृकारकाभ्यामपि पूर्वोक्तायुर्दायविचारानुसारमल्पायुर्मध्यमायुर्दीर्घायुर्भेदत्रयानुरूपमायुर्दायस्य विचारो विधेयः। अयम्भावः आयुर्दाये जातस्य जन्मलग्नहोरालग्नचन्द्रलग्नादीनां विचारेण यथायुर्दायस्य विचारो विहितस्तथैव मातापित्रोरपि तत्तत्कारकानुसारं होराचन्द्रलग्नानुरूपश्च पूर्ववज्ज्ञेयः। अनेन पुत्रादीनामपि तत्तत्कारकानुसारमायुर्दायस्य विचारोऽनुषङ्गेण स्वतः सिध्यति।

पितृकारकमाह—

चरस्थिरभेदेन कारकस्य द्विविधत्वम्। अत्र स्थिरकारकानुसारं पितृकारकमाह। सूर्यः शुक्रश्च स्थिरपितृकारकौ प्रोक्तौ। परञ्चानयोर्मध्ये यो बलवान् स एव पितृकारको वाच्य इति।

एवमेव चन्द्रमङ्गलयोर्मध्ये यो बलवान् स मातृकारकः इत्यप्युक्तम्।

अत्र बलविचारे विशेषमाह—

यद्यत्र कश्चिद्ग्रहो बलशाली भवति परञ्च स पापग्रहदृष्टश्चेत्तदा स बलहीन एव ज्ञेय इति विशेषः।

यदि पित्रादिकारकौ द्वावेव ग्रहौ बलशालिनौ भवतः (यथा पितुः रविशुक्रौ मातुः चन्द्रमङ्गलौ इत्यादि) तथा तत्र द्वावेव पितृमातृपुत्रादिकारकौ ज्ञेयौ। अर्थाच्छुभाशुभस्य द्वाभ्यामेव विचारो विधेय इत्यपि विशेषः।

बलाबलानुसार फलमाह—

एवं यदि पित्रादिकारको ग्रहो बलवांस्तथा शुभग्रहदृष्टश्च भवेत्तदा मातृकारको ग्रहो यस्मिन् राशौ तिष्ठेत्तस्य त्रिकोणराशिगस्य ग्रहस्य राशेर्वा दशायां मातापित्रोर्मरणं वाच्यम्।

बलहीनग्रहे सति विशेषः—

बलहीनग्रहेष्वष्टमेशो यदि बलशाली तदा यत्राष्टमेशस्तिष्ठेत्तस्य राशितस्त्रिकोणदशायां मरणं भवतीति विशेषः। मातृपितृकारकाभ्यां यद्यष्टमेशो बलवांस्तदाऽष्टमेशस्य शूलदशायां मरण भवितुमर्हति। अथवा पितृमातृकारकयोः शूलदशायां मातापित्रोर्मरणं ज्ञेयम्।

बलाबलविचारे प्रकारान्तरमाह—

बलान्वितग्रहस्य फलविचारे तदाश्रयीभूतराशीशानुसारमपि बलं विचार्यम्।

बलहीनग्रहस्य फलविचारे तस्य द्वादशभावगतग्रहानुसारमपि फलं विचार्यम्।

सर्वं रुद्रशूलविचारवदत्रापि विचारो विधेय इति विशेषः।

पुनर्विचारप्रकारमाह—

अल्पाद्यायुर्योगे चायुर्दायानयनं पूर्ववच्चरदशानुसारं विचार्यम्। राश्यादौ तद्विशेषफलविचाराय लग्नादिव्ययभावानुसारमपि ज्ञेयम्। द्वारबाह्यादिकविचारो राश्याद्येऽत्रापि विधेयः।

पुनः पितृमरणविचारमाह—

लग्नाद् द्वादशभावे सूर्यबुधौ स्वराशिस्थौ (सिंहमिथुनकन्यान्यतमराशिगौ इति भावः) स्यातान्तदा लग्नस्य पञ्चमराशेः शूलदशायां पितुर्मरणं वाच्यम्। यद्यत्र मेषलग्नमेव स्यात्तदा पञ्चमराशेर्दशायां वा पितृमरणं ज्ञेयम्।

इदं जैमनीयसूत्रेऽपि लभ्यते तथा हि।

**'अर्कज्ञयोगे तदाश्रये क्रिये लग्नमेषदशायां पितुरित्येके।'**

अत्र नीलकण्ठस्य व्याख्यानम्—

**लग्नाद् द्वादशराशौ सूर्यबुधाश्रये सिंहमिथुनकन्यान्य-**
**तरराशिसत्वेऽर्कबुधयोर्योगे लग्नमेषदशायां-**
**लग्नात्पञ्चमराशिदशायां पितृमरणमित्येके ॥**

लग्ने इति पाठे तु—

**क्रिये मेषराशौ रविज्ञयोगाश्रये लग्ने मेषस्य दशायां पितृमरणम्।**[1]

यदि लग्ने पापग्रहा मेषराशौ च सूर्यस्तदायं मेषमहापाको नाम योग उच्यते। तदापि पितृमरणं भवितुमर्हति।

बाल्ये मातृपितृमरणयोगमाह—

मातापित्रोः कारकौ बलशालिनौ बलहीनौ च भवेताम्। परञ्च तौ यदि सूर्यं विहायान्यपापग्रहयुतौ शुभग्रहदृष्टिहीनौ च स्यातान्तदा जातकस्य दशवर्षायुः प्रागेव मातापित्रोर्मरणं प्रोक्तम्।

---

१. नीलकण्ठः 'जैमिनि सूत्राणि' पृ० ५६, खेमराज श्री कृष्णदास, लक्ष्मी वेंकटेश्वर प्रेस, मुम्बई, वैक्रमाब्दाः १९६० ।

पापदृष्टौ विशेषमाह—

यदि पापदृष्टौ मातृपितृकारकौ सूर्यदृष्टावपि स्यातान्तदा पूर्वोक्तयोगो न भवितुमर्हति। अर्थात्पापदृष्टावपि सूर्यदृष्टौ पितृकारकौ स्यातान्तदा दशवर्षपूर्वं न पितृमरणमिति पूर्वयोगस्यापवादो ज्ञेयः।

पितृसुखदुःखविचारप्रकारमाह—

सूर्यारूढलग्नाच्चापि पित्रोः दशानुरूपं सुखदुःखादिकं वाच्यम्।

## (ग) निर्याणविचारः—

शूलदशानुसारं पित्रादिनिर्याणमाह।[1]

### (अ) पितुर्निर्याणम्—

लग्नसप्तमभावयोर्मध्ये यो राशिर्बलवान् तस्य राशेः रुद्रशूलदशायां पितुर्निर्याणं ज्ञेयम्। अयं भावोऽत्र यदि लग्नराशिर्बलवान् तर्हि तस्य दशायामथ वा सप्तमभावराशिर्बलवाँस्तदा तस्य राशेर्दशायां पितृमरणं वाच्यम्।

### (इ) मातुर्निर्याणम्—

पूर्ववल्लग्नात्सप्तमभावाद्वा यश्च चतुर्थो राशिर्बलवान् तस्य शूलदशायां मातृमरणं ज्ञेयम्।

### (उ) भ्रातृनिर्याणम्—

लग्नात्सप्तमाद्वा यश्च तृतीया राशिर्बलवांस्तस्यराशेः शूलदशायां भ्रातृमरणं वाच्यम्।

### (ऋ) ज्येष्ठभ्रातुर्निर्याणम्—

लग्नात्सप्तमाद्वा यश्चैकादशो राशिस्तस्य दशायां ज्येष्ठभ्रातुर्मरणं वाच्यम्।

लग्नात्सप्तमाद्वा यो नवमो राशिर्बलवाँस्तस्य शूलदशायां वा ज्येष्ठभ्रातुर्मरणं प्रोक्तम्।

---

१. बृ० पा० पू० भा० २७ अध्यायः सकलः मुम्बई-सं०

### (ॠ) भगिनीपुत्रनिर्याणमाह—

लग्नात्सप्तमाद्वा भावाद्यश्च पञ्चमो राशिर्बलवांस्तस्य शूलदशायां भगिन्या पुत्रस्य च मरणं ज्ञेयम्।

### (इ) कलत्रनिर्याणम्—

स्त्रीकारको यो ग्रहः स्यात्तस्याश्रयीभूतराशित्रिकोणदशायां स्त्रीमरणं प्रोक्तम्।

मातुलादीनां निर्याणम्।

पूर्वोक्तयोगानुसारं मातुलादीनां कारकग्रहाश्रयीभूतराशित्रिकोणदशायां मातुलादीनामपि मरणं निश्चितं ज्ञेयम्।

एवं सर्वत्र कलत्रादिभावेभ्यस्तथा कलत्रारूढादिकलग्नेभ्योऽपि कलत्रपुत्रादिकस्य सुखदुःखयोस्तथायुर्दायादिकस्य फलं वाच्यम्।

मरणप्रकारविचारः।

लग्नात्कारकाद्वा पापयुते दृष्टे वा तृतीये भावे दुष्टं मरणं वाच्यम्।

तत्तत्कारकाणां (अत्र मातृपितृपुत्रकलत्रादीनामिति भावः) तत्तत्कारकाश्रयीभूतराशीशानाञ्च तृतीये भावे पापयुक्ते सति तेषां तेषां (मातृपितृपुत्रकलत्रादीनाम्) दुष्टं मरणं।

मातृपितृपुत्रकलत्रादिकभावेभ्यस्तेषां कारकाश्रितराशीशेभ्यश्च तृतीये भावे शुभग्रहदृष्टे सति शुभयोगेन मरणमिति ज्ञेयम्।

अयं भावोऽत्र यत्सर्वेषां मातृपितृपुत्रकलत्रादीनां भावेभ्यः कारकेभ्यो भावेशेभ्यः कारकेशेभ्यो वा तृतीयभावस्य शुभपापग्रहयोगानुसारमेव तेषां तेषां शुभाशुभात्मकं मरणं भवतीति निश्चितम्।

### (ऐ) मरणनिमित्तयोगः—

अत्र तृतीये भावे सूर्यदृष्टे युते वा बलान्विते सति राजहेतोर्मरणं जायते।

शनिराहुभ्यां युते दृष्टे वा तृतीयभावे विषार्तिकारणं जलादग्निपीडनाद्वा मरणं प्रोक्तम्। गर्तादुच्चात्प्रपतनं बन्धनान्मरणं वा वाच्यम्।

चन्द्रमान्दी च यदि तृतीयस्थौ षष्ठस्थौ वा स्यातान्तदा कृमिकुष्ठादिना मरणं भवति।

गुरुणा दृष्टे युते वा तृतीये शोकादिना मरणं प्रोक्तम्।

शुक्रेण दृष्टे युते वा तृतीये प्रमेहरोगादिना मरणं वाच्यम्।

## रोगज्ञानप्रकारमाह—

शुभाशुभयोगेन दृष्ट्या वा तृतीयभावस्यानुरूपं तत्तद्ग्रहरोगानुसारं मरणं ज्ञेयम्। यदि बहुग्रहयुतिर्दृष्टिर्वा तृतीयभावे स्यत्तदा बहुरोगानुसारमपि मरणं वाच्यम्।

## मृत्यौ देशभेदविचारः—

तृतीये भावे शुभग्रहश्चेत्तदा शुभदेशे मरणम्। पापश्चेत्तदा पापदेशे मरणं वाच्यम्। अत्र शुभशब्देन काश्यादिक्षेत्रं ज्ञेयम्। कीकटपापादिशब्देन मगधादिदेशस्य विचारो ज्ञेयः। मिश्रग्रहैः मिश्रस्थले मृत्युर्भवति। अत्र मिश्रस्थलशब्देन पापपुण्यक्षेत्रयोर्मध्यस्थक्षेत्रज्ञानं कार्यम्।

मृत्युज्ञानप्रकारमाह—

तृतीयभावे गुरुशुक्रयोगे ज्ञानपूर्वकं मरणं वाच्यम् गुरुशुक्रातिरिक्तान्यग्रहयोगेऽज्ञानपूर्वकं मरणमिति भावः। मिश्रग्रहयोगे फलमपि मिश्रम्। अर्थाद्गुरुशुक्राभ्यामन्यग्रहयोगे सति मरणकाले ज्ञानमपि स्यादज्ञानमपि चैवं ज्ञानाज्ञानपूर्वकं मरणमिति स्पष्टम्।

## अत्र विशेषमाह—

यदि लग्नषष्ठभावयोर्मध्ये शनिराहुकेतवः स्युस्तदा मातुः संस्कारं जातको न कर्तुं मर्हति। अथ च सप्तमद्वादशभावयोर्मध्ये शनिराहुकेतवो भवेयुस्तदा पितुः संस्कारं कर्तुं न शक्नोतीतिभावः।

## अत्रापवादमाह—

यदि चैतत्पापग्रहत्रयं शनिराहुकेतुकमिति शुभग्रहदृष्टं स्यात्तदा पूर्वोक्त-

योगो न भवति । अर्थात्तदा जातकः पित्रोः संस्कर्ता भवतीति पूर्वयोगस्यापवाद इति बोध्यम् ।

**अत्र काशीसंस्करणे विशेषमाह[1]**

**ज्ञानाज्ञानपूर्वकमरणविचारमाह—**

तृतीयस्थौ गुरुशुक्रौ चेत्तदा ज्ञानपूर्वकं मरणं भवति । अन्यथा त्वज्ञानपूर्वकं वाच्यम् ।

**मरणदेशमाह—**

तृतीये चरराशौ परदेशे स्थिरराशौ स्वगेहे द्विस्वभावे च मार्गमध्ये क्रमेण मरणं प्रोक्तम् ।

**अष्टमभावादपि मरणज्ञानमाह—**

अष्टमस्थानस्थग्रहादपि क्रमेण सूर्ये सत्यग्निना, चन्द्रे जलेन, भौमे, शस्त्रेण, बुधे ज्वरेण, गुरौ व्याधिना, शुक्रे क्षुधया, शनौ च पिपासया मरणं भवति ।

**शवपरिणाममाह—**

अष्टमभावे क्रूरग्रहस्य (अग्नितत्त्वात्मकस्य) द्रेष्काणश्चेत्तदा वह्निना संस्कारो भवति । सौम्यग्रहस्त (जलतत्त्वात्मकस्य द्रेष्काणे सति जले शवस्य प्रवाहो भवति । मिश्रग्रहस्य (शुभग्रहयुतपापराशेः पापग्रहयुतशुभराशेर्वा) द्रेष्काणे सति शवः शुष्को भवति ।

सर्पवर्गीयराशिद्रेष्काणश्चेत्तदा कुक्कुरादिहिंस्रकजन्तुभिः काकादिपक्षिभिर्वा शवस्य नाशो भवति ।

**सर्पवर्गमाह—**

कर्कटराशेर्द्वितीयतृतीयौ, वृश्चिकस्य प्रथमद्वितीयौ, मीनस्य च प्रथमो द्रेष्काणः सर्पवर्गीया द्रेष्काणा ज्ञेयाः ।

---

१. बृ० पा० ४४।३२-४५ (काशी-सं०)

## पूर्वजन्मानुसारं योनेः स्थानस्य च विचारमाह—

सूर्यचन्द्रयोर्मध्ये यो बली भूत्वा गुरुद्रेष्काणस्थश्च स्यात्तदा जातको देवयोनितो देवलोकादागतोऽत्रेति वाच्यम् । शुक्रस्य चन्द्रस्य वा द्रेष्काणगतश्चेत्तदा पितृलोकादयमागत इति ज्ञेयम् । सूर्यस्य भौमस्य वा द्रेष्काणस्थः स्यात्तदा मर्त्यलोकादागत इति बोध्यम् । बुधस्य शनेर्वा द्रेष्काणगतः स्यात्तदा नरकादागत इति वाच्यम् ।

### (ओ) मरणानन्तरं गन्तव्यस्थानज्ञानप्रकारः ।

यदि लग्नात् षष्ठसप्तमाष्टमस्थानेषु गुरुश्चेत्तदा जातको मृत्वा देवलोकं, चन्द्रशुक्रौ स्यातान्तदा चन्द्रलोकं, सूर्य भौमौ भवेतान्तदा भूलोकं, शनिबुधौ चेत्तदा नरकं गमिष्यतीति विशेषेण बोध्यम् ।

## विशेषमाह—

षष्ठसप्तमाष्टमेषु ग्रहाभावे सति येषां भावानां द्रेष्काणपतिषु यो बलवान् ग्रहो भवेत्तस्यग्रहस्यानुरूपं परलोकगमनं वाच्यम् । अत्र ग्रहस्योच्चनीचमध्यभेदानुरूपमपि परलोकविचारो विधेयः । उच्चस्थे देवलोकगमनं, नीचस्थे नीचलोकं, मध्यस्थे मध्यमो लोक इति बोध्यम् ।

अथ सप्तविंशोऽध्यायः जैमिनीयसूत्राणामेव व्याख्यानमथ वा जेमिनीयसूत्राणि चास्याध्यायस्य व्याख्यानानीति विद्वद्भिरूह्यम् ।

एतत्सर्वं जैमिनीयसूत्रेषूपलभ्यते । अत्र जैमिनिसूत्रस्य द्वितीयाध्यायस्य प्रथमः पादो द्रष्टव्यः । नीलकण्ठस्य व्याख्यानमतीवोपयोगि दृश्यते । तेन व्याख्यानेनैवास्याध्यायस्य स्पष्टीकरणे सौकर्यम् ।[1]

## जातकपारिजातादिग्रन्थयोगानाह—

एषां योगानां जातकपारिजातादिग्रन्थेषु चापि विशेषेण विचारो विहितः । आयुर्दायनाम्नि पञ्चमाध्याये द्रष्टव्यम् । यथा च जन्मलग्नस्य द्वाविंशद्रेष्काणस्य

१. नीलकण्ठः जैमिनिसूत्राणि, पृ० ५६, ५७, ५८, खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर प्रेस, मुम्बई ।

स्वामिनमधिकृत्य मृत्युकारणं ज्ञेयम्। गुलिकाश्रयीभूतराशिनवांशात्सप्तमराशीश-ग्रहानुसारमपि मरणनिमित्तं वाच्यम्। अर्थात्पूर्ववच्छुभग्रहेण शुभयोगेन मरणं पाप-ग्रहयोगे दुष्टं मरणमिति। अन्यदपि तत्र हस्तादिविच्छेदयोगैः मातृपितृकोपादि-भिश्च मृत्युकारणानां विशदं वर्णनम्। निर्णयादिदिग्ज्ञानमप्यत्र विशेषः। मरणा-नन्तरं गतिज्ञानं शवपरिणामश्चाप्यत्र वर्णितः।[1] इदं सर्वं तत्रैव द्रष्टव्यम्।

ज्योतिस्तत्त्वे चायुर्भावनिरूपणे त्रिंशाध्यायेऽपि मृत्युकारणानां विचार उक्तः अत्रैव मरणस्य देशविदेशज्ञानप्रकारः, तीर्थयुद्धादिके मरणयोगविचारः, मोक्षादि-स्थाननिर्णयश्चापि विशदरूपेण वर्णितः।[2]

## (घ) अरिष्टारिष्टवर्णनम्[3]

अत्रायुर्दायस्य विचारे रिष्टारिष्टभङ्गनाम्ना निरूपिताध्यायस्यापि समावेशो भवितुमर्हति।

### (अ) बालारिष्टाः।

महर्षिपाराशरेणात्रेदमुल्लिखितं यज्जन्मनश्चतुर्विंशतिवर्षान्तमायुषो निर्णयो न भवतुमर्हति।

इतः प्राग्बालारिष्टमुच्यते। तस्योपायोऽपि तत्रैव प्रोक्तश्चिकित्साजपहो-मादिकः।

### अत्र बालारिष्टमधिकृत्य योगाः।

त्रिकस्थश्चन्द्रः पापग्रहदृष्टजातकस्य सद्यः मृत्युप्रदो भवति। शुभग्रहदृष्टश्चा-ष्टमे वर्षे मृत्युः कथितः।

शुभग्रहा अपि वक्रीभूताः पापदृष्टा लग्ने शुभग्रहशून्ये सति चैकमासेनैव मृत्युदा इति बोध्यम्।

---

१. कपिलेश्वर शास्त्री, जातक-पारिजातः पञ्चमोऽध्यायः, चौखम्बा संस्कृत सीरिज, बनारस।

२. चक्रधर शर्मा, 'ज्योतिस्तत्त्वम्' त्रिंशोऽध्यायः, श्रीलक्ष्मीधर विद्यामन्दिर, देवप्रयाग।

३. वृ० पा० पू० भा० ५ अध्यायः (मुम्बई-सं०).

यस्य जातकस्य पञ्चमे सूर्यशनिचन्द्रभौमा स्थिता स्युस्तस्य माता भ्राता च मृत्युमाप्नोति।

पापदृष्टो युतो वा शुभदृष्टिशून्यो भौमो लग्नस्थो भवेत्तथाऽष्टमस्थः शनिः सूर्यो वा स्यात्तदापि मरणमतिशीघ्रमिति भावः :

सूर्यचन्द्रग्रहणेऽथवा राहुयुते चन्द्रसूर्ययोः शनि भौमदृष्टे च लग्ने पञ्चदश-दिनान्ते मृत्युः।

शनौ दशमस्थे चन्द्रे षष्ठस्थे भौमे लग्नस्थे च मात्रा सह जातकस्य मृत्युयोगः।

लग्ने शनियुतेऽष्टमस्थे चन्द्रे, तृतीयस्थे च गुरौ मरणयोगः।

लग्ने नवमे वा सूर्ये, सप्तमे शनौ चैकादशे गुरुशुक्रयुते मासान्ते मृत्यु-योगः।

द्वादशे भावे सर्वे ग्रहा अरिष्टप्रदाः प्रोक्ताः। सूर्यशुक्रचन्द्रराहवश्चात्र विशेषेणारिष्टदा इति। परञ्चैतेषां दृष्टिश्चारिष्टयोगभङ्गकारिणी प्रोक्ता।

पापयुते चन्द्रे लग्ने नवमे सप्तमे वा शुभदृष्टिशून्ये सति शिशोः मृत्युयोगः।

सन्ध्याकाले चन्द्रस्य होरायां गण्डान्तकाले (कर्कवृश्चिकमीनराशीनामन्तिमे भागे) शिशौ जाते सचन्द्रपापग्रहेषु केन्द्रेषु मृत्युयोगः प्रोक्तः।

(अत्र सन्ध्याकालः सूर्यमण्डलार्द्धोदयात् पूर्वं सूर्यमण्डलार्द्धास्तादनन्तरञ्च घटीत्रयान्तं सन्ध्याकालो ज्ञेयः)

अपि च कर्कलग्ने पूर्वार्द्धचक्रे (दशमभावाच्चतुर्थभावान्तं) पापग्रहाः स्युस्त-थोत्तरार्द्धचक्रे (चतुर्थभावाद्दशमभावान्तं) शुभग्रहाः स्युस्तदापि मरणयोगो भवति।

पापग्रहमध्येलग्ने सति त्रिके द्वितीये च पापग्रहेषु मृत्युयोगो ज्ञेयः।

शुभग्रहदृष्टिशून्ये च सप्तमे लग्ने पापाक्रान्ते चन्द्रे चापि पापयुते मृत्युयोगः।

क्षीणचन्द्रयुते लग्ने पापग्रहेषु केन्द्राष्टमस्थेषु च जातस्यैव मरणयोगो भवति। पापग्रहद्वयोर्मध्ये चन्द्रो यदि लग्नेऽष्टमे सप्तमे वा स्यात्तदा जातस्यैवा-चिरान्मृत्युयोगः।

शुभदृष्टिरहितेषु शनिभूर्यभौमेषु नवमाष्ठमद्वादशस्थेषु जातस्य मृत्युयोगः। यस्य द्रेष्काणे सप्तमे वा पापग्रहः स्यात्तथा क्षीणचन्द्रश्च लग्नस्थस्तस्य जातस्य सद्यो मृत्युयोगः।

यस्य जन्मकुण्डल्यां बलशून्याः सर्वे ग्रहा आपोक्लिमस्थाः स्युस्तस्य मासद्वये षड्मासे वा मृत्युयोगः प्रोक्तः।

### (इ) मातुररिष्टयोगाः—

चन्द्रो यदि पापग्रहत्रयेण दृष्टः स्यात्तदा मातृनाशयोगः। अन्यथा शुभग्रहैर्दृष्टश्चन्द्रश्चेत्तदा मातुः शुभफलप्रदः।

### पितृमरणानन्तरं जातकस्य जन्मयोगमाह—

द्वितीये राहुबुधशुक्रशनिसूर्ययुते सति पितृमरणानन्तरं जातकस्य जन्म तथा मातुश्चापि मरणयोगः।

पापग्रहात्सप्तस्थे वा चन्द्रे पापयुते बलवत्पापग्रहदृष्टे च सति मातृनाशयोगः।

उच्चस्थे नीचस्थे वा सप्तमस्थे सूर्ये जातको मातृदुग्धरहितोऽजादुग्धेन जीवति।

द्वादशे षष्ठे च पापग्रहे मातृकष्टं चतुर्थे दशमे च पापग्रहे पितृकष्टमिति प्रोक्तम्।

लग्नद्वादशसप्तमद्वितीयेषु क्रूरग्रहेषु द्वितीये च शुभग्रहे परिवारस्यैव नाशयोगो बोध्यः।

लग्ने गुरौ, द्वितीये शनौ, तृतीये राहौ च मातृनाशः।

शुभग्रहरहितेषु क्षीणचन्द्रात्त्रिकोणस्थेषु पापग्रहेषु षण्मासानन्तरमेव मातृनाशो भवति।

यत्र कुत्र राशौ शनिभौमौ चैकांशस्थौ चन्द्राच्च केन्द्रगौ वा भवेतान्तदा मातृद्वयेऽपि जातकस्य मृत्युयोगः।

### (उ) पितुररिष्टयोगः।

निम्नाङ्कितेषु योगेषु पितृमरणं ज्ञेयम्।

लग्ने शनौ सप्तमे भौमे षष्ठे चन्द्रे च सति पितृमरणयोगः।

लग्ने गुरौ द्वितीये शनिसूर्यभौमबुधयुते सति जातकस्य विवाहकाले पितृमरणयोगः।

पापयुते पापमध्यगे वा सूर्ये सूर्याच्च सप्तमे पापे सति पितृवधयोगः।

सप्तमे सूर्ये, दशमे भौमे, द्वादशे राहौ कष्टेन पितृजीवनयोगः।

दशमे शत्रुक्षेत्रगे भौमे सद्यः पितृमरणयोगः।

षष्ठस्थे चन्द्रे, लग्नस्थे शनौ, सप्तमस्थे भौमे पितृमरणयोगः।

भौमनवांशस्थे सूर्ये शनिना दृष्टे सति जातकस्य जन्मनः पूर्वमेव पितुः संन्यासियोगोऽथ वा मरणयोगो निगदितः।

चतुर्थे दशमे द्वादशे चापि पापद्वययुते सति मातापितरौ हत्वा देशदेशान्तरं वा जातको गच्छति।

शत्रु क्षेत्रे लग्नेऽथ वा चतुर्थे गुरुराहुयुते सति त्रयोविंशे वर्षे पितृमरणयोगः।

समस्तजन्तूनां सूर्यः पिता चन्द्रश्च माता प्रोक्ता। अतः सूर्ये पापदृष्टे युते पापमध्यगे वा सति पितुररिष्टं भवति। सूर्यात्षष्ठमचतुर्थस्थैः शुभग्रहशून्यैः पापग्रहैः पित्ररिष्टं प्रोक्तम्।

## (ऋ) सर्वारिष्टभङ्गयोगाः।

मातापित्रोश्च पूर्वोक्तारिष्टयोगाणां कृते भङ्गयोगानाह।

अर्थात्पूर्वोक्तारिष्टयोगेषु सत्स्वपि निम्नाङ्किता यदि योगा अपवादरूपाः स्युस्तदारिष्टभङ्गो भवति।

बुधगुरुशुक्रान्यतम एकोऽपि ग्रहो यदि लग्नात्केन्द्रस्थोऽथ वा बलशीलो गुरुर्लग्नस्थोऽथ वा बलशीलो लग्नेशः केन्द्रस्थः स्यात्तदा सर्वारिष्टभङ्गयोगो भवति।

यदि शुक्लपक्षे शुभग्रहदृष्टे लग्ने रात्रौ जन्म तथा कृष्णपक्षे पापग्रहदृष्टे लग्ने दिवा जन्म तदापि सर्वारिष्टविनाशोज्ञेयः।

तुलालग्ने द्वादशस्थे सूर्ये शतवर्षदीर्घायुर्योगः प्रोक्तः।

भौमे गुरुयुते दृष्टे वा सर्वारिष्टविनाशो मातुश्चशुभप्राप्तियोगः।

चतुर्थे दशमे च शुभमध्यगे पापग्रहे शुभैश्च केन्द्रत्रिकोणयुतेषु च पितुः सौख्यप्राप्तियोगः कथितः।

चतुर्थे पापे केन्द्रत्रिकोणस्थे च गुरौ जातको मातृपितृकुलद्वयानन्दकरो दीर्घायुरारोग्ययुतश्च भवति।

यदि पापग्रहाः शुभग्रहमध्यगाः स्युस्तथा शुभग्रहाः केन्द्र त्रिकोणस्था भवेयु-स्यदप्यरिष्टफलनाशयोगो भवति।

जातकपारिजातेऽपि चतुर्थोऽध्यायोऽरिष्टनाम्ना पूर्वोक्तप्रकरणस्यापररूपो वर्णितः।

तत्रारिष्टस्वरूपमाह—[1]

**अष्टौ बालारिष्टमादौ नराणां योगारिष्टं प्राहुराविंशतिः स्यात्।**
**अल्पं चाद्वात्रिंशतान्मध्यमायुरासप्तत्या पूर्णमायुः शतान्तम्।**

## (ड) पूर्वजन्मवर्णनम्।[2]

मुम्बई-संस्करणे पूर्वखण्डे द्वात्रिंशोऽध्यायः पूर्वजन्मवर्णनाध्यायनाम्नोपल-भ्यते यत्र पूर्वजन्मार्जितपापस्य ज्ञाननिर्देशप्रकारो दर्शितः। अत्र चन्द्रस्य नवांशस्यो-पयोगित्वम्। द्वादशराशिषु चाष्टोत्तरशतसंख्यका नवांशा (९×१२=१०८) प्रति-राशौ नवसख्या क्रमेण भवन्ति। अत्र पूर्वजन्मार्जितपापस्यैव निर्देशोऽतश्चन्द्रस्य यदि नवांशाधिपः पापस्तदैव पूर्वजन्मकृतपापस्य ज्ञानम्। पापग्रहाणामेव पाप-फलम्। अत्र मेषादिद्वादशराशिषु चन्द्रस्य पापनवांशश्चेत्तदा तत्तद्राश्यनुसारं क्रमेण ज्ञेयम्। यथा हि मेषराशौ पापनवांशे तदा वृषभस्य वध इति फलमवगम्यम्। एवमेव वृषराशौ गोसज्ञकमपराधम्। मिथुने गर्भनाशकृतपापम्। कर्के सर्पवधः सिंहे चतुष्पादवधो वन्यानां मृगजातीनां वधश्च। कन्यायां स्त्रीत्यागजोऽपराधः प्रोक्तः। वृश्चिके ग्रामचटकानां पक्षिणाञ्च वधः कथितः। धनुषि मित्रद्रोहो ज्ञेयः। मकरे फलानां वृक्षजातीनाञ्च चौर्यभेदनं प्रोक्तम्। कुम्भे विदुषामनुसूया

---

१. कपिलेश्वर शर्मा, जातक-पारिजातः, ४।३, चौखम्बा संस्कृत सीरिज, बनारस।
२. बृ० पा० भा० ३२ अध्यायः सकलः (मुम्बई-सं०)

मीनराशेः पूर्वभागश्चेत्तदा विप्रधनहरणम् । उत्तरभागे तु विप्राणां धनादानं वधश्च कथितः ।

**अत्र पूर्वजन्मसंख्याज्ञानमाह**--

यदि राशेः प्रथमो नवांशश्चेत्तदा चैकजन्मकृतं पापमिति ज्ञेयम् । द्वितीयनवांशः स्यात्तदा जन्मद्वयस्य ।

तृतीयनवांशे सति जन्मत्रयस्य शेषनवांशसंख्यासु तु जन्मचतुष्टयस्यैवेति बोध्यम् ।

विशेषमाह—

अत्र चन्द्रस्य पापनवांशानुसारमेवपूर्वजन्मकृतपापनिर्देशोऽत्रोपलभ्यते । अनेन चन्द्रशुभनवांशाधिपेन च पूर्वजन्मनः पुण्यानां निर्देशस्तु स्वत एवावगम्यते इति । तथा हि चन्द्रस्य नवांशाधिपः शुभ उच्चस्थश्चेत्तदा मृत्वा स्वर्गं गच्छतीत्यत्रैव ग्रन्थकारेण लिखितम् । तथा च नवांशेशो नीचश्चेत्तदा नरकं प्रयाति । अत एव चन्द्रस्य नवांशाधिपस्य शुभाशुभयोगेन पूर्वोत्तरजन्मद्वयस्य पुण्यापुण्यज्ञानं भवितुमर्हति । यदि नवांशेशः समराशिस्थस्तदा समलोकादागत इति । शत्रुराशिस्थः स्यात्तदा मृतः प्रेतत्वं गच्छति । एवं पापपुण्यादिकमपि ग्रहानुसारं ज्ञातुं शक्यते ।

**पूर्वजन्मकर्मणां लक्षणज्ञानप्रकारः**—

चन्द्रनवांशेशो राहुकेतुयुतश्चेदथ वा समराशिगो वा भवेत्तदाय जातको राजसकर्मकारको बोध्यः । यदि शुभ उच्चस्थो वा स्यात्तदा सात्विककर्मकारकः प्रोक्तः । नवांशेशो नीचस्थः स्यात्तदा तामसकर्मभिः पूर्वं पापादिकं कृतमिति ज्ञेयम् ।

एवं ग्रहानुसारमेव जन्मत्रयं भूतभविष्यद्वर्तमानादिकं वाच्यम् ।

पूर्वजन्मजातिज्ञानमाह—

नवांशेशस्य वर्णानुसारमेव पूर्वजन्मनो ब्राह्मणक्षत्रियवैश्यशूद्रादिकं वर्णज्ञानमपि प्रोक्तम् ।

**(च) समीक्षा**

## (अ) पूर्वपरम्परा ।

आयुर्दायमधिकृत्यात्र पराशरेणोत्तरभागे गर्गस्य चर्चा विहिता । यथा हि ।

'शेषेषु षट्सु पैण्ड्यः स्यादाद्यो गर्गोऽयमाह ।'[१]

गर्गश्च सुप्रसिद्धः सांवत्सरिक इति महाभारते दृश्यते ।

अतश्चायुर्दायविषयेऽपि पराशरात्पूर्वं परम्परा विद्यते यैराचार्यैरायुर्दायानयने प्रयासो विहितः ।

अत्रैव पराशरस्य नाम्नोऽपि निर्देशो विद्यते । यथा हि—

राजयोगेषु सर्वेषु पैण्ड्यमाह पराशरः ।[२]

अत्र पराशरस्य नाम्नो निर्देशः स्वमताभिव्यक्तिकरणार्थं विद्यते ।

जैमिनीयसूत्रेऽपि आयुर्दायस्य विशदवर्णनमुपलभ्यते । तस्य चमत्कारश्चाधुनिकैर्ज्योतिर्विद्भिः प्रत्यक्षेणानुभूयते । अत्र पूर्वभागीयाध्यायेषु जैमिनिसूत्रवत्साम्यमुपलभ्यते । तत्रायं सदेह उत्पद्यते यज्जैमिनिसूत्रस्यास्माद्ग्रन्थात्पूर्ववर्तित्वं न वा । अर्थादत्र ग्रन्थे जैमिनिसूत्रस्यैव छाया दृश्यते । अथ वा जैमिनिनास्य ग्रन्थस्यानुकरणं विहितं भवेदिति । अत्र वी० वी० रमणमहोदयेनत्विदमेव स्वीकृतं यज्जैमिनिः पराशरस्य परवर्ती तथा तेनैव पराशरस्यानुकरणं कृतम् । एवं जैमिनिसूत्रस्य बृहत्पाराशरहोराशास्त्रमेवोपजीव्यमत्र नास्ति कश्चित्संदेहः ।[१]

परञ्च—

'तत्रापि महेश्वरभावेशत्रिकोणाब्दे ।'

जैमिनीये सूत्रे अत्राब्दशब्देन राशिदशाक्रमोऽभिहित इति नीलकण्ठेन व्याख्यातम् । अत्र च बृहत्पाराशरे षड्विंशाध्याये विनैव पूर्वमब्दचर्चाप्रसंगम्

---

१. बृ० पा० उ० भा० १२।३८ (मुम्बई-सं०)
२. तत्रैव, उ० भा० १२।१२.
३. नीलकण्ठः, 'जैमिनिसूत्राणि' २।१।५४, पृ० ५४ खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम् प्रेस, मुम्बई ।

'अत्राब्द इति निर्देशात्तत्राशिदशाक्रम इति पद्येऽङ्कितन्तेन चैतदवगम्यते यत्पूर्वभागीये आयुर्दाये जैमिनिसूत्रस्यैव न केवलं छाया अपि तु तट्टीकाकर्तु राचार्यनीलकण्ठस्य टीकाया अप्यनुकरणम्।

अस्तु जैमिनिसूत्रप्रतिपादितायुर्दायस्य प्राचीनत्वं तु निःसंशयम्।

अथ च उत्तरभागीयायुर्दायस्य निःसंदेहेन जैमिनेः प्राचीनत्वम्। पराशरात्पूर्वं गर्ग एव प्रधानाचार्यो येनायुर्दाये विचारो विहितः।

## (इ) उत्तरवर्तिषु प्रभावः।

पराशरादनन्तरं जैमिनिरेव ऋषिशब्देन प्रख्यातः। अत्र चायुर्दायविवेचनस्यैव प्राधान्यम्। प्रकारश्चाप्यतीव सुन्दरः तस्य चमत्कारः स्वीक्रियते सर्वैरप्याचार्यैरिति पूर्वं मयाङ्कितम्।

वराहमिहिरेण बृहज्जातके सप्तम आयुर्दायनामकोऽध्यायोऽङ्कितः तत्र च तेनात्मनः पूर्ववर्तिनां मययवनमणित्थपराशरसत्याचार्यविष्णुगुप्तदेवस्वामिसिद्धसेनजीवशर्मादिकानामाचार्याणामायुर्दाये मतानि प्रदर्शितानि।[1] अनेन बृहत्पाराशरस्योत्तरभागीयपिण्डायुष एव ग्रहणं कृतम्। तत्र च कक्ष्याह्रासादिकमपि लिखितम्। मनुष्येतरप्राणिनामप्यायुःप्रामाण्यं प्रदर्शितम् यस्य च बृहत्पाराशरस्य काशीसस्करणे चर्चा विद्यते।[2] पूर्वकथितानामाचार्याणां निर्देशपुरःसरं तेषां मतान्यपि संक्षेपेण प्रदर्शितानि।

जातकपारिजाते वैद्यनाथाचार्येण पञ्चमाध्याये आयुर्दायस्य विचारो विहितः।[3] तेन निसर्गपिण्डादिकानामायुषां निर्देशपुरःसरमरिष्टदशाया निर्याणसमयस्यापि निर्देशो विहितः। चतुर्थेऽरिष्टाध्यायेऽरिष्टविचारपूर्वकमल्पमध्यदीर्घपूर्णामितमुनियुगान्ताद्यानामायुषामपि विचारो विहितः। अस्य चर्चाऽपि बृहत्पाराशरस्य काशीसंस्करणे दृश्यते।[4]

---

१. सीताराम झा, बृहज्जातकम् ७।१,७,९,१०, मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

२. बृ० पा० ४३।२४-२६, पृ० २४३ (काशी-सं०)

३. कपिलेश्वर शास्त्री, जातकपारिजातः, पञ्चमोऽध्यायः, चौखम्बा संस्कृत सीरिज, बनारस।

४. बृ० पा० ४३।५५-५७ (काशी-सं०)

सर्वार्थचिन्तामणिकारेण व्यंकटशर्मणापि दशमाध्याये अल्पमध्योत्तमायुः-निर्देशपुरःसरमरिष्टानि लिखितानि । तत्र नास्ति कश्चिद्विशेषः ।[1]

फलदीपिकाकारेणापि आयुर्भावस्यनिर्याणस्य विचारो विहितः ।[2]

कालिदासरचिते उत्तरकालामृतेऽप्यायुर्दायो नाम तृतीयखण्डो दृश्यते । तत्रापि संक्षेपेणैव लग्नायुर्दायमधिकृत्य बृहज्जातकवदेव निरूपितम् ।[3]

आचार्यढुण्डिराजेनापि जातकाभरणे अरिष्टनिर्याणयोर्विवेचनं विहितम् ।

सारावलीकारेण कल्याणवर्मणाऽपि बृहज्जातकवदेवायुर्दायनाम्ना चत्वारिंशदध्यायो लिखितः ।[4]

दैवज्ञाभरणकर्त्राऽपि जातकस्य तथा तस्य मातापित्रोररिष्टविवेचनपुरःसरं स्वल्पमध्यमपूर्णायुषां मरणनिमित्तानाञ्च वर्णनं कृतम् ।[5]

शम्भुहोराप्रकाशकारेणाचार्यपुञ्जेनापि सप्तमोऽध्याय आयुर्दायनाम्ना लिखितः। तेनापि बृहज्जातकस्यानुकरणं विहितम् । अष्टकवर्गीयायुपश्चात्र विशेषो वर्तते । एवमन्यैरप्यर्वाचीनज्योतिर्विद्भिरप्यायुर्दाये विचारितं तच्च लेख विस्तारभयान्नाङ्कितम् ।[6]

## (उ) अत्र वैशिष्ट्यम् ।

बृहत्पाराशरीयवर्णितायुर्दायस्य सर्वाङ्गीनत्वं वर्तते । अनेन प्रायः सर्वेषामा-

---

१. महीधर शर्मा, सर्वार्थ-चिन्तामणिः १० मोऽध्यायः गंगाविष्णु श्री कृष्णदास, लक्ष्मीवेंकटेश्वर प्रेस, बम्बई ।

२. मन्त्रेश्वरः, फलदीपिका २२ तमो अध्यायाः, के० एस० कृष्णमूर्ति, ६५ पर्डन्नास रोड, वासावांगुदी, बंगलोर ।

३. वी० सुब्रह्मण्यम्, उत्तरकालामृत, तृतीयः खण्डः, ५६ पर्डन्नास रोड, वासावांगुदी, बंगलोर ।

४. सीताराम झा, सारावली, ४० तमोऽध्यायाः मास्टर खेलाड़ीलाल एण्ड संस, बनारस ।

५. पी० पी० लक्ष्मीनारायण उपाध्यायः, दैवज्ञाभरणम्, ६, ७, ८ प्रकाशा, गवर्मेण्ट आरियण्टल मेनुस्क्रिप्ट लाईब्रेरी, मद्रास ।

६. महीधर शर्मा, 'शम्भुहोराप्रकाशः' सप्तमोऽध्यायः, गंगाविष्णु श्रीकृष्णदास, लक्ष्मीवेंकटेश्वर स्टीम् प्रेस, बम्बई ।

युर्दायानयनप्रकाराणां वर्णनं कृतम्। जैमिनिसूत्रवर्णितायुर्दायस्यात्र प्राय: सर्वा सामग्री उपलभ्यते।

अथ च मारकग्रहाणां रुद्रमाहेश्वरब्रह्मग्रहाणां निर्देशेन मातृपितृभ्रातृभगिनीपुत्रस्त्रीकुटुम्बादिकस्य निर्याणप्रकारः पूर्णो दृश्यते। मरणनिमित्तानां मरणस्थानानामपि निर्देशोऽत्र विद्यते। पिण्डध्रुवरश्मिनवांशनक्षत्रभावादिकानामायुर्दायानामुल्लेखो दृश्यते। कक्ष्याह्रासवृद्धिरपि चात्राङ्किता। अनेनेदं कथयितुं शक्यते यद् बृहत्पाराशरस्य गर्गसंहितां विहाय आयुर्दायविचारे पूर्णं वैशिष्ट्यं वर्तते।

आयुषो विचारे एकोऽन्योऽपि विशेषोऽत्र दृश्यते यत्कलियुगे सर्वे आयुर्योगाः शतायुर्योगहीना एव ज्ञेयाः। यथा हि—

'शतायुर्योगहीनास्तु सर्वे प्रोक्ताः कलियुगे।'[1]

फलदीपिकाकारेण तु आयुर्विचारेऽन्य एव विचारः समुपस्थापितः।

ये धर्मकर्मनिरता विजितेन्द्रिया ये।
ये पथ्यभोजनजुषो द्विजदेवभक्ताः॥
लोके नरा दधति ये कुलशीललीलां।
तेषामिदं कथितमायुरुदारधीभिः॥'[2]

---

१. बृ० पा० उ० भा० ११।७ (मुम्बई-सं०)
२. वी० सुब्रह्मण्यम्, फलदीपिका २२।३२, के० एस० कृष्णामूर्ति, ६५ पद्मनाभ रोड, बासावानगुडी, बंगलोर।

## सप्तमोऽध्यायः

# अष्टकवर्गनिरूपणम्

### (क) विषयावतरणम्[1]

*ज्योतिषशास्त्रेऽष्टकवर्गस्यातिशयो महिमोपलभ्यते । महन्महत्त्वमस्य ।* लग्नेन सह सप्तग्रहाणां वर्गो यत्र निरूप्यते सोऽष्टवर्गः स्वार्थे क-प्रत्ययेऽष्टक इति सम्पन्नेऽष्टकवर्ग इत्युच्यते । अर्थाल्लग्नयुतस्य सप्तग्रहस्य वर्ग एवाष्टकवर्ग इति भावः । प्रायशः सर्वेष्वेव ज्योतिषग्रन्थेषु वर्णनञ्चास्य । नारदपुराणेऽप्यस्योल्लेखः । तदनन्तरं सर्वैः होराशास्त्रविद्भिराचार्यैवराहमिहिरकल्याणवर्ममन्त्रेश्वरप्रभृति-भिरर्वाचीनैरप्यस्य गुणगरिमा स्वीकृतः ।[2]

जातकग्रन्थेषु लग्नेन सह शेषसूर्यादिसप्तग्रहमण्डलमधिकृत्यैवाष्टकवर्गो निरूपितः ।

---

१. बृ० पा० पू० भा० १४, १८ १६, २० तमा अध्यायाः उत्तरभागे च १ अध्यायः । (मुम्बई-सं०)

२. नारदमहापुराणम्, नारदविष्णुपुराणांकम्, कल्याणम्, जनवरी १९५४, गीता प्रेस, गोरखपुर, १।२।५५।१२१-१६६, पृ० २५६, २५७ ।

वराहमिहिरः, बृहज्जातकम्, मास्टर खेलाड़ीलाल एण्ड संस, बनारस, ६ अध्याय कल्याण वर्मा, सारावली, मास्टर खेलाड़ीलाल एण्ड संस, बनारस, ५३, ५४ अध्यायौ सकलौ ।

मन्त्रेश्वरः, फलदीपिका के० एस० कृष्णमूर्त्ति, ६५ थर्डक्रास रोड, बासावांगुदी, बंगलोर, २३ अध्यायः सकलः ।

कुत्रचिज्ज्योतिस्तत्वादिग्रन्थेषु च लग्नस्थाने राहोरुल्लेखः। तन्नोचितम्। तेन केतोर्गणनाऽपि सम्भवात्तेनायमष्टकवर्गस्थाने नववर्गो भवितुमर्हति।

यद्यपि राहुकेत्वोर्ग्रहेषु गणना विद्यते तदपि सर्वत्र राजादियोगेषु तथान्यत्रापि ज्योतिषीययोगेषु तयोर्गणाना नाङ्गीकृता तेनाऽत्रापि तदेव बोध्यमिति भावः। अपि च राहुकेत्वोः राशिमण्डले स्थानं नास्ति। न चापि तयोः कस्मिश्चिद्राशौ चाधिकार इति।

अष्टवर्गस्योपयोगित्वं महर्षिपराशरेण स्थानत्रये सुतरां निरूपितम्। आयुर्दाये, भाग्योदये, दशायाञ्चेति भावः। दशायुर्भाग्यत्रयमित्येव मानवजीवनस्य महत्त्वपूर्णं भविष्यज्ज्ञानप्रयोजनमिति।

अर्वाचीनैराचार्यैरस्य गोचरविवाहादिष्वप्यस्यप्रयोजनमावश्यकमित्यङ्गीकृतमस्ति। तथा हि ज्योतिस्तत्त्वे।

अष्टवर्गशुभैः श्रीमान् कर्म कुर्याग्निमश्चरैः।
गोचरस्थैस्तदप्राप्तौ तदप्राप्तौ च वेधगैः॥
व्रतारम्भे विवाहे च यात्रायां क्षुरकर्मणि।
अविशुद्धाष्टवर्गस्य समस्ता निष्फला क्रिया॥

अपि च—

सततं दिशति नराणां राशौ मध्येऽष्टवर्गफलं निखिलम्।[1]

भावफलं प्रथमार्द्धे वृष्टिफलान्यर्द्धभुक्तेषु।

आचार्यमन्त्रेश्वरोऽपि फलदीपिकायाम्—

गोचरग्रहवशान्मनुजानां यच्छुभाशुभफलान्युपलब्ध्यै।
अष्टवर्ग इति यो महदुक्तस्तत्प्रसाधनमिहाभिदधेऽहम्॥[2]

अस्मिन्पाराशरीये होराशास्त्रे पूर्वखण्डेऽप्यस्याष्टवर्गस्य निरूपणमुपलभ्यते।

---

१. शब्दकल्पद्रुमः, पृ० १५०, प्रथमकाण्डः, मोतीलाल बनारसीदास, दिल्ली। वाचस्पत्यम् प्रथमभाग पृ० ५२२, चौखम्बा संस्कृत सीरिज, बनारस।

२. मन्त्रेश्वरः, फलदीपिका २३।१, के० एस० कृष्णमूर्ति, ६५ चर्चहाउस रोड, बासावांगुडी, बंगलोर।

सप्तदशेऽध्याये त्रिकोणशोधनम्। अष्टादशेऽध्याये चैकाधिपत्यशोधनम्। एकोनविंशत्यध्याये पिण्डोत्पत्तिवर्णनम्। विंशत्यध्याये चाष्टकवर्गफलकथनं विद्यते। अत्रैवलग्नसहितसूर्यादीनां ग्रहाणां पृथक् पृथक् फलनिर्देशस्तथा च गोचरक्रमेणापि ग्रहाणामष्टवर्गमधिकृत्य सुखदुःखादिवर्णनम्। न्यूनरेखायःकुफलम्। अत्र च रेखानां कुफलदूरीकरणार्थं शान्तिप्रकारोऽपि विस्तरेण निरूपितः।

उत्तरखण्डस्य चाष्टकवर्गमहिमानमधिकृत्यैव प्रारम्भो विहितः।

प्रथमोऽध्याय एवाष्टकवर्गो नाम।

(अ) अष्टकवर्गमहिमा—

अष्टकवर्ग एव फलकथने ज्योतिषशास्त्रे संक्षिप्तचमत्कार इति।

तथाहि—

भगवन् सर्वमाख्यातं जातकं विस्तरेण मे।
ससहस्रायुतग्रन्थैरशीत्यध्यायसंयुतैः।
संकरात्तत्फलानां तु ग्रहाणां गतिसंकरात्।
नान्येन हीदृगस्येदमिति वक्तुमलं नराः।
कलौ युगे ततोऽल्पैव बुद्धिः पापोत्तराः नराः।
अतो न चास्य प्रचयगमनं न प्रयोजनम्।
अत्र त्रेतायुगे केचिद् द्वापरे च कृते युगे।
कुशाग्रमतयः सर्वे पुण्यभाजश्चिरायुषः।
अतोऽल्पबुद्धिगम्यं यच्छास्त्रमेतद्वदस्व मे।
लोकयात्रापरिज्ञानमायुषो निर्णयं तथा।

पराशर उवाच—

साधु पृष्टं त्वया ब्रह्मन्वदामि तव सुव्रत।
लोकयात्रापरिज्ञानमायुषो निर्णयं तथा।
संकरस्याविरोधं च शास्त्रस्यापि च सिद्धये।
प्रयोजनस्य लोकानामुपकाराय तच्छृणु।

आयुश्च लोकयात्राश्च शास्त्रेऽस्मिंस्तत्प्रयोजनम् ।
निश्चेतुं तन्न शक्नोति वसिष्ठो वा बृहस्पतिः ।
किं पुनर्मनुजास्तत्र विशेषात्तु कलौ युगे ।[1]

(इ) अष्टकवर्गस्वरूपम्

एवमत्र कलियुगे भविष्यज्ञानमतिदुस्तरमिति निरूप्य वसिष्ठबृहस्पतिप्रभृतीनां महर्षीणामपि काठिन्यं निरूपयता महर्षिपराशरेणाष्टकवर्गस्य प्राधान्यं निरूप्यते ।

तथा हि—

कर्मज्ञानविदा वेदो द्विधा यद्वत्तदाह्वये ।
होराशास्त्रं द्विधा प्रोक्तं संकीर्णनिश्चयात् ।[2]

अर्थाद्यथा वेदे कर्ममार्गो ज्ञानमार्गश्चेतिभागद्वयमुपलभ्यते । एमेवात्रापि होराशास्त्रे संकीर्णनिश्चयेति भागद्वय दरीदृश्यते । संकीर्णभाग एव पूर्वार्द्धस्तथा निश्चयभाग एवोत्तरार्द्धस्तत्रापि चाष्टकवर्ग एव निश्चयभागः । अतो यो भागद्वयं वेत्ति स एव दैवज्ञः ।

तथा हि—

यो वेत्ति सम्यगेतत्तु दैवज्ञः स उदाहृतः ।[3]

प्रथमोऽध्यायोऽत्राष्टकवर्गनाम्नैव निगदितः—

काशीसंस्करणे, षट्षष्टिसङ्ख्याकोऽध्यायोऽष्टकवर्गो नाम । पाठस्य प्रायः साम्यम् । भेदोऽपि वर्तते । यथा हि ।

सामान्यांशो विशेषांशो ज्योतिःशास्त्रं द्विधोदितम् ।
प्रोक्तः सामान्यभागस्तु निश्चयांशस्तु कथ्यते ।[4]

१. बृ० पा० उ० भ० १।१-१२ (मुम्बई-सं०)
२. बृ० पा० उ० भ० १।१४ (मुम्बई-सं०)
३. तत्रैव, उ० भ० १।१५
४. बृ० पा० ६६।१२ (काशी-सं०)

## एवं निरूप्याष्टकवर्गनिरूपणम्—

अष्टकवर्गविचारे पूर्वं लग्नकुण्डल्यां सूर्यादिग्रहाणां स्थित्यानुसारं तत्तत्स्थानाद्रेखानां विन्दूनाञ्च विचारो विहितः। अत्र विन्दवोऽशुभा रेखाश्च शुभा इति प्रतिपादितम् कुत्रचिच्च रेखा अशुभा बिन्दवः शुभा इत्यप्युपलभ्यते परं फलज्ञाने न व्यभिचारो यतो नाम भेद एवं केवलं विधिस्तु समान एव। किं तेन यद्येकत्र रेखास्थाने विन्दुर्नामान्यत्र विन्दुस्थाने रेखा स्यादिति भावः।

तदनन्तरञ्च रेखाबिन्दुयोगं विधाय त्रिकोणानुसारं शोधनं भवति। ततश्च-ग्रहाणामेकाधिपत्यविध्यानुसारं संशोधनम्। ततश्च पिण्डसाधनानुसारमेवायुर्दाय-विचारः।

गोचरेणाऽपि सूर्यादिग्रहाणां पृथक् पृथक् पितृमातृभ्रातृप्रभृतिकपदार्थानां कारकत्वाद्गोचरेण शनिग्रहचारप्रकारेण नक्षत्रेषु संक्रमणात्पितृभ्रातृकादिकानां निर्याणवर्षकथनपूर्वकं मृत्युयोगविचारः।

अनेनाष्टकवर्गेनैव निश्चितायुर्दायप्रकारेण दशाऽपि निरूपिता।
भाग्योदये विचारेऽप्यष्टकवर्गस्योल्लेखः।

**यथा हि—**

**'भावाष्टवर्गोत्थसमा हि तत्तद्ग्रहान्तरोत्थास्तु समादयः स्युः।'**[1]

अथ चायुर्दायवर्णनाध्याये सर्वासां प्रायो दशानां ह्रासोऽपि वर्णितः। परमष्टकवर्गस्य न ह्रासोऽपितु वृद्धिरेव प्रतिपादिता।[2]

अपि चोत्तरखण्डस्य पञ्चमेऽध्याये लोकयात्रावर्णननाम्नि चाष्टकवर्गम कृत्यैव फलन्यासः स्थापितः। तत्र नाभासादिकानां द्विग्रहाद्यानाञ्च राजयोगानामपि बलाबलमष्टकवर्गस्य शुभाशुभनुसारमेवोपलभ्यते।[3]

सारावल्यां यदुक्तं यदष्टकवर्गस्य विवेचनं यवनाचार्यैः कृतमति।

---

१. बृ० पा० उ० भा० १३।११, (मुम्बई-सं०)
२. तत्रैव ११।३१
३. तत्रैव ५।३

यथा हि—

उक्तो हि यवनवृद्धैरष्टकवर्गो निवेदयति पुंसां,
हेतुं शुभमशुभं वा प्रतिदिवसं सम्भवन्तमिह ।[1]

तन्नोचितम् । अष्टकवर्गस्य बृहत्पाराशरे नारदपुराणे च दर्शनात् जातकपारिजातकारेण तु स्पष्टमुद्घोषितं यदष्टकवर्गस्य मूलत्वं पाराशरीये एव होराशास्त्रे ।

श्रीवैद्यनाथकृतजातकपारिजाते पाराशरादिफलसाररसोपयाते ।
प्रस्तारभिन्नसमुदायकविन्दुशीलः । संकीर्तितस्तु सकलद्युचरप्रसादात् ।[2]

सुप्रसिद्धेन ज्योतिर्ग्रन्थानां लेखकेन तथा एस्ट्रोलोजिकलमेगजीननामकमासिकपत्रिकासम्पादकेनाङ्ग्लभाषायां लिखिते पुस्तकेऽष्टकवर्गनाम्नि बंगलोरवेंकटेशरमणनाम्ना विदुषा महान् महिमा प्रदर्शितोऽस्याष्टकवर्गस्य ज्योतिर्विज्ञाने । तेनास्य गरिमाऽनुभूतश्च ।[3]

तेनास्यायुर्दायविषये विशुद्धत्वं नाङ्गीकृतम् ।

तेनायं हेतुरत्र प्रदर्शितः यदस्य कठिनविषयस्य व्याख्यानं विभिन्नं दृश्यते पूर्वाचार्यप्रतिपादितम् । अस्य शुद्धव्याख्यानस्य नितरामावश्यकता वरीवर्त्ति ।[4]

अत एवाचार्यशिरोमणिना वराहमिहिरेण बृहज्जातकेऽष्टकवर्गकृत आयुर्दायो नाङ्गीकृतः । अस्यायुर्दायवर्णनस्याभावोऽत्रेति भावः । सारावलीकारेणाऽपि नोल्लेखो विहितोऽस्य । अपि च नारदपुराणेऽस्यायुर्दायस्य वर्णनं नोपलभ्यते । फलदीपिकाकारेण मन्त्रेश्वरेणाप्ययमेवानुसृतो मार्गः । परञ्च शम्भुहोराप्रकाशकारेणाचार्यपुञ्जराजेन चास्याष्टकवर्गस्य विस्तृत उपन्यासो विहितः ।

---

१ सीताराम झा, सारावली ५३।१, मास्टर खेलाड़ीलाल एण्ड सन्स, बनारस ।
२. कपिलेश्वर शास्त्री, जातक-पारिजातः १०।७२, चौखम्बा संस्कृत सीरिज, बनारस ।
३. बी० वी० रमण:, अष्टकवर्ग सिस्टम आफ प्रिडिक्शनज, पृ० ३ रमण पब्लिकेशनज. बंगलोर ।
४. तत्रैव, पृ० १५५ ।

एतदधिकृत्यायुर्दायोऽपि स्वीकृतः। फलविन्यासोऽपि च भूयानत्र दृश्यते।[१] अस्य भेदद्वयं भिन्नाष्टकवर्गसमुदायाष्टकवर्गरूपेण।

सप्तग्रहाणां लग्नस्य पृथक् पृथक् विन्दुरेखानयनप्रकारो भिन्नाष्टकवर्गे पुनश्च तेषां सर्वेषां रेखाविन्दूनां योगमधिकृत्य पुनर्द्वादशभावानुसारं त्रिकोणैकाधिपत्यशोधनपुरः सरं यत्र महान् विन्यास उपलभ्यते स समुदायाष्टकवर्ग इति। फलनिरूपणञ्च शोधनं विना रेखाविन्दुसंख्यानुसारमपि दृश्यते।

त्रिकोणैकाधिपत्यशोधने च यो विधिरत्र प्रदर्शितस्तस्यार्वाचीनाचार्यैर्भिन्नप्रकारोऽपि वर्णितः। येनात्र संदेहावसरः। तस्य निराकरणं केवलमनुभवप्रकारेणैव कर्तुं शक्यते। एतच्च प्रतिपादितं सुप्रसिद्धज्यौतिर्ग्रन्थस्य ज्योतिषरत्नाकरस्य कर्त्रेति भावः।[२]

अत्रायमपि विचारावसरो दृश्यते यच्चाष्टकवर्गस्य भावानुसारमथ वा राश्यानुसारं रेखाविन्दुविन्यासः कर्त्तव्यः। अत्र बी० बी० रमणमहोदयेन राश्यनुसारमेवोचितमिति वर्णितं न तु भावानुसारमिति।[३]

पूर्वं रेखानयनप्रकारो निरूप्यतेऽत्र सूर्यादिग्रहाणां लग्नस्य च क्रमात्।

## (ख) सूर्यादिग्रहाणां पृथक् पृथक् अष्टकवर्गनिरूपणम्।[४]

### सूर्यस्याष्टकवर्गः—

(सूर्यकुण्डल्यामिति भावः)[४]

सूर्यः स्वस्थानात्प्रथमद्वितीयचतुर्थसप्तमाष्टमनवमदशमैकादशेषु भावेषु रेखाप्रदः।

चन्द्रात्तृतीयषष्टदशमैकादशेषु रेखाप्रदः।

---

१. पुञ्जराजः, शम्भुहोराप्रकाशः अष्टमनवमौ अध्यायौ, गङ्गा विष्णु श्रीकृष्णदास, लक्ष्मी- वेंकटेश्वर स्टीम् प्रेस, मुम्बई।

२. देवकीनन्दनसिंह, ज्योतिषरत्नाकरः, प्रथमखण्डः, पृ० ४८१, श्रीगिरिजाशंकरसिंह, माउर जिला मुंगेर।

३. बी० बी० रमण, अष्टकवर्ग सिस्टिम आफ प्रिडिक्शनज, भूमिका, पृ० २, रमण पब्लिकेशन्ज, बंगलोर।

४. अत्र बृ० पा० उ० भा० १।१९-७४ श्लोका द्रष्टव्याः (मुम्बई-सं०)

भौमात्सूर्यवदेव। बुधाच्च तृतीयपञ्चमषष्ठनवमदशमैकादशद्वादशेषु। गुरुसकाशाच्च पञ्चमषष्ठनवमैकादशेषु। शुक्राच्च षष्ठसप्तमद्वादशेषु शनेश्च सूर्यवदेव। लग्नाच्च तृतीयचतुर्थषष्ठदशमैकादशद्वादशेषु। यत्र रेखास्तत्र शुभत्वं यत्र बिन्दवस्तत्राशुभत्वम्।

येषु भावेषु रेखाविन्यासो न निर्दिष्टस्तत्र बिन्दुविन्यास इति विशेषेणावगन्तव्यम्। अष्टकवर्गे सर्वत्रायमेव प्रकारः।

**चन्द्राष्टकवर्गः—**

चन्द्रस्तु स्वस्थानाच्च प्रथमतृतीयषष्ठसप्तमनवमदशमैकादशेषु रेखाप्रदः।
मङ्गलाच्च द्वितीयतृतीयपञ्चमषष्ठदशमैकादशेषु,
बुधाच्च प्रथमतृतीयचतुर्थपञ्चमसप्तमाष्टमदशमैकादशेषु,
बृहस्पतितस्तु प्रथमचतुर्थसप्तमाष्टमदशमैकादशद्वादशेषु,
शुक्रात्तु तृतीयचतुर्थपञ्चमसप्तमनवमदशमैकादशेषु,
शनिसकाशात्तृतीयपञ्चमषष्ठैकादशेषु,
लग्नात्तु तृतीयषष्ठदशमैकादशेषु,
सूर्यसकाशात्तृतीयषष्टसप्तमाष्टमदशमैकादशेषु च रेखाप्रद इति।

**मङ्गलाष्टकवर्गः—**

मङ्गलश्च स्वस्थानात्प्रथमद्वितीयचतुर्थसप्तमाष्टमदशमैकादशेषु,
बुधात्तु तृतीयपञ्चमषष्ठैकादशेषु,
गुरुतस्तु षष्ठदशमैकादशद्वादशेषु,
शुक्रात्तु षष्ठाष्टमैकादशद्वादशेषु,
शनितस्तु प्रथमचतुर्थसप्तमाष्टमनवमदशमैकादशेषु,
लग्नात्प्रथमतृतीयषष्ठदशमैकादशेषु,
सूर्यात्तृतीयपञ्चमषष्ठदशमैकादशेषु,
चन्द्रात्तृतीयषष्ठैकादशेषु च रेखाप्रद इति।

**बुधाष्टकवर्गः—**

बुधश्च स्वस्थानात्प्रथमतृतीयपञ्चमषष्ठनवमदशमैकादशद्वादशेषु,
गुरुतस्तु षष्ठाष्टमैकादशद्वादशेषु,

शुक्राच्च प्रथमद्वितीयतृतीयचतुर्थपञ्चमाष्टमनवमैकादशेषु,
शनितस्तु प्रथमद्वितीयचतुर्थसप्तमाष्टमनवमदशमैकादशेषु,
लग्नाच्च प्रथमद्वितीयचतुर्थषष्ठाष्टमदशमैकादशेषु,
सूर्यतस्तु पञ्चमषष्ठनवमैकादशद्वादशेषु,
चन्द्राच्च द्वितीयचतुर्थषष्ठाष्टमदशमैकादशेषु,
मङ्गलात्तु प्रथमद्वितीयचतुर्थसप्तमाष्टमनवमदशमैकादशेषु च, रेखाप्रदः।

गुर्वष्टकवर्गः

गुरुः स्वस्थानात्प्रथमद्वितीयतृतीयचतुर्थसप्तमाष्टमशमैकादशेषु,
शुक्रात्तु द्वितीयपञ्चमषष्ठनवमदशमैकादशेषु,
शनिपरतस्तु तृतीयपञ्चमषष्ठद्वादशेषु,
लग्नाच्च प्रथमद्वितीयचतुर्थपञ्चमषष्ठसप्तमनवमदशमैकादशेषु,
सूर्यात्तु प्रथमद्वितीततृतीयचतुर्थसप्तमाष्टमनवमदशमैकादशेषु,
चन्द्राद्द्वितीयपञ्चमसप्तमनवमैकादशेषु,
मङ्गलाच्चप्रथमद्वितीयचतुर्थसप्तमाष्टमदशमैकादशेषु,
बुधात्तु प्रथमद्वितीयचतुर्थपञ्चमषष्ठनवमदशमैकादशेषु च, रेखाप्रदः।

शुक्राष्टकवर्गः—

शुक्रः स्वस्थानात्प्रथमद्वितीयतृतीयचतुर्थपञ्चमाष्टमनवमदशमैकादशेषु,
शनितश्च तृतीयचतुर्थपञ्चमाष्टमनवमदशमैकादशेषु,
लग्नतस्तु प्रथमद्वितीयतृतीयचतुर्थपञ्चमाष्टमनवमैकादशेषु,
सूर्यादष्टमैकादशद्वादशेषु,
चन्द्राच्च प्रथमद्वितीयतृतीयचतुर्थपञ्चमाष्टमनवमैकादशद्वादशेषु,
मङ्गलात्तु तृतीयचतुर्थषष्ठनवमैकादशद्वादशेषु,
बुधाच्च तृतीयपञ्चमषष्ठनवमैकादशेषु,
बृहस्पतिसकाशात्तु पञ्चमाष्टमनवमदशमैकादशेषु च रेखाप्रदः।

शन्यष्टकवर्गः—

शनिस्वस्थानात्तृतीयपञ्चमषष्ठैकादशेषु,

लग्नतस्तु प्रथमतृतीयचतुर्थपष्ठदशमैकादशेषु,
सूर्याच्च प्रथमद्वितीयचतुर्थसप्तमाष्टमदशमैकादशेषु,
चन्द्रतस्तु तृतीयपष्ठैकादशेषु,
मङ्गलात्तृतीयपञ्चमपष्ठदशमैकादशद्वादशेषु,
बुधाच्च षष्ठाष्टमनवमदशमैकादशद्वादशेषु,
गुरुतस्तु पञ्चमपष्ठैकादशद्वादशेषु,
शुक्राच्च पष्ठैकादशद्वादशेषु, रेखाप्रदः प्रोक्तः ।

लग्नाष्टकवर्गः—

लग्नात्तु स्वस्थानात्तृतीयपष्ठदशमैकादशेषु,
सूर्यात्तु तृतीयचतुर्थपष्ठदशमैकादशद्वादशेषु,
चन्द्रतस्तु तृतीयपष्ठदशमैकादशद्वादशेषु,
मङ्गलाच्च प्रथमतृतीयपष्ठदशमैकादशेषु,
बुधात्प्रथमद्वितीयचतुर्थपष्ठाष्टमदशमैकादशेषु,
गुरुपरतस्तु प्रथमद्वितीयचतुर्थपञ्चमपष्ठसप्तमनवमदशमैकादशेषु,
शुक्राच्च प्रथमद्वितीयतृतीयचतुर्थपञ्चमाष्टमनवमेषु,
शनिसकाशात्प्रथमतृतीयचतुर्थपष्ठदशमैकादशेषु ।
रेखाप्रदं प्रोक्तम् ।

रेखायोगश्च ग्रहाणां लग्नस्य चैवं विद्यते सूर्यस्य ४८, चन्द्रस्य ४९, भौमस्य ३९, बुधस्य ५४, गुरोः ५६, शुक्रस्य ५२, शनेः ३९, लग्नस्य ५२, क्रमाज्ज्ञेयः यत्र रेखाविन्यासो नोक्तस्तत्र विन्दुविन्यासो विधेयः । रेखाः शुभा प्रोक्ताः विन्दुश्चाशुभइति ।

(ग) अष्टकवर्गीययायुर्दायः—

(अ) त्रिकोणशोधनप्रकारः[1]

फलस्य सूक्ष्मानयनार्थं त्रिकोणशोधनप्रकारोऽत्र निरूप्यते ।

---

१. वृ० पा० पू० भा० १७ अध्यायः । (मुम्बई-सं०)

प्रत्येक राशेस्त्रिकोणशोधनं भवति मेषस्य यथा मेषसिंहधनुष्का वृषस्य वृषकन्यामकरा इति ।

(१) त्रिकोणराशिषु न्यूनतमां सङ्ख्यां राशित्रयात् न्यूनीकुर्यात् । शेषञ्च स्वस्वस्थाने स्थापयेत् । यथा मेषे सङ्ख्या २ सिंहे ४ धनुषिच ६ न्यूनीकृते मेषे ० सिंहे २ धनुषि च ४ सङ्ख्या भवति ।

(२) यद्येकत्र शून्यसङ्ख्या विद्यते तर्हि राशित्रयात् न न्यूनीकरणमपि तु यथापूर्वमेव स्यात् । यथा मेषे ० सिंहे ४ धनुषि ६ तदैवमेव मेषे ० सिंहे ४ धनुषि च ६ भवति नास्ति परिवर्तनमिति भावः ।

(३) यदि राशित्रये सङ्ख्या तुल्या विद्यते तर्हि सर्वत्र शून्यं स्थाप्यम् । यथा मेषे ५ सिंहे ५ कन्या ५ तर्हि मेषे ० सिंहे ० धनुषि च ० इति भावः ।

## (इ) एकाधिपत्यशोधनम्—[1]

त्रिकोणशोधनान्तरमेकाधिपत्यशोधनमाह ।

अत्र यद्येको ग्रहो राशिद्वयाधिपतिस्तदैवैकाधिपत्यशोधनं नान्यथा । अनेन सूर्यचन्द्रयोः कर्कसिंहराश्योर्नैकाधिपत्यशोधनमिति भावः ।

एकाधिपत्यशोधनं निम्नप्रकारेण ज्ञातव्यम् ।

(१) द्वावेव राशी सग्रहौ तथा शोधनाभावः ।

(२) द्वावेव राशी ग्रहशून्यौ फलञ्च तुल्यं तदोभयत्र शून्यं फलं ग्राह्यम् ।

(३) यदि द्वावेव ग्रहशून्यौ फलञ्च भिन्नन्तदा न्यूनमधिकान्न्यूनीकरणीयम् । यथा मीने १ धनुषि च ३ तदा धनुष्कान्न्यूनमेकसङ्ख्यायां त्रिसङ्ख्यातो न्यूनीकृतायां फलं २ सङ्ख्यां धनुषि १ मीने च स्थापयेदिति भावः ।

(४) राशिद्वये चैकत्र फलमन्यत्र फलाभावस्तदापि शोधनाभावः ।

(५) एको राशिः स ग्रहोऽन्यो ग्रहः फलञ्च तुल्यन्तदा ग्रहशून्ये फलमपि शून्यं सग्रहे च यत्फलं तदेव ग्राह्यम् । यथा शनियुते मेषफलं ५ ग्रहशून्ये च वृश्चिके फलं ५ तदा तथैव मेषे ५ फलं स्थाप्यं परं वृश्चिके च शून्यं ० स्थाप्यमिति भावः ।

---

१. बृ० पा० पू० भा० १८ अध्यायः सकलः (मुम्बई-सं०)

(६) एकस्मिन् राशौ सग्रहे फलं न्यूनमन्यत्र ग्रहशून्ये राशौ फलं चाधिकन्तदा न्यूनमधिकान्न्यूनीकृत्य तत्र स्थापयेत् न्यूनञ्च यथापूर्वं सग्रहे राशौ स्थाप्यम्। यथा वृषः सग्रहः फलञ्च २ तथा तुला ग्रहशून्या फलञ्च ५ तदा २ सङ्ख्यां ५ सङ्ख्यातो न्यूनीकृत्य ३ सङ्ख्यां तुलायां २ सङ्ख्याञ्च वृषे स्थापयेदित्यभिप्रायः।

(७) यद्येकराशौ फलमधिकं ग्रहश्चापि स्थितस्तथा चान्यत्र फलमपि न्यूनं ग्रहोऽपि नास्ति तदा ग्रहशून्ये न्यूनफले शून्यं स्थाप्यन्तथा सग्रहे फलाधिक्ये यथागतं फलमेव स्थाप्यम्।

यथा सग्रहे वृश्चिके फलं ५ मेषे च ग्रहशून्ये फलं १ तदा वृश्चिके ५ स्थाप्यन्तथा मेषे च शून्यं० फलं स्थाप्यमिति स्पष्टम्।

## (उ) गुणकध्रुवाङ्कानयनप्रकारः[1]

एकाधिपत्यशोधनानन्तरं फलं राशिगुणकेन गुणीकुर्यात्। गुणङ्काकाश्च ७, १०, ८, ४, १०, ५, ७, ८, ६, ५, ११, १२ क्रमान्मेषादिराशीनां ज्ञेयाः।

सर्वसङ्ख्यायोगे च राशिगुणकपिण्डो भवति।

एवमेव ग्रहानपि स्वग्रहगुणकांकेन गुणीकुर्यात्।

५, ५, ८, ५, १०, ७, ५ एते गुणकांकाश्च क्रमात्सूर्यादिग्रहाणां प्रोक्ताः सन्ति। सर्वसङ्ख्यायोगश्च ग्रहगुणकपिण्डो भवति।

अयं राशिपिण्डो ग्रहपिण्डश्च सूर्यादीनां ग्रहाणां पृथक्-पृथक् प्रत्येकाष्टकवर्गे भवति।

## (ऋ) ग्रष्टकवर्गादायुष आनयनप्रकारः[2]

ग्रहराशिपिण्डसङ्ख्ययोर्योगं कुर्यात् यथा ग्रहगुणकपिण्डः ६३ राशिग्रहगुणकपिण्डश्च ११२ योगे २०५ इति भावः।

एकीकृतं राशिग्रहपिण्डसङ्ख्यां त्रिंशद्भिः (३०) विभजेत् लब्धञ्च वर्षमा-

---

१. वृ० पा० पू० भा० ६९ अध्यायः सकलः (मुम्बई-सं०)

२. तत्रैव उ० भा० १०।१३-१५।

सादिनादिकञ्चायुर्दायः। अत्र वर्षसङ्ख्या द्वादशाधिका चेत्तर्हि द्वादशसङ्ख्यया विभजेत् शेषां वर्षसङ्ख्यां गृह्णीयादिति भावः।

सर्वाष्टकायुर्दाये तु त्रिंशत्सङ्ख्यास्थाने सप्तविंशतिसङ्ख्यया विभजेदिति विशेषः।

## (घ) अष्टकवर्गफलकथनम्—[1]

### (अ) अष्टकवर्गे ग्रहभावाभ्यां विचार्यवस्तुनिर्देशः।

अष्टकवर्गे सूर्याच्चात्मनः, स्वभावस्य: शक्तेः, पितुः सुखदुःखस्य विचारः प्रकर्तव्यः।

चन्द्रात्तु मनसो बुद्धेः, प्रसन्नतायाः, मातुश्च विचारो विधेयः।

भौमाच्च बलस्य गुणानां भूमेः भ्रातॄणाञ्च ज्ञानं कार्यम्।

बुधात्तु वाणिज्यस्याजीविकायाः मित्राणाञ्च विचारः कर्तव्यः।

बृहस्पतिसकाशाच्च देहपुष्टेर्विद्याया धनसम्पत्तेः पुत्राणाञ्च ज्ञानं विधेयमिति।

शुक्रात्तु विवाहस्य भोगानां वाहनादिकस्य, वेश्यायाः स्त्रीणाञ्च विचारो निगदितः।

शनिसकाशात्तु जीवनोपायस्यायुर्दायस्य, दुःखशोकमहद्भयानां सर्ववस्तूनां नाशस्य मृत्योश्च विचारः प्रोक्तः।

अनेनैव प्रकारेणैषां मृत्युकालं शनिगोचरेण निरूपयति। अयं भावोऽष्टकवर्गे त्रिकोणैकाधिपत्यशोधनान्तरं शेषसङ्ख्यां राशिग्रहगुणकैर्गुणीकृत्य सप्तविंशतिसङ्ख्ययाविभजेत् शेषसङ्ख्या नक्षत्रसङ्ख्याक्रमादश्विन्यादिभ्योर्भवति तस्मिन्नक्षत्रे गोचरेण शनिनाक्रान्ते तस्य भावस्य हानिः प्रोक्ता।

सूर्यचन्द्रमङ्गलबुधगुरुशुक्रेभ्यः क्रमात् पितुर्मातुर्भ्रातुः पुत्रस्य मित्रस्य मातुलेयस्य ज्ञानपुण्ययोः स्त्रियश्च पूर्वोक्तप्रकारेण शनिनाक्रान्ते मरणादिकं प्रोक्तम्।

## (इ) सूर्यादिग्रहाणां पृथक् पृथक् फलकथनम्।

### पितृमातृभ्रातृपुत्रस्त्रीकुटुम्बादिकस्य निर्याणविचारश्च।

---

१. बृ० पा० पू० भा० २० अध्यायः सकलः (मुम्बई-सं०)

## (१) सूर्यफलम्—

जन्मलग्नस्थसूर्यान्नवमस्थानं पितुः प्रोक्तन्तस्मादपि पूर्वोक्तप्रकारेण शनिनाक्रान्ते पितृपितृव्यादीनां क्लेशमरणादिकं ज्ञेयम्।

गुणकादिप्रकारेण प्राप्तनक्षत्रसङ्ख्यातस्त्रिकोणनक्षत्रेषु (नक्षत्रत्रिकोणज्ञानञ्च नवसङ्ख्यया भवति यथा अश्विनी चेत्तदा, अश्विनी, मघा, मूला, एवमेव भरणी चेत्तदा भरणी, पूर्वाफाल्गुनी, अनुराधेति बोध्यम्) शनिनाक्रान्तेषु तदापि पूर्वोक्त पितृकादीनां कष्टादिकं ज्ञेयम्।

विशेषः—

पूर्वोक्तनक्षत्रे त्रिकोणे शनिनाक्रान्ते यदि सूर्याच्चतुर्थस्थो राहुः शनिर्भौमो वा भवेत्तदापि पितृमरणं प्रोक्तम्।

अथ च लग्नाच्चन्द्राच्च नवमस्थाने पापयुतेन दृष्टेन वा शनिनाक्रान्ते पितृमरणम्।

लग्नाच्चतुर्थभावेशदशायामपि पितृमरणं भवितुमर्हतीति सकलं बुद्धया विचार्यम्।

अत्रैव प्रसङ्गात्पितृसुखानुकूल्यमपि निरूपयति।

लग्नाच्चतुर्थेशदशायां सुखस्याप्यधिक्यम्। चतुर्थेशो लग्नादेकादशे वा लग्नस्थ एव स्यादथ वा चन्द्रादेकादशे दशमे वा भवेत्तदा जातकः पितुराज्ञाकरो भवति।

पितृजन्मतो यदि तृतीयराशिलग्ने दशमराशिलग्ने वा जन्म भवेत्तदा पितृधनभोगी पितृतुल्यगुणश्च जातको भवति। यदि पितृलग्नेशः पुत्रस्य लग्ने स्थितो भवति तदा पितृतोऽपि श्रेष्ठो भवति।

सूर्याष्टकादन्यदपि विचार्यं वितनोति।

सूर्याष्टकवर्गे यत्र शून्यसङ्ख्याधिका स्यात्तत्तुल्यराशौ सूर्याक्रान्ते वर्षे मासे वा विवाहादिकार्यं त्याज्यम्। (अत्र वर्षे तद्राशौ गुरुणाक्रान्ते सतीति बोध्यम्। सूर्यस्य मासमेकमेवैकराशाववस्थानादिति)

यत्र राशौ रेखाधिक्यन्तत्तद्राशौ गुरुणाक्रान्ते च वर्षे सूर्ययुते च मासे शुभं विवाहादिकं कार्यं विधेयमेवेति ज्ञेयम्।

## [२] चन्द्रफलम्—

पूर्वोक्तप्रकारेण यत्र राशौशून्यन्तत्र चन्द्रयुते सति शुभकार्यविरोधः। यत्र रेखाधिक्यन्तत्र चन्द्रे सति तु शुभादिकमवश्यं विनयमिति स्वतः स्पष्टम्।

पूर्ववच्चन्द्रपिण्डं सप्तविंशतिभिर्विभजेच्छेषसङ्ख्याक्रमेण नक्षत्रे शनिनाक्रान्ते सति मातृमरणम्। अथ वा तन्नक्षत्रत्रिकोणनक्षत्रेषु शनियुतेषु मातृमरणमिति सर्वं पूर्ववद्बोध्यम्।

चन्द्राल्लग्नाच्चापि चतुर्थे शनौ भौमे वा गोचरेणाक्रान्ते सत्यपि मातृहानिः पितृहानिवद्विजानीयात्।[1]

## (३) मङ्गलफलम्—

मङ्गलाष्टकवर्गाद्भ्रातृणा विक्रमस्य धैर्यस्य च विशेषविचारो निगदितः।

मङ्गलस्थराशेस्तृतीयस्थानमपि भ्रातृणां विचारस्थानमिति विशेषेण ज्ञेयम्। तद्राशेः पूर्ववत्पिण्डकादिना समायाते नक्षत्रे च शनिनाक्रान्ते सति भ्रातृमरणं कष्टं वा भवति।

मङ्गलाष्टकवर्गे च यत्र राशौ शुभफलाधिक्यन्तत्र चारवशाद्भौमेनाक्रान्ते सति भ्रातृस्त्रीभूमिकादीनां सुखलाभौ भवतः। भौमे च निर्बले सति भ्रातृणां दीर्घायुर्योगो भवति। यत्र च राशौ फलशून्याधिक्यन्तत्र भौमेन युते सति भ्रातृकादीनां कष्टं वाच्यम्।

## (४) बुधफलमाह—

बुधाच्चतुर्थभावे कुटुम्बमातुलमित्रधनपुत्रादीनां विचारो निगदितः। बुधात्तु पञ्चमे भावे मन्त्रविद्यालिपिबुद्धादीनां विचारो भवति।

अत्रापि पूर्ववत्पिण्डादिकेन समायाते नक्षत्रे शनिनाक्रान्ते सति कुटुम्बादीनां सुखदुःखादेर्विचारो विधेयः।

## (५) गुरुफलमाह—

---

१. अयं पाठः काशी-संस्करणे नास्ति।

गुरुयुतभावात्पञ्चमे स्थाने ज्ञानधर्मपुत्रधनादिकानां ज्ञानं ज्ञेयम्। तत्र शुभरेखा फलाधिक्ये सन्ततिसुखाधिक्यमन्यथा सन्ततिसुखाभावः।

बृहस्पतिसकाशात्पचमस्थाने यावती रेखासङ्ख्या स्यात्तादृशी सन्ततिसङ्ख्या भवति परमत्रेदमपि विचार्यं यद्बृहस्पतिः शत्रुराशिस्थो नीचस्थो वा न स्यादिति। नीचस्थे शत्रुस्थे च सन्ततिसुखमप्यल्पमिति भावः।

अथवा गुरुतः पञ्चमेशस्य नवांशसङ्ख्यासदृशी सन्ततिसङ्ख्या ज्ञेया।

पूर्ववद्गुरुतः पञ्चमभावस्य पिण्डादिकं गुणीकृत्य २७ सङ्ख्यया विभजेच्छेषसङ्ख्याके नक्षत्रेऽथ वा तत्त्रिकोणनक्षत्रेषु शनिनाक्रान्तेषु सन्ततिकष्टं विद्याधर्मयोरपि हानिर्वाच्या। गुर्वष्टकवर्गे द्वितीयपञ्चमद्वादशस्थितैः पापैरपि सन्ततिक्षयो वाच्यः।

पञ्चमे गुरुणायुतेऽल्पसन्ततियोगः प्रोक्तः।

## (६) शुक्रफलम्—

शुक्राच्च यत्र यत्र स्थाने शुभं रेखाफलन्तत्र तत्र गते च शुक्रे धनस्त्रीभूमिसुखलाभश्च भवति। अन्यथा त्वशुभबिन्दुयुतेषु स्थानेषु कष्टं वाच्यम्। शुक्रात्सप्तमभाव एव स्त्रीभावोऽतः पूर्वपिण्डकादिप्राप्तनक्षत्रे तत्त्रिकोणनक्षत्रेषु वा शनिनाक्रान्तेषु स्त्रीधनददिकस्य हानिः कष्टं वा प्रोक्तम्।

शुक्रात्सप्तमेशनवांशसङ्ख्यया दारसङ्ख्या ज्ञेया।

शनिनवांशे शनियुते शनिक्षेत्रस्थे नीचांशे पापयुते वा शुक्रे नीचस्त्रीसंयोग इति

भौमांशे भौमक्षेत्रस्थे भौमेन युते दृष्टे वा शुक्रे परदाररतो भवति।

सप्तमभावे शनिनवांशे भौमनवांशे वा शनिभौमदृष्टे च जातकस्य भार्या जारिणी दासी वा भवति।

सप्तमेशेऽपीदमेव फलं प्रोक्तम्।

पापारूढांशगे चन्द्रे सप्तमे द्वादशगेऽपि वा पापाक्रान्ते च शुक्रे स्त्रीहेतोर्जातकः शुचमाहवेत्।

अथ च शुक्रनवांशसदृशी सप्तमेशस्य गुणान्विता भार्या भवति।[1]

---

१. एवां विशेषप्रकरणानां नोल्लेखः काशी-संस्करणे।

## (७) शनिफलम्—

शन्यष्टकवर्गाद्विशेषविचारः प्रोक्तः। शनिरेवायुष्यस्वामी। शनेरष्टमं स्थानमेवायुष्यमृत्यय्योः स्थानमित्यभिप्रायः। शन्यष्टकवर्गे लग्नादारभ्य शनिपर्यन्तं रेखायोगो विधेयः। यादृशी सङ्ख्या स्यात्तादृशी सङ्ख्यावर्षे कष्टम्। अथ वा शनितो लग्नपर्यन्तं रेखायोगसङ्ख्यानुसारे वर्षे कष्टम्। अथ वा द्वयोर्योगसङ्ख्यानुसारं प्राप्तवर्षे कष्टं प्रोक्तम्।

पूर्ववत् शनेरष्टमराशिपिण्डप्राप्तसङ्ख्याके नक्षत्रेऽथ वा तत्त्रिकोणेषु नक्षत्रेषु शनिनाक्रान्ते सत्सु जातकस्य स्वस्य मरणं भवति। यदि विंशोत्तर्यादिका दशा शुभा तदा मृत्योरभावः केवलं कष्टमेव वाच्यम्।

एवमेव यत्र शुभारेखास्तत्र गोचरेण शनिनायुते सति फलं शुभमन्यथा शुभविन्दुयुतेषु स्थानेषु शनिना युते सत्सु कष्टं ज्ञेयम्।

अशुभविन्दुयुतेषु स्थानेषु शनियुतेसु तथा तत्र यदि रविचन्द्रावपि स्थितौ स्यातान्तदा मरणं वाच्यम्।

अत्र भौममधिकृत्यापि कश्चिद्विशेषः—

भौमतो लग्नान्तं लग्नतो भौमान्तं रेखायोगानुसारं प्राप्तवर्षेऽपि शस्त्रानलादिककृतं कष्टम्। एवं शनिभौमराहुभिरपि विचार्यम्।

## (ङ) सर्वाष्टकवर्गविचारः—[1]

### (अ) सर्वाष्टकवर्गलक्षणम्। फलकथनप्रकारश्च—

अथ च सर्वाष्टकवर्गस्य निरूपणं क्रियते। अस्यैव समुदायाष्टकवर्ग इत्यपरं नाम।

जन्मकुण्डलीवत्कोष्टकं निर्माय ग्रहादिकमपि तथैव संस्थाप्य द्वादशकोष्ठेषु रेखाविन्दुसङ्ख्यां स्थापयेत्स एव समुदायाष्टकवर्ग इत्युच्यते।

अत्र विशेषमप्याह। दशमस्थानस्थितिरेखासङ्ख्यातश्चैकादशस्थानरेखासङ्ख्याधिका भवेत्तथैकादशस्थानरेखासङ्ख्यातस्तु द्वादशभावरेखासङ्ख्या न्यूना

---

१. बृ० पा० पू० भा० विंशोऽध्यायः (मुम्बई-सं०)

स्यादेवञ्च द्वादशस्थानरेखा सङ्ख्यातश्च लग्नस्थानरेखासङ्ख्या चाधिका भवेत्तदा मानवः सुखी धनी मानी यशस्वी च भवति।

राशीनां भागचतुष्टयं सव्यक्रमेण कारयेत्।

राशित्रयं (लग्नद्वादशैकादशराशयः) पूर्वदिगुच्यते।

दशमनवमाष्टमराशयो दक्षिणा दिग् ज्ञेया चतुर्थतृतीयद्वितीयराशयश्चोत्तरा दिक् प्रोक्ता।

सप्तमषष्ठपञ्चराशयश्च पश्चिमा दिगुच्यते। यत्र यत्र राशिषु फलाधिक्यन्तत्तद्गाद्यनुसारं तत्तद्दिशि शुभं वाच्यं यत्राशुभन्तद्दिश्यशुभं वाच्यम्।

सूर्यादिग्रहाष्टकवर्गवल्लग्नाष्टवर्गेऽपि लग्नपिण्डादिकप्राप्तसङ्ख्याके नक्षत्रे तत्त्रिकोणनक्षत्रेषु वा शनिना युतेषु तत्तद्भावफलहानिरिति भावः।

एवमेव मीनराशित आरभ्य कुम्भान्तं राशिचतुष्टयेन भागत्रयं कुर्यात्तेन च वयसो भागत्रयं बालयौवनवार्धक्यरूपं विजानीयात्। अर्थात् मीनमेषवृषमिथुनानि बाल्यावस्था कर्कसिंहकन्यातुलाख्या यौवनम्। वृश्चिकधनुर्मकरकुम्भश्च वार्धक्यम्। यत्र यत्र शुभफलाधिक्यन्तत्र तत्र शुभफलमपि ज्ञेयं यात्राशुभफलन्तत्राशुभफलमेव वाच्यम्।

यदि गुरुश्च स्वराशिस्थो राहुयुतः स्यात्ततश्च त्रिकोणेऽथ वा लग्ने च गोचरेण शनिना युते सति कष्टं वाच्यम्।

लग्नाच्चन्द्राच्च त्रिंशत्संख्याके द्रेष्काणे गुरौ सति तद्द्रेष्काणतस्त्रिकोणे तद्द्रेष्काणेशराशितो वा त्रिकोणे शनिनाक्रान्ते सति विवादः परदेशगमनं कष्टञ्च भवति।

लग्नादष्टमेशस्य द्वादशांशस्वामितस्त्रिकोणे यदा राहुर्गोचरेणायाति तथाष्टमेशतस्त्रिकोणे च सूर्ययुते सति मरणं भवति।

अथवा राहोः सूर्यस्य कलापिण्डादिकं विधाय ३९ सङ्ख्यया गुणीकुर्यात्। चक्रलिप्ता विहृत्य यल्लभ्यते तेन सूर्यकलापिण्डो युक्तः कार्यः यस्य राश्यादिकं कृत्वा तत्समो यदा सूर्यो भवति तदा मृत्युर्वाच्य इति गणनाक्रमः।

अष्टमभावद्वादशांशराशितस्त्रिकोणसूर्येण युतेऽथवाष्टमभावेशात्त्रिकोणे

सूर्यादियुते सति षष्ठाष्ठमद्वादशेशानां स्फुटसदृशे शनिनायुते सति मरणं वाच्यम्। अथ वा षष्ठाष्टम द्वादशेभ्यस्त्रिकोणे च शनिना युते सति मृत्युर्ज्ञेयः।

अष्टमभावेशग्रहात्त्रिकोणे शनिना युतेऽथा वाष्टमेशनवांशात्त्रिकोणे च शनिना सुते सति वा स्वल्प स्वल्परेखोद्भवे वासरे मरणं ज्ञेयम्।

अथ च जन्मलग्नस्य चन्द्रलग्नस्य वा चतुःषष्टितमे नवांशे चन्द्रेण युते मृत्युजन्माङ्गनीचोदये शून्यफलराशौ च दुःष्टग्रहदशायां वा मृत्युयोगः।

## (इ) रेखाफलकथनम्। शान्त्युपापवर्णनञ्च।[1]

### रेखायोगानुसारं फलमाह।

तत्र भावे त्रिंशत्सङ्ख्याधिकारेखास्तत्र शुभाधिक्यम्। यत्र पञ्चविंशतित-स्त्रिंशदन्तं मध्यमम्। न्यूना रेखाः कष्टप्रदाः।

शुभफलान्वितेष्वेव राशिषु शुभकार्याणि कुर्यात्।

अशुभफलान्वितान्राशीन्, परित्यजेदेव।

लग्नं यदि कलाधिक्ययुतन्तदा जातको भोगवानर्थवांश्च भवति। लग्नं दुर्बलञ्चेत्तदा दारिद्रयम्।

द्वितीयस्थानस्वामिदिशि धनप्राप्तिः। अष्टमेशदिशि मृत्युस्थानम्।

यत्राष्टरेखाः सन्ति स राशिर्विशेषेण शुभप्रदः। षड्पञ्चसप्तरेखायुता भावा अपि शुभाः। परञ्चैकाद्वितृचतुःसङ्ख्याका रेखायुता भावा न शुभप्रदा इति स्पष्टम्।

यदि रेखा अपि चतुःसङ्ख्याका विन्दवश्चापि चतुःसङ्ख्याकास्तदा फल मपि मिश्रं न शुभं नाशुभमिति।

एक द्वित्रियुता भावास्तु न शुभप्रदाः। यत्र रेखा शून्यं स भावो रोगापवा-दभयप्रदः।

### अत्र ग्रहाणां गोचरवशान्मासदिनादिफले विशेषमाह।

यदा यदा ग्रहाणां राश्यन्तसंक्रमः स्यात्तस्मिन्नेव दिने सर्वेषां ग्रहाणामष्टवर्ग-रेखासु निम्नप्रकारेण सकलं फलं वाच्यम्।

---

१. बृ० पा० पू० भा० विशोऽध्यायः (मुम्बई-सं०)

अथ च प्रसङ्गान्न्यूतरेखाणां शान्तिप्रकारमप्याह ।

यस्मिन् मासे सप्तरेखाफलं स्यात्तेन मृत्युयोगो भवितुमर्हति । तस्य शान्त्यर्थं विंशतिपलं सुवर्णं तिलानां पर्वतद्वयं दातव्यम् ।

अष्टरेखाः स्यात्तदा जातिहीनो भूत्वा मृत्युवशो भवति । कर्पूरजां तुलां दद्याच्छान्तये ।

नवरेखाश्चेत्तदा सर्पमृत्युभयं शान्त्यर्थं चाष्टचतुष्ट्ययुतस्य रथस्य दानं कुर्यात् ।

दशरेखायुते मासे शस्त्रभयं शान्त्यर्थं वज्रयुतस्य कवचस्य दानं दद्यत् ।

एकादशरेखाभिरभिशापं प्राप्य प्राणैर्मुक्तो भवति नरोऽत स्तच्छान्त्यर्थं दशसुवर्णनिर्मितां चन्द्रस्य मूर्त्ति दद्यात् ।

द्वादशरेखायुते मासे जलदोषेण मृत्युभयन्तस्य शान्त्यर्थं ब्राह्मणाय भूमिदानं दद्यात् ।

त्रयोदशरेखासु व्याघ्रान्मृत्युर्भवति तच्छान्त्यर्थं विष्णोः सुवर्णप्रतिमा दद्यात् ।

चतुर्दशरेखासु कालान्मृत्युभय शान्त्यर्थं सुवर्णनिर्मितां वराहप्रतिमां दद्यात् ।

पञ्चदशरेखासु राजभय शान्त्यर्थं गजदानं कुर्यात् ।

षोडशरेखासु रिष्ट शान्त्यर्थं सुवर्णनिर्मितं कल्पवृक्षं दद्यात् ।

सप्तदशरेखासु व्याधिभयं शान्त्यर्थं धेनुं गुडञ्च दद्यात् ।

अष्टादशरेखासु कलहो भवति शान्त्यर्थं रत्नगोभूमिहिरण्यदानं प्रोक्तम् ।

एकोनविंशतिरेखासु देशत्यागभयं विधिना शान्तिं कुर्यात् ।

विंशतिरेखासु बुद्धिनाशस्तत्फलदूरीकरणार्थं लक्षमितं जपं कुर्यात् ।[1]

एकविंशतिरेखासु रोगपीडा शान्त्यर्थं धान्यपर्वतदानम् ।

द्वाविंशतिरेखासु बन्धुपीड़ा शान्त्यर्थमादर्शकदानम् ।

त्रयोविंशतिरेखासु क्लेशागमः । शान्तिदानञ्च सुवर्णसप्तपलानिर्मिताया रविप्रतिमायाः प्रोक्तम् । चतुर्विंशतिरेखासु बन्धुनाशः शान्त्यर्थं दशगोदानं

१. काशीसंस्करणे गणेशपूजा प्रोक्ता । टीकायाञ्च सरस्वती-पूजा लिखिता (बृ० पा०, पृ० ६३८, काशी-सं०)

विदध्यात्। सर्वरोगादिनाशार्थं जपहोमादि कारयेत्। पञ्चविंशतिरेखासु बुद्धिनाशः। शान्तिश्चात्र सरस्वतीपूजा प्रोक्ता।

षड्विंशतिरेखासु धननाशः। सुवर्णदानञ्चात्र शान्तिरुच्यते। सप्तविंशतिरेखास्वपि धनहानिः। शान्त्यर्थं श्रीसूक्तजपं प्रोक्तम्।

अष्टाविंशतिरेखासु हानिर्भवति। सूर्यहोमश्चात्र शान्तिः।

एकोनत्रिंशद्रेखासु चिन्तागमः। घृतवस्त्रसुवर्णदानञ्चात्र शान्तिः।

त्रिंशद्रेखासु धनधान्यप्राप्तिः।

एकत्रिंशद्रेखासु। द्वात्रिंशद्रेखासु च महोद्योगः। त्रित्रिंशद्रेखासु पुत्रसम्पदाप्तिः।

चतुस्त्रिंशसु च सुवर्णवस्त्रलाभः। पञ्चत्रिंशसु धीमान् भवति। षड्त्रिंशसु सुतयुतः।

सप्तत्रिंशसु च धनाप्तिः। अष्टत्रिंशसु सुखसम्पदा। एकोनचत्वारिंशत्सु धनकीर्तिलाभः। चत्वारिंशत्सु च वृद्धिः। अत ऊर्ध्वं यशोऽर्थलाभः पुण्यश्रीप्राप्तिरिति भावः।[1]

## (उ) अष्टकवर्गचक्राणि

सौकर्यादत्राष्टकवर्गचक्राणि लिख्यन्ते। येनाष्ठकवर्यलेखने प्रयासाभावो भवति।

### सूर्याष्टकवर्गः

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ल० |
|---|---|---|---|---|---|---|---|
| १ | ३ | १ | ३ | ५ | ६ | १ | ३ |
| २ | ६ | २ | ५ | ६ | ७ | २ | ४ |
| ४ | १० | ४ | ६ | ९ | १२ | ४ | ६ |
| ७ | ११ | ७ | ९ | ११ | | ७ | १० |
| ८ | | ८ | १० | | | ८ | ११ |
| ९ | | ९ | ११ | | | ९ | १२ |
| १० | | १० | १२ | | | १० | |
| ११ | | ११ | | | | ११ | |

१. एकत्रिंशरेखासंख्यात ऊर्ध्वं फलविवेचनस्य काशी-संस्करणेऽभावः।

## चन्द्राष्टकवर्गः

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ल० |
|---|---|---|---|---|---|---|---|
| ३ | १ | २ | १ | २ | ३ | ३ | ३ |
| ६ | ३ | ३ | ३ | ४ | ४ | ५ | ६ |
| ७ | ६ | ५ | ४ | ७ | ५ | ६ | १० |
| ८ | ९ | ६ | ५ | ८ | ७ | ११ | ११ |
| १० | १० |  | ७ | १० | ९ |  |  |
| ११ | ११ | १० | ८ | ११ | १० |  |  |
|  |  | ११ | १० |  | ११ |  |  |
|  |  |  | ११ |  |  |  |  |

## मंगलाष्टकवर्गः

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ल० |
|---|---|---|---|---|---|---|---|
| ३ | ३ | १ | ३ | ६ | ६ | १ | १ |
| ५ | ६ | २ | ५ | १० | ८ | ४ | ३ |
| ६ | ११ | ४ | ६ | ११ | ११ | ७ | ६ |
| १० |  | ७ | ११ | १२ | १२ | ८ | १० |
| ११ |  | ८ |  |  |  | ९ | ११ |
|  |  | १० |  |  |  | १० |  |
|  |  | ११ |  |  |  | ११ |  |

## बुधाष्टकवर्गः

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ल० |
|---|---|---|---|---|---|---|---|
| ५ | २ | १ | १ | ६ | १ | १ | १ |
| ६ | ४ | २ | ३ | ८ | २ | २ | २ |
| ९ | ६ | ४ | ५ | ११ | ३ | ४ | ४ |
| ११ | ८ | ७ | ६ | १२ | ४ | ७ | ६ |
| १२ | १० | ८ | ९ | | ५ | ८ | ८ |
| | ११ | ९ | १० | | ८ | ९ | १० |
| | | १० | ११ | | ९ | १० | ११ |
| | | ११ | १२ | | ११ | ११ | |

## गुर्वष्टकवर्गः

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ल० |
|---|---|---|---|---|---|---|---|
| १ | २ | १ | १ | १ | २ | ३ | १ |
| २ | ५ | २ | २ | २ | ५ | ५ | २ |
| ३ | ७ | ४ | ४ | ३ | ६ | ६ | ४ |
| ४ | ९ | ७ | ५ | ४ | ९ | १२ | ५ |
| ७ | ११ | ८ | ६ | ७ | १० | | ६ |
| ८ | | १० | ९ | ८ | ११ | | ७ |
| ९ | | ११ | १० | १० | | | ९ |
| १० | | | ११ | ११ | | | १० |
| ११ | | | | | | | ११ |

## शुक्राष्टकवर्गः

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ल० |
|---|---|---|---|---|---|---|---|
| ८ | १ | ३ | ३ | ५ | १ | ३ | १ |
| ११ | २ | ५ | ५ | ८ | २ | ४ | २ |
| १२ | ३ | ६ | ६ | ९ | ३ | ५ | ३ |
| | ४ | ९ | ९ | १० | ४ | ८ | ४ |
| | ५ | ११ | ११ | ११ | ५ | ९ | ५ |
| | ८ | १२ | | | ८ | १० | ८ |
| | ९ | | | | ९ | ११ | ९ |
| | ११ | | | | १० | | ११ |
| | १२ | | | | ११ | | |

## शन्यष्टकवर्गः

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ल० |
|---|---|---|---|---|---|---|---|
| १ | ३ | ३ | ६ | ५ | ६ | ३ | १ |
| २ | ६ | ५ | ८ | ६ | ११ | ५ | ३ |
| ४ | ११ | ६ | ९ | ११ | १२ | ६ | ४ |
| ७ | | १० | १० | १२ | | ११ | ६ |
| ८ | | ११ | ११ | | | | १० |
| १० | | १२ | १२ | | | | ११ |
| ११ | | | | | | | |

## लग्नाष्टकवर्गः

| सू० | चं० | मं० | बु० | बृ० | शु० | श० | ल० |
|---|---|---|---|---|---|---|---|
| ३ | ३ | १ | १ | १ | १ | १ | ३ |
| ४ | ६ | ३ | २ | २ | २ | ३ | ६ |
| ६ | १० | ६ | ४ | ४ | ३ | ४ | १० |
| १० | ११ | १० | ६ | ५ | ४ | ६ | ११ |
| ११ | १२ | ११ | ८ | ६ | ५ | १० | |
| १२ | | | १० | ७ | ८ | ११ | |
| | | | ११ | ९ | ९ | | |
| | | | | १० | | | |
| | | | | ११ | | | |

## (च) समीक्षा—

### (अ) पूर्वपरम्परा—

पूर्वं विषयावतरणे अष्टकवर्गस्य स्वरूपं महिमा च प्रदर्शितौ। अष्टकवर्गस्य न केवलमत्र बृहत्पाराशरे एवोल्लेखो दृश्यते अपि तु नारदमहापुराणेऽपि वर्णनमुपलभ्यते। सारावलीकारेण कल्याणवर्मणा यत्त्विदं प्रतिपादितं यदस्याष्टकवर्गस्य निर्वचनं यवनाचार्यैः कृतमस्ति। तस्य पूर्वं निराकरणमत्र मया कृतं यद्यवनाचार्याणां पराशरान्नारदाच्च प्राचीनत्वं नास्ति। पराशरादपि प्राचीनत्वं गर्गस्य विद्यते। गर्गेण तु साक्षाद्ब्रह्मणः सकाशाज्ज्योतिषमधीतम्। गर्गाच्चाचार्यपरापरेण सम्प्राप्तमिदञ्च ग्रन्थान्ते उपलभ्यते।[1] अत्राष्टकवर्गस्य पूर्वभागे चोत्तरभागे उभयत्र वर्णनं दृश्यते। उत्तरभागश्च गर्गहोराशास्त्रस्य छाया विद्यते।

---

१. बृ० पा० उ० भा० २०।६,४ (मुम्बई-सं०)

उत्तरभागे[1] पराशरेण लिखितं यदस्मिन्नुत्तरभागे तु मयानुक्तं भवेत्तत्सर्वं गर्गहोरायां द्रष्टव्यम्। अनेनाष्टकवर्गस्यातीव प्राचीनत्वमवगम्यते। पराशरात्पूर्वमपि अष्टक-वर्गस्य परम्परा दृश्यते।

## (इ) उत्तरवर्त्तिषु प्रभावः—

पराशरादनन्तरं प्रायः सर्वैरेवाचार्यैरष्टकवर्गस्य वर्णनं कृतमिति पूर्वं मया लिखितम्। यथा हि—

बृहज्जातककारेणाचार्यवराहमिहिरेण, सारावलीकर्त्रा कल्याणवर्मणा, जातकपारिजातलेखकेन वैद्यनाथेन शम्भुहोराप्रकाशकारेणाचार्यपुञ्जेन, होरामक-रन्दकर्त्रा, जातकतिलकलेखकेन फलदीपिकाकारेण मन्त्रेश्वरेण, जातकादेशमार्ग-रचयित्रा, जातकाभरणकर्त्राचार्यढुण्ढिराजेन, होरासारकारेण, मानसागरीसम्पा-दकेन रणवीरज्योतिर्महानिबन्धकर्त्रा पण्डितमहेशेन एवञ्चान्यैरपि सर्वैरस्य मार्गस्यानुसरणं विहितमिदमुपलभ्यते। बी० बी० रमणमहोदयेन 'अष्टकवर्ग सिस्टिम आफ प्रिडिक्शनज्, सी० ए० सुब्रह्मण्यम्, अय्यरमहोदयेन सी० एस० पटेलमहोदयेन च 'अष्टकवर्गः इति पुस्तकद्वयं केवलमष्टकवर्गमधिकृत्य लिखितम्। श्री बी० वी० रमण महोदयेन तु स्वकीयत्रिंशद्वर्षीयानुभवेन फलकथनेऽष्टकवर्गस्य भूयानुपयोगो दर्शितः इति पूर्वं मयाङ्कितम्।

## (उ) वैशिष्ट्यम्—

अष्टकवर्गस्य वैशिष्ट्यमत्रेदं विद्यते। यद्भारतीयाचार्यैः फलकथनार्थं मार्गत्रयमनुसृतम्। जन्मलग्नाच्चन्द्रलग्नान्नवांशलग्नाच्च। जन्मलग्नाच्छरीरस्य विचारो विधीयते चन्द्रलग्नाच्च मनस इति। नवांशाच्च सर्वं सूक्ष्मेण निश्चेतुं शक्यते स्त्रीपुत्रधनादिकस्य विचारोऽनेनैव भवति।

गोचरस्य फलकथनेऽद्भुतं वैशिष्ट्यम्। गोचरञ्च जन्मचन्द्रलग्नाभ्यामु-भाभ्यां कर्तुं दृश्यते। गोचरानुसारं फलकथनं गौणं विद्यते। प्रायः सर्वेषां राशि-साम्यं भवति। तेन च पृथक्त्वेन फलं सूक्ष्मतया कथितुं न पार्यते। यथा हि

१. बृ० पा० उ० भा० १२।४२। (मुम्बई-सं०)

रामस्यापि तुलाराशिः रावणस्य चापि परं फलविभेदः। अतो गोचरेऽपि जन्मलग्नस्थग्रहनिदर्शनमावाश्यकम्। एतद्दृष्ट्वैव महर्षिभिरष्टकवर्गविधिराविष्कृतः।

भगवता शङ्करेण सर्वप्रथमं यामलेऽष्टकवर्गविषयः प्रतिपादितः। ततश्च पराशरमणित्थबादरायणयवनेश्वरप्रभृतिभिरनुकरणं विहितम्।[1]

पराशरेणापि वेदस्य कर्मज्ञानभागद्वयवज्ज्यौतिषस्यापि संकीर्णनिश्चयात्मकं भागद्वयं स्वीकृतम्। सकीर्णभागे सर्वं होराशास्त्रमापतति। निश्चयभागे चाष्टकवर्गस्यैव मूर्धन्यत्वम्। संकीर्णभागस्य फलकथने सौकर्यं नास्ति। निश्चयभागस्य फलकथने वैशिष्ट्यं चमत्कारश्चतोऽष्टकवर्गवैशिष्ट्यं स्वतः सिद्धं विद्यते। निश्चभागज्ञ एव दैवज्ञ इति।[2]

१. देवकीनन्दनसिंहः, ज्योतिषरत्नाकरः, प्रथमखण्डः, २३ अध्यायः, पृ० ४६१, श्री गिरिजाशंकर सिंह, माउर (मुंगेर)।

२. बृ० पा० उ० भा० १।११, १४, १५ (मुम्बई-सं०)

# अष्टमोऽध्यायः

# राजयोगादिनिरूपणम्

## (क) विषयावतरणम्—

अस्मिन् राजयोगादिवर्णनाध्याये १३, २१, २२, २८, ३०, ३१, ३३ तमा नाम् अध्यायानां समीक्षापुरःसरं वर्णनं विहितम्। अत्र विविधानां राजयोगानां धनिकदरिद्रवन्धनसुखदुखादिकयोगानां विवेचनं कृतमस्ति। विविधयोगज्ञाने द्वादशराशिचक्रमधिकृत्य सूर्यादिग्रहाणां पापपुण्यकारकमारकज्ञानस्यावश्यकत्वमतश्च तस्याध्यायस्यात्रैव सन्निवेशः। २१ तमः अध्यायो नाभसयोगफलाध्यायः। अत्र नाभसानां दिव्यानां योगानां विशदवर्णनम्। एते योगाः फलितशास्त्रे प्राचीनतमाः सन्ति। यत्र ग्रहाणामाश्रयदलाकृतियोगेन योगानां वर्णनं विद्यते। २२ अध्यायो बहुयोगफलाध्यायो यत्र सुप्रसिद्धानां गजकेसरिप्रभृतिकानां राजयोगादिकफलप्रतिपादकानां योगानां वर्णनं दृश्यते। ३० तमोऽध्यायश्च धनयोगकथनाध्यायोऽत्र ग्रहाणां योगायोगेन धनप्राप्तियोगानां विन्यासो विद्यते। ३१ तमोऽध्यायो दरिद्रयोगाध्यायोऽत्र दरिद्रताप्रतिपादकानां योगानां वर्णनं विहितम्। ३३. तमोऽध्यायो जीवानां सुखदुःखनिरूपणाध्यायः। अत्र चाद्भुतप्रकारेण जीवनां सुखदुःखज्ञानविधिः प्रकीर्णरूपेण दृश्यते यत्र ग्रहाणां कारकज्ञानपुरःसरं विवाहकालज्ञानपुत्रकन्याविचारस्य भ्रातृभगिनीविचारादिकस्य, मृत्युकालजलप्रसवपुष्कललाभादिकज्ञानप्रकारस्य, ऋणस्य, ऋणमुक्तस्य वा ज्ञानस्य पीड़ासौख्यशीतलरोगकर्मोदयव्ययज्ञानस्य च प्रकीर्णात्मकं वर्णनमुपलभ्यते। अयमध्यायः लोमशसुजन्मसम्वादप्रकरणरूपेणाङ्कितः। महर्षिलोमशस्यात्रैव सकले ग्रन्थे नाम निर्देश इति विशेषोऽपि ज्ञेयः। वर्णनप्रकारश्चाद्भुतः।

## (अ) राजयोगादिज्ञानप्रकारः ।[1]

महर्षिपराशरेण ग्रहाणां राशिभावादीनाञ्च योगेन व्यक्तिविशेषस्य कृते न केवलं राजयोगशब्देन महैश्वर्यादिप्राप्तिवर्णनं विहितमपि तु मूकबधिरपङ्गुविकलाङ्गान्धदीनरोगाक्रान्तयोगादिकथनपुरःसरमनेकानां दरिद्रयोगानामपि विशदं निरूपणमङ्कितम् । निरूपणप्रकारश्चात्रद्भुतः । शैली चापि विचित्रा सैवमेवानुसृता सर्वैरर्वाचीनैश्च ।

इदमेव तत्त्वमत्रफलकथने । ग्रहाणां योगायोगेनैव पुरुषादिकस्य भाविफलविचारोऽत्रोपलभ्यते । तैस्तैर्योगायोगैरयं पुरुषो स्त्री वा कस्मिन् समये भाग्योदयमुपयास्यति । शरीरसौख्यं पूर्णं न वेति । विकलाङ्गोऽन्धो दीनो वायम् । मूकत्वं बधिरत्वञ्च कीदृशं पूर्णमपूर्णं वेति । अयं राजा दरिद्रो वा पण्डितो मूर्खो वा दुर्बलः सबलो वेति विविधप्रकारेण निरूपणमत्र दृश्यते ।

एभिर्योगैरेव मातृपितृपुत्रजायाभृत्यादिकस्य सुखमपि निर्दिष्टम् । कदा चेषां सम्बन्धिनां मृत्युयोगः सोऽपि योगैरेव प्रदर्शितः ।

कीदृशी चास्याजीविकेति सापि ग्रहयोगमधिकृत्याधिगन्तुं शक्यते । अतश्च विलक्षणोऽयं ग्रहयोगविज्ञानप्रकारः ।

अयं प्रकार एवास्य ज्योतिर्विज्ञानस्य मूलम् । अत्रैव सर्वैर्होराशास्त्रविचक्षणैरनुसन्धानं विहितम् । अयं प्रकारो न केवलं भारतीयैरेवाङ्गीकृतमपि तु पाश्चात्यैरपि दैवज्ञैः स्वीकृतः । यावनीयैर्यावनीभाषायामिक्कवालयोगादीनां विविधप्रकारेण पल्लवनं विहितम् । आंगलभाषाविज्ञैः यूरोपदेशीयैरपि ज्योतिर्विद्भिः 'कम्बिनेशनशब्देन विविधियोगानुरूपं फलनिर्देशनं पल्लवितम् ।

अत्र राजयोगवर्णने नाभसयोगा विशेषेण कथिताः सन्ति नाभसशब्दस्य नभस अयं नाभस इति व्युत्पत्तिर्दृश्यते । तेन नाभसशब्दस्य दिव्यत्वमनुमीयते । नाभसा योगा दिव्ययोगा इति भावः । पूर्वजन्मशुभपुण्यफलभोगानुसारमत्र मानुषे जन्मनि चैषु नाभसयोगेषु दिव्यशक्तिप्रसादेन जन्मप्राप्तिर्विद्यते । अत एते विशेषशुभफलप्राप्तिप्रदा ग्रहयोगा नाभसयोगशब्देनाङ्गीकृताः सन्ति ।

---

१. बृ० पा० पू० भा० २१,२२, २८, २९, ३०, ३१ अध्याय (मुम्बई-सं०)

एषां योगानां विज्ञाने निम्नाङ्कितानां प्रकाराणां ज्ञानमावश्यकम्। तेनैव योगानां बलाबलत्वं विज्ञायते।

(क) ग्रहयोगोऽनेकग्रहयोगेनैव भवति न चैकेन ग्रहेणेति।

(ख) ग्रहाणां शुभशुभत्वमपि प्रकारद्वयेन ज्ञायते। स्वाभाविकं शुभत्वमशुभत्वम्। भावराशिग्रहयोगानुरूपमप्राकृतिकं शुभत्वमशुभत्वं वा।

(ग) समत्वमर्थान्नशुभत्वन्नाशुभत्वमत्र तृतीयो भेदोऽपि स्वतोऽङ्गी क्रियते।

प्रथमस्य लक्षणम्। गुरुशुक्रौ शुभग्रहसंयुतो बुधो क्षीणश्च चन्द्रमाः स्वाभाविकाः शुभाग्रहा इति। द्वितीयस्य स्वरूपम्।

त्रिकोण (लग्नपञ्चमनवमा भावाः) नेतारः।

केन्द्र (प्रथमचतुर्थसप्तमदशमा भावाः) पतयश्च स्वाभाविकाः क्रूराः (क्षीणचन्द्रः पापग्रहयुतो बुधो गुरुशुक्रौ च) शुभा भवन्ति।

केन्द्रपतयश्च स्वाभाविका शुभास्त्रिपडायेशाश्च सर्वे ग्रहा (शुभा अशुभा वेतिभावः) अशुभा एव भवन्ति।

तृतीयस्य स्वरूपम्—

द्वितीयद्वादशभावाधिपौ समौ अर्थात् योगानुरूपं शुभाशुभत्वं प्रयच्छतः। *अष्टमभावाधिपतिरपि मध्यमः। परं जातकचन्द्रिकारेणास्याप्यशुभत्वमेवाङ्गीकृतम्।* पाराशरीयं मतमेव समचीनम्। राशिभावनिरूपणपुरःसरमेषां ग्रहाणां निम्नप्रकारेण महर्षिणा पृथक्त्वेन शुभाशुभत्वं निरूपितं फलप्रदर्शने योगज्ञाने चास्य विज्ञानं सुतरामनिवार्यम्।

### तत्र मेषलग्नम्—[१]

मेषराशौ भौमोऽष्टमेशोऽष्टमेशोऽपि नाशुभप्रदो लग्नेशत्वात्। रविगुरु शुभौ। अत्र विशेषः गुरुशनियोगे (गुरुस्त्रिकोणाधिपतिः शनिश्च केन्द्राधिपतिः परं शनेरेकादशेशत्वान्न शुभत्वमिति भावः)।

न योगकारकत्वमस्तीति। शनिबुधशुक्राः पापा ज्ञेयाः। शुक्रस्य द्वितीयसप्त-

१. वृ० पा० पू० भा० १३ अध्यायः सकलः (मुम्बई-सं०)

माधिपतित्वान्मारकत्वम् । शुक्रेण सह सम्बन्धत्वे शनिबुधौ अपि मारकौ भवितुमर्हतः ।

अत्र भावार्थरत्नाकरे यदि गुरुर्दशमस्थो भवति तदा स मारको भवतीति लिखितम् ।[1]

**वृषलग्नम्—**

गुरुशुक्रचन्द्राः पापाः, शनिसूर्यौ शुभौ बुधोऽल्पशुभप्रदः, गुरुशुक्रचन्द्रभौमा मारकाः सन्ति । शनेरत्र राजयोगकारकत्वं विद्यते ।

**मिथुनलग्नम्—**

भौमगुरुसूर्याः पापाः, शुक्रः शुभः । शनिर्भाग्येशोऽपि गुरुणा सह न पूर्णयोगफलप्रदः (शनेरष्टमेशत्वम्, गुरौ केन्द्राधिपतित्वमतरेनयोर्योगो न पूर्णशुभप्रद इति भावः)

चन्द्रस्य मुख्यमारकत्वम् ।

भावार्थरत्नाकरकारेणात्र न चन्द्रस्य मारकत्वं स्वीकृतम् । यथा हि—

> 'मिथुने जायमानस्य धननाथस्तु चन्द्रमाः ।
> मारको न भवत्येव मानवस्य न संशयः ॥'[2]

परमत्र द्वितीयेशस्य मुख्यमारकत्वात्पाराशरीय मतमेव समचीनमिति ।

**कर्कलग्नम्—**

शुक्रबुधौ पापौ गुरुचन्द्रभौमाः शुभा भौमश्चात्र मुख्ययोगकारकः, शनिश्च मुख्यमारकः, सूर्यश्च साहचर्याच्छुभाशुभफलं विधत्ते ।

**सिंहलग्नम्—**

बुधशुक्रशनयः पापा भौमगुरुसूर्याः शुभाः (अत्रापि गुरोः पंचमेशत्वात्तथा

१. वी० वी० रमणः, पृ० २, भावार्थरत्नाकरः, रमण पब्लिकेशनज, बंगलोर ।
२. तत्रैव १।३।५, पृ० १६ ।

शुक्रस्य दशमेशत्वान्न द्वयोर्योगः शुभप्रदः । शुक्रस्य तृतीयेशत्वात्तया गुरोरष्टमेशत्वादिति भावः ) शनिश्च मारकः, चन्द्रश्च साहचर्याच्छुभाशुभं तनोति ।

**कन्यालग्नम्—**

भौमगुरुचन्द्राः पापाः, बुधशुक्रौ शुभौ शुक्रचन्द्रौ योगकारकौ ( शुक्रस्य नवमेशत्वात् ) द्वितीयेशत्वाच्छुक्रस्य मारकत्वमपि निर्दिष्टम् । सूर्यश्च साहचर्यात्फलप्रदः ।

**तुलालग्नम्—**

गुरुरविभौमाः पापाः, शनिबुधौ शुभौ, चन्द्रबुधौ योगकारकौ गुरुभौमौ मारकौ स्तः ।

**वृश्चिकलग्नम्—**

शनिशुक्रबुधाः पापाः, गुरुचन्द्रौ शुभौ, रविचन्द्रौ योगकारकौ, भौमश्च समः, शुक्राद्याः पापा मारकाश्च सन्ति ।

**धनुर्लग्नम्—**

शुक्रश्चाशुभः, रविभौमौ शुभौ, रविबुधौ योगकारकौ शनिश्च मारकः, शुक्रस्यापि पापत्वान्मारकत्वमुपपन्नम् ।

**मकरलग्नम्—**

भौमगुरुचन्द्राः पापाः, शुक्रबुधौ शुभौ, शनिर्द्वितीयेशोऽपि लग्नेशत्वान्न स्वय मारकः, भौमाद्याः पापा एवात्र मारकाः सन्ति ।

**कुम्भलग्नम्—**

गुरुचन्द्रभौमाः पापाः, शनिशुक्रौ शुभौ चात्रैकः शुक्र एव राजयोगकारकः गुरुरविभौमा मारका बुधश्च सम इत्यूह्यम् ।

**मीनलग्नम्—**

शनिशुक्ररविबुधाः पापाः भौमचन्द्रौ शुभौ गुरुभौमौ योगकारकौ ।

भौमस्य द्वितीयेशत्वादपि न स्वतो मारकत्वन्नवमेशत्वादिति भावः । शनिबुधौ केवलं मारकौ भवतः ।

ग्रहाणां योगज्ञाने सम्बन्धचतुष्टयस्याप्यत्र ज्ञानं सुतरामावश्यकम् ।[1]

(१) अन्योऽन्यराशिसम्बन्धः ।

(२) परस्परदृष्टिसम्बन्धः ।

(३) अन्यतरदृष्टिसम्बन्धः ।

(४) सहावस्थानसम्बन्धः ।

(१) तत्र प्रथमे भावैकस्य स्वामिन अन्यभावे स्थितिस्तथान्यभावस्य स्वामिनः पूर्वस्मिन् भावेऽवस्थानम् । यथा कर्काधिपश्चन्द्रः सिंहे सिंहाधिपः सूर्यः कर्के इति भावः ।

(२) परस्परं पूर्णदृष्ट्या वान्यतरदृष्ट्या ग्रहद्वयस्यावलोकनं द्वितीयसम्बन्धः यथा मेषस्थः सूर्यः सप्तमस्थं भौमं पश्यति भौमश्च लग्नस्थं सूर्यमित्यभिप्रायः ।

(३) एकस्य ग्रहस्यान्यस्य ग्रहस्योपरि दृष्टिः स्यात्पूर्वस्य तु न भवेदिति तृतीयसम्बन्धः यथा लग्नस्थो शनिस्तृतीयस्थ सूर्यं पूर्णं पश्यति परं सूर्यस्य दृष्ट्यभाव इति ।

(४) एकत्रानेकग्रहावस्थानम् । यथा शनिशुक्रौ लग्नस्थौ रविचन्द्रभौमा दशमस्था इत्यादि ।

**तत्रापि निम्नाङ्कितविवरणानुसारमपि सुविचारणीयमतीवावश्यकम् ।**

अत्र पक्षद्वयं शुभाशुभरूपम् ।

**शुभपक्षः—**

(क) यदि योगकारकश्च शुभग्रहः,

(ख) योगकारकस्य शुभग्रहेण सहावस्थानम्,

(ग) योगकारकोपरि शुभग्रहदृष्टिः,

(घ) योगकारकस्योच्चत्वमथ वा मित्रगृहावस्थानम् ।

---

१. बृ० पा० पू० भा० २८।१५-१६ (मुम्बई-सं०)

अशुभपक्षः—

(क) यदि योगकारकोऽशुभग्रहः ।
(ख) योगकारकस्याशुभग्रहेण सह संयोगः ।
(ग) योगकारकस्योपर्यशुभग्रहस्य दृष्टिः ।
(घ) योगकारकस्य नीचत्वमथ वा शत्रुगृहेऽवस्थानम् ।

उपरितनैरेभिर्योगैरपि ग्रहयोगानां बलाबलत्वं भवतीति भावः ।

षड्बलचेष्टाबलरश्मिबलानामपि विचारो विधेयस्ततश्च राजयोगादीनां बलाबलत्वनिरीक्षणपुरःसरं यः फलादेशः कथ्यते स बलीयान् भवतीति स्पष्टम् ।

## (ङ) नाभसयोगः—

अत्रपूर्वं नाभसयोगानामेव विचारो विधीयते ।

एषां सङ्ख्याष्टादशशतमस्ति । तत्र मुख्या द्वात्रिंशत्संख्याकाः सन्ति । एषु त्रय आश्रययोगाः, द्वौ दलयोगौ विंशतिसङ्ख्याका आकृतियोगाः सप्तसङ्ख्याका योगा उपलभ्यन्ते । अनेनैषां चतुर्विधत्वं सुस्पष्टम् । एषां नाभयोगानां सर्वत्रनारदपुराणे[1] बृहज्जातके[2] सारावल्यां[3] जातकपारिजाते[4] रणवीरज्योतिर्महानिबन्धादिषु[5] ग्रन्थेषु वर्णनमुपलभ्यते ।

नाभसयोगानां द्वात्रिंशद्भेदा एव नारदादिपुराणेषूपलभ्यन्ते एषामेव योगानां यवनैरष्टादशशतभेदाः पल्लविता इति वराहमिहिरेण कल्याणवर्मणा च निर्दिष्टम् । तथा हि बृहज्जातके:—

---

१. नारदमहापुराणम्, १।२।५४।१८६-१९९, 'कल्याण संक्षिप्त नारद पुराणाकम्' ख्रिष्टाब्दा जनवरी १९५४, गीता प्रेस, गोरखपुरम् ।
२. सीताराम झा 'बृहज्जातकम्' मास्टर खेलाड़ीलाल एण्ड संस, बनारस, १२ अध्यायः ।
३. सीतारामझा, सारावली २१ अध्यायः । मास्टर खेलाड़ीलाल, एण्ड संस, बनारस ।
४. जातक पारिजातः, चौखम्बा संस्कृत सीरिज, बनारस, ७।१६४-१८१, पृ० २५४-२६३ ।
५. पण्डितमहेशः, रणवीरज्योतिर्महानिबन्धः, जम्बू काश्मीर सरकार जम्बू, १-५२ श्लोकः, पृ० २३१-२३८ ।

'यवनैस्त्रिगुणा हि षट्शती सा कथिता ।'[1]

सारावल्यामपि—

'यवनाद्यैर्विस्तरतः कथिता योगास्तु नाभसनाम्ना ।'

अष्टादशशतगुणितास्तेषां द्वात्रिंशदिह वक्ष्ये ।'[2] अत्र बृहत्पाराशरेऽपि चाष्टादशशतभेदानामुल्लेखः । 'अधुना वै विस्तरतः कथिता योगास्तु नाभसनाम्ना । अष्टादशशतगुणितास्तेषां संक्षेपतो वक्ष्ये ।'[3]

काशीसंस्करणेऽपि ।[4]

अधुना नाभसा योगाः कथ्यन्ते द्विजसत्तम ।
द्वात्रिंशत् प्रभेदास्तु शतघ्नाष्टादशोन्मिताः ॥

एवञ्च यवनैरेवाष्टदशशतभेदाः स्वीकृताः, अत्र सन्देह उत्पद्यते । नारदपुराणे तु द्वात्रिंशद्भेदा एवोपलभ्यन्ते मूलं मृग्यम् ।

तत्रादौ रज्जुमूसलनलनामानस्त्रय आश्रययोगा निरूप्यन्ते ।

(१) यदि सर्वे ग्रहाश्चरराशिषु (मेषकर्कतुलामकरेषु) भवेयुस्तदा रज्जुनामायं योगः ।

अस्य न शुभफलम् । अस्मिन् योगे समुत्पन्नो नरः प्रवासी पर्यटनपरः क्रूरः खलश्च भवति ।

(२) यदि सर्वे ग्रहाः स्थिरराशिषु (वृषसिंहवृश्चिककुम्भेषु) भवेयुस्तदा मूसलनामायं योगः । अत्रोत्पन्नो जातको मानी, धनी, ज्ञानी भूपप्रियो, बहुपुत्रयुतः स्थिरचित्तश्च भवति ।

(३) यदि सर्वे ग्रहाः द्विस्वभावराशिषु (मिथुनकन्याधनुर्मीनेषु) भवेयुस्तदा नलाख्यो नामायं योगः ।

---

१. बृहज्जातकम्, मास्टर खेलाड़ीलाल एण्ड संस, बनारस, १२।१ ।
२. सारावली, मास्टर खेलाड़ीलाल एण्ड संस, बनारस, २१।१ ।
३. बृ० पा० पू० भा० २१।१ (मुम्बई-सं०)
४. बृ० पा० ३५।१ (काशी-सं०)

जातकश्चात्र न्यूनातिरिक्तदेहो धनसञ्चयभागी निपुणो बन्धुहितकरः सुरूपश्च जायते।

दलनामकयोगद्वयं निरूप्यते।

(१) केन्द्रत्रयगता यदि सौम्यग्रहा भवेयुस्तदा मालानामकोऽयं योगः। अत्र समुत्पन्नो नरः सुखी, वाहनवस्त्रान्नभोगसम्पन्नः स्वरूपः, बहुस्त्रीकश्च भवति।

(२) केन्द्रत्रयगता यदि पापग्रहाः स्युस्तदा व्यालनामकः सर्पनामो वायं योगः।

अत्रोत्पन्नो मानवो विषमः क्रूरः निःस्वः नित्यं दुःखादितः सुदीनः परभक्षपाननिरतश्च कथितः।

## आकृतियोगानां निरूपणम्—

(१) समीपस्थकेन्द्रद्वये सर्वग्रहावस्थाने गदा नाम योगः

फलम्—सततधनोद्योगी, यज्वा, शास्त्रसङ्गीतकुशलः, धनसुवर्णरत्नसम्पत्संयुतो मानवो निगदितः।

(२) लग्नसप्तमगैः सर्वे ग्रहैः शकटो नाम योगः

फलम्—रोगार्तः, कुनखो, मूर्खः शकटानुजीवी, निःस्वः, मित्रस्वजनविहीनो नरो भवति।

(३) चतुर्थदशमस्थैः सर्वग्रहैर्विहगो नाम योगः।

भ्रमणरुचिर्विकृष्टो दूतो सुरतानुजीवी, धृष्ठः कलहप्रियो मानवोऽत्रोत्पन्नो निर्दिष्टः।

(४) त्रिकोणस्थैः (लग्नपञ्चमनवमगैः) सर्वग्रहैः शृङ्गाटको नाम योगः। अत्रोत्पन्नः कलहप्रियः, योद्धा, सुखी, राजप्रियः शुभकलत्रो, धनाढ्यो, युवतिद्वेष्यश्च भवति।

(५) अन्यत्रिकोणस्थैः (द्वितीयषष्ठदशमस्थैस्तृतीयसप्तमैकादशस्थानगैर्वा) सर्वैः ग्रहैर्हलनामको योगः।

हलजातो नरो बह्वाशी, दरिद्रः कृषीवलो, दुःखितः सोद्वेगः सुहृद्-बन्धुयुतः प्रेष्यश्च कथितः।

(६) लग्नसप्तस्थशुभैः ग्रहैस्तथा चतुर्थदशमगैः पापैर्वज्रो नाम योगः। अत्र जातो नर आद्यन्तवयः सुखी, शूरः, सुभगो, निरीहः, खलो, भाग्यहीनः विरुद्धश्च भवति।

(७) लग्नसप्तमस्थैः पापैस्तथा चतुर्थदशमस्थैः शुभैः (पूर्वयोगस्य वैपरीत्ये) यवो नाम योगः। इह जातो मानवो व्रतनियममङ्गलपरो वयसो मध्ये सुखी सुखधनपुत्रयुतो दाता स्थिरचित्तश्च जायते।

(८) केन्द्रचतुष्टयगतैः सर्वैर्ग्रहैः कमलसञ्ज्ञको योगः।
फलम्--विपुलकीर्तिः शुद्धो विभवगुणाढ्यः स्थिरायुः पृथ्वीशश्च भवति।

(९) वैपरीत्येऽर्थात् केन्द्रादन्यस्थानगैः सर्वैर्ग्रहैर्वापीसञ्ज्ञको योगो निगदितः।
फलम्—स्थिरार्थसुखसंयुतो नयनसुखसम्प्रहृष्टो निपुणधीः पुत्रवांश्च भवति।

(१०) लग्नादारभ्यभावचतुष्टयपर्यन्तगैः सर्वैर्ग्रहैः यूपाख्यो योगः।
अत्र जातो नरः सत्वसम्पन्नः स्त्रीयुतो यज्ञरत आत्मविद्व्रतनियमरतश्च जायते।

(११) चतुर्थस्थानादारभ्य सप्तमस्थानगैर्ग्रहैः शरो नाम योगः।
अत्र जात इषुकारः कारागाराधीशो मृगयाधनसेवितो मांसादो हिंस्रः कुशिल्पकारश्च भवति।

(१२) सप्तमभावादारभ्यदशमादिचतुष्टयभावस्थैर्ग्रहैः सर्वैः शक्तिसञ्ज्ञको योगः।
अनेन धनहीनो विफलोऽलसो दुःखितो नीचः संग्रामबुद्धिनिपुणो दीर्घायुश्च भवति नरः।

(१३) दशमस्थानादारभ्यलग्नादिचतुष्टयभावस्थैः सकलैर्ग्रहैर्दण्डाख्यो योगः।

एतेन हृतपुत्रदारो निःस्वो निर्घृणः स्वजनवाह्यो दुःखितो नीचः प्रेष्यश्च भवति।

(१४) लग्नादारम्यसप्तमभावान्तगैः सकलैर्ग्रहैर्नौका नाम योगः।
फलञ्चास्य मनुष्यो वह्वाशी, सलिलोपजीविविभवः, ख्यातकीर्तिर्दुष्टः कृपणो मलिनो लुब्धः खलश्च प्रोक्तः।

(१५) चतुर्थस्थानादम्यसप्तभावदशमस्थानपर्यन्तैर्ग्रहैः कूटो नाम योगः।
अत्रजातो नरोऽनृतवादी कारागारपतिर्निःस्वः शठः क्रूरो गिरिदुर्गवासी च भवति।

(१६) सप्तमभावादरम्यसप्तस्थानादिचतुर्थभावान्तगैः सर्वैर्ग्रहैः छत्रो नाम योगः।
अत्रोत्पन्नो नरो दयावान् नानानृपवल्लभः, प्रकृष्टमतिर्दीर्घायुः प्रथमान्त्यवयः सुखी, आतपत्री च भवति।

(१७) दशमावादारम्यसप्तभावादिचतुर्थस्थानपर्यन्तगैर्ग्रहैश्चापाख्यो योगः।
अनेन कितवश्चौरो भाग्यहीनो वयोमध्ये शुभो गुप्तपाल आनृतिकः वनेचरश्च भवति।

(१८) द्वितीयतृतीयपञ्चमषष्ठमनवमैकादशद्वादशस्थानेभ्यः क्रमश आरम्भ सप्त स्थानान्तं सर्वैर्ग्रहैरष्टप्रकारेणार्द्धचन्द्रो नाम योगो भवति।
द्वितीयस्थानादष्टमभावान्तम्। तृतीयस्थानान्नवमान्तम्। पञ्चमस्थानादेकादशान्तम्। षष्ठाद्द्वादशान्तम्। अष्टमाद्द्वितीयान्तम्। नवमातृतीयान्तम्। एकादशात्पञ्चमान्तम्। द्वादशात्षष्ठान्तम्। अत्रोत्पन्नो नरो नृपप्रियो वली सुन्दरवपुर्मणिसुवर्णभूषणयुतश्च जातको भवति।

(१९) लग्नादारम्यैकान्तरस्थैः (प्रथमतृतीयपञ्चमसप्तमनवमैकादशभावगैरित्यर्थः) सर्वैर्ग्रहैश्चक्राख्यो योगः।
एतेन चक्रवर्त्ती मानवो भवति।

(२०) द्वितीयस्थानादेकान्तरस्थैः (द्वितीयचतुर्थषष्ठाष्टमदशभावगैरित्यर्थः) सर्वैर्ग्रहैः समुद्राख्यो नाम योगः।
अनेन वहुरत्नधनसमृद्धो भोगयुतो धनजनप्रियः ससुतः स्थिरविभवः साधुशीलश्च भवति।

संख्यायोगाः–

(१) सर्वे ग्रहा यद्येकस्मिन्नेव भावे भवेयुर्गोलाख्यो नाम योगः।
बलवान् निःस्वो विद्याविज्ञानहीनो मलिनो नित्यं दुःखितो दीनश्च नरो भवति।

(२) राशिद्वये सर्वे ग्रहा भवेयुस्तदा युगाख्यो नाम योगः।
पाखण्डी धनहीनो लोकबहिष्कृतः सुतमातृधर्मैरहितश्च नरो भवति।

(३) भावत्रयगतैःसर्वैर्ग्रहैः शूलाख्यो योगः।
तीक्ष्णोऽलसो धनहीनो हिंस्रो महाशूरः सुबहिष्कृतः संग्रामलब्धयशश्च जातको भवति।

(४) भावचतुष्टयगतैर्ग्रहैः सकलैः केदारो नाम योगः।
कृषीवलः, सत्यवादी, सुखी, धनी, चञ्चलस्वभावश्च भवति।

(५) पञ्च राशिस्थितैः सर्वैर्ग्रहैः पाशाख्यो योगः।
पाशसमुत्पन्नो नरो कार्यदक्षः, बहुभाषी, शीलरहितो, बहुभृत्यः, सम्प्रतानो, बन्धनभागी, प्रपञ्ची च भवति।

(६) षड्राशिस्थितैः सर्वैः ग्रहैर्दामाख्योयोगः। फलम्, धनी मानी महेश्वरो विद्वांश्च भवति।

(७) सप्त स्थानगैः सर्वैः ग्रहैर्वीणाख्यो योगः।
वीणायोगेन प्रियगीतनृत्यवाद्यो निपुणः सुखी धनी, नेता बहुभृत्यश्च जायते।

## (उ) गजकेसरिप्रभृतयो राजयोगाः—

नाभसयोगवर्णनानन्तरमन्येषामपि बहूनां महत्वपूर्णानां राजयोगानां पराशरेण विवेचनं विहितम्।

(१) तत्रादौ गजकेसरिसंज्ञको महान् योगो निरूप्यते। तस्य भेदद्वयमस्ति।

(१) चन्द्राद्यदि बृहस्पतिः केन्द्रे स्यात्तदा गजकेसरी योगः।

(२) यदि गुरुशुक्रबुधा नीचङ्गता ग्रस्तमिताश्च वा न भवेयुस्तैश्चन्द्रश्च दृष्ट स्यात्तदापि गजकेसरी नामको योग ।[1]

ग्रत्र काशीसस्करणे भेदो दृश्यते ।

लग्नाच्चन्द्राद्वा यदि केन्द्रे शुभग्रहदृष्टो युतो वा भवेत्तथा स च नीचास्तङ्गत शत्रुदृष्टश्च न स्यात्तदा गजकेसरी योग ।[2]

परन्वत्र मुम्बईसस्करणस्यैव लक्षणमुचितम् ।

ग्रस्यैव लक्षणस्य जातकपारिजातादिग्रन्थेषु समुल्लेखात् । द्वितीयस्य च नानुकरणादिति भाव ।[3]

फलम् । ग्रत्रोत्पन्नो नरो मेधावी तेजस्वी गुणसम्पन्नो राजप्रियकरो धनवान् च भवति ।

## (२) द्वितीयमलायोगमाह—

लग्नाच्चन्द्राच्च दशमे शुभग्रह स्थितश्चेत्तदामलाख्यो योग ।

ग्रस्मिन् योगे जात पुरुषो राजपूज्यो महायोगी दाता बन्धुजनप्रिय परोपकारी गुणवान् भवेत् ।

## (३) पर्वतयोगः—

भेदद्वयमस्ति—

(१) केन्द्रेषु शुभा ग्रहा भवेयु षष्ठे चाष्टमे ग्रहाभावे शुभग्रहयुते वा पर्वताख्यो योग ।[4]

(२) लग्नेशाऽन्त्येशौ (द्वादशेश) यदि परस्पर केन्द्रगतौ मित्रदृष्टौ च भवेतान्तदाऽप्याय योग ।[5]

---

१ वृ० पा० पू० भा० २२।१,२ (मुम्बई-स०)

२ वृ० पा० ३६।३ (काशी-स०)

३ जातकपारिजात, चौखम्बा सस्कृत सीरिज, बनारस, ७।११३, ११७।

४ ग्रत्र काशी सस्करणे सप्तमशब्दस्थाने सप्तमशब्दोल्लेख (वृ० पा० काशी स०) ३६।७ । सप्तमशब्दस्तु नोचित. । जातकपारिजातेऽपि सप्तमशब्दस्यैवोल्लेखात कपिलेश्वरशास्त्री जातकपारिजात ७।१२८, चौखम्बा सस्कृत सीरिज, बनारस ।

५ ग्रस्य योगान्तरस्य काशी-सस्करणे नोल्लेख ।

फलम्—एतद्योगजो, नरो, भाग्यान्वितो, विद्याविनोदरतो, दाता, कामी परस्त्रीजनकेलिलोलुपो, यशस्वी, तेजस्वी, पुरनायकश्च भवति।

**काहलयोगः—**

भेदद्वयमस्ति।

(१) यदि गुरुचतुर्थेशौ परस्परं केन्द्रस्थौ भवेतान्तथा लग्नेशश्च बलवान् स्यात्तदा काहलाख्यो योगः।

(२) यदि चतुर्थेशः स्वस्य उच्चो वा दशमेशयुतो दृष्टो वा स्यात्। काहलयोगजो नर ओजस्वी साहसी मूर्खश्चतुरङ्गसेनायुतो यत्किंचिद्-ग्रामाधीशो भवति।

**(४) चामरयोगः—**

भेदद्वयम्।

(१) लग्नेशश्चोच्चस्थो गुरुदृष्टः केन्द्रे स्यात्।

(२) शुभग्रहद्वयं लग्ने नवमे सप्तमे दशमे वा भवेत् तदा चामरो नाम योगः। फलम्—

अत्र जातो नरो राजा वा राजपूज्यो, चिरञ्जीवी, पण्डितो, विद्वान्, वाग्मी, सर्वज्ञो, वेदशास्त्राधिकारी, भवेत्तथा तस्यायुः सप्ततिर्वमितं स्यात्।[1]

**(५) मालिकायोगः—**

लग्नद्वितीयादिद्वादशभावेभ्य आरम्य यदि सप्तस्थानेषु क्रमशः सप्तग्रहा-भवेयुस्तथा द्वादशभेदात्मको मालिका नाम योगो भवति। सञ्ज्ञा फलञ्च निम्न-प्रकारेण।

लग्नादारम्य लग्नमालिका। फलम् महिपतिरनेकगजाश्वनाथः द्वितीय-स्थानादारम्य वित्तमालिका। फलम् निधिपतिर्पितृभक्तिरतः धीरोग्ररूपो धनवान् चक्रवर्ती।

तृतीयस्थानादम्यविक्रममालिका। फलम् भूपः शूरो धनिकश्च रोगी।

---

१. आयुषः काशी-संस्करणे नोल्लेखः।

सुखस्थानादारम्य सुखमालिका। फलम्—बहुदेशभाग्यभोगी महादानीभूपः।
पुत्रस्थानादरम्य पुत्रमालिका। फलम्—नरपतिर्यज्वा कीर्तिमान्।
षष्ठस्थानादाम्य षष्टमालिका। फलम्—क्वचित् धनसुखयुतो दरिद्रो वा।
सप्तमस्थानादारम्य कामादिग्रहमालिका। फलम्--बहुस्त्रीवल्लभोभूपतिश्च।
अष्टमस्थानाद रम्याष्टममालिका। फलम्--दीर्घायुर्धनवर्जितः स्त्रीनिर्जितश्च।
एवं धर्मादिग्रहमालिका। फलम्—गुणनिधिर्यज्वा तपस्वी विभुः।
कर्मादिमालिका। फलम्—धर्मकर्मनिरत सम्पूजितः सज्जनैः।
लाभमालिका। फलम्—राजवराङ्गनामधिपतिः सर्वक्रियदक्षकः।
रि:फगृहमालिका। फलम्—बहुव्ययकरः सर्वत्र पूज्यश्च जातको भवति।

## (६) शङ्खयोगः—

भेदद्वयम्—

(१) यदि पञ्चमेशषष्ठेशौ परस्परं केन्द्रगौ भवेतान्तथा लग्नेशश्च बलवान् स्यात्तदा शङ्खाख्यो योगः।

(२) लग्नेशदशमेशौ चरराशिस्थौ भवेतान्तथा भाग्येशश्च बलवान् भवेत्तदा शङ्खाख्यो योगः। फलम्। अत्र जातो नरो भोगशीलो दयालुःस्त्री पुत्रार्थक्षेत्रवान् पुण्यकर्मा शास्त्रज्ञानाचारसाधुक्रियावान् भवेत्तथा स्याशीतिवर्षन्तमायुः प्रोक्तम्।[1]

## (७) भेरीयोगः—

भेदद्वयम्—

(१) द्वितीयद्वादशप्रथमसप्तमभावेषु ग्रहेषु सत्सु तथा दशमेशे बलवति भेरीयोगः।

(२) बृहस्पतेः सकाशात् शुक्रजन्मलग्नयोः केन्द्रगयोः सतोर्नमेशे च बलवति भेरीयोगः।

---

१. काशी-संस्करणे चास्य नोल्लेखः।

फलम्—दीर्घायुर्विगतरोगभयो नरेन्द्रो बह्वर्थभूमिसुतदारयुतः प्रसिद्ध आचारभूरिसुखशौर्यो महानुभावश्च भवति ।[1]

## (८) मृदङ्गयोगः—

जन्मकाले योग्रहः स्वोच्चराशिस्थस्तन्नवांशेशो यदि केन्द्रकोणस्थः स्वच्चराशिस्थो भवेत् । लग्नेशश्च बलवान् स्यात्तदा मृदङ्गाख्यो योगः ।

फलम्—एतद्योगजातः कल्याणरूपनृपतुल्ययशश्च भवति ।[2]

## (९) श्रीनाथ योगः—

सप्तमभावेशो दशमस्थः स्यात्तथा दशमेशश्चोच्चस्थो नवमेशयुतो भवेत्तदा श्रीनाथाख्या योगः ।

फलम् । एतेन योगेन नरो नृपः सुरेन्द्रतुल्यो भवति ।

## (१०) शारदायोगः—

भेदद्वयम्—

(१) दशमेशे पञ्चमस्थे बुधे केन्द्रस्थे स्वराशिस्थे पूर्णबलान्विते च सूर्ये शारदानामयोगः ।

(२) चन्द्रात् बृहस्पतौ कोणस्थे (नवमपञ्चमस्थानगते इत्यर्थः)
भौमे च बुधात् कोणस्थे (नवमं पञ्चमं वोपगते इत्यर्थः)
बुधश्च बृहस्पतिसकाशादेकादशस्थश्च स्यात्तदा शारदाख्यो योगः ।[3]

---

१. अत्रापि काशी-संस्करणे स्वरूपे फले च भेदः आयुषो नोल्लेख फलेऽपि किञ्चिद्विभेदः । दशमेशस्थाने नवमेशस्योल्लेखः । फलेऽपि सङ्क्षेपः ।
बृ० पा० ३६।१५,१६ (काशी-सं०)

२. अत्र काशी-संस्करणे भेदो दृश्यते । अर्थाल्लग्नेशो बलवान् स्यादन्ये ग्रहाश्च स्वोच्चस्था केन्द्रगाश्च भवेयुस्तदा मृदङ्गयोगः ।
बृ० पा० ३३।१७ (काशी-सं०)

३. अत्र काशी-संस्करणे भेदः । अर्थाद्दशमेशः पञ्चमस्थो बुधः केन्द्रगः सबलः सूर्यश्च स्वराशिगो भवेदथ वा चन्द्रात्कोणगो गुरुर्बुधो वा स्यद्भौमश्चैकादशस्थो भवेत्तदा शारदानाम योगः ।
बृ० पा० ३६।१९-२० (काशी-सं०)

फलम्—धनी, मानी, सुखी, स्त्रीपुत्रयुतो धर्मात्मा च प्रोक्तः ।

## (११) अथ मत्स्ययोगः—

लग्नान्नवमे च पापयुते सति पञ्चमे च शुभाशुभोभयग्रहयुते चतुर्थेऽष्टमे वाऽपि पापयुते सति मत्स्याख्यो योगः ।

फलम् । कालज्ञः, करुणासिन्धुर्गुणवान्, बलरूपवान्, यशस्वी, विद्वान्, तपस्वी च भवति ।[1]

## (१२) कूर्मयोगः—

सप्तमपञ्चमषष्ठमभावेषु स्वोच्चा मित्रग्रहनवांशगताः सौम्यग्रहा भवेयुस्तृतीयलाभलग्नगताश्च मित्रगृहस्था उच्चस्था वा पापग्रहाः स्युस्तदा कूर्माख्यो योगः ।

फलम्—कूर्मयोगजो, नरो, भूपो, धीरो, धर्मसत्त्वगुणान्वितो, सुखी, राजभोगी प्रसिद्धश्च जाते ।

## (१३) खड्गयोगः—

नवमेशश्च द्वितीयस्थः स्याद्द्वितीयेशश्च नवमस्थो भवेल्लग्नेशे केन्द्रकोणगे सति खड्गाख्यो योगः अनेन मनुष्यो, धनभाग्ययुतो, निर्मत्सरो, वेदार्थशास्त्रनिखिलागमतत्त्वज्ञो, युक्तिबुद्धिप्रतापबलवीर्यान्वितः, कुशलः, कृतज्ञश्च भवति ।

## (१४) लक्ष्मीयोगः—

नवमेशे केन्द्रे मूलत्रिकोणस्थे परमोच्चगे च सति लग्नेशे च बलान्विते लक्ष्मीसञ्ज्ञको योगः ।

---

१. अत्र काशी-संस्करणे पापस्थाने सौम्यपाठः । जातकपारिजाते तु पापपाठ एव । अतश्च मुम्बई-संस्करणस्यैवौचित्यम् ।
बृ० पा० (मुम्बई-सं०), २२।२६,     बृ० पा० (काशी-सं०) ३६।२१ ।
कपिलेश्वर शर्मा, जातक-पारिजातः ७।१४६, चौखम्बा संस्कृत सीरिज, बनारस ।

फलम्—गुणाभिरागो, वहुदेशनाथो, विद्वान्, महाकीर्तियुतः, कामदेवसदृशः, वहुदारपुत्रो, राजाधिराजश्च भवति ।[1]

## (१५) कुसुमयोगः—

स्थिरलग्ने सति शुक्रकेन्द्रगश्चन्द्रः पञ्चमे शनिश्च दशमे स्यात्तदा कुसुमाख्यो योगः ।

फलम्—दाता, नृपवन्द्यो भोगी, कुलमुख्यो, गुणी, विद्वान्, सुखी च जायते नरः ।

## (१६) कलानिधियोगः—

द्वितीये पञ्चमे वा गुरुर्बुधशुक्रयुतो दृष्टो वा स्यादथवा शुक्रबुधयोः क्षेत्रेषु (मिथुनकन्यावृषतुलास्वित्यर्थः) स्थितो भवेत्तदा कलानिधिनाम योगः ।

फलम्—गुणवान् कामी, नृपवन्दितो, रोगहीनो, धनी, मानी, विद्वान्, सेनातुरङ्गमदवारणशङ्खभेरीवाद्यान्वितश्च भवति ।

## (१७) पारिजातयोगः—

लग्नेशाधिष्ठितराशिनाथो यद्भावस्थः स्यात्तद्राशिस्वामी तत्नवांशस्वामी वा केन्द्रत्रिकोणस्थः स्वोच्चगो वा स्यात्तदा पारिजातसञ्ज्ञको योगः ।

फलम्—मध्यान्तवयःसौख्यः, नृपवन्द्यो, योद्धा, गजाश्वपतिः, स्वकर्मधर्मरतो दयालुश्च नरो भवति ।

## (१८) लग्नाधियोगः—

लग्नात्सप्तमाष्टमस्थैः पापदृष्टियोगवर्जितैः शुभग्रहैः पापग्रहरहिते च चतुर्थे भावे लग्नाधियोगः ।

फलम्—बहुशास्त्रकर्ता, विद्याविनीतो, वलाधिकारी, निष्कपटो, यशस्वी, धनी, गुणी, मानी, महात्मा, सुखी च भवति ।

---

१. अत्र नवमेशेन सह गुरूस्यापि सन्निवेशः फलदीपिकायाम् ।
मन्त्रेश्वरः, फलदीपिका ६।२१, ५० पङ्क क्रास रोड, बामावांगुदी, बंगलोर ।

## हरिहरब्रह्मयोगाः—

(१) द्वितीयभावपतेः सकाशाद्द्वितीयद्वादशाष्टमभावगाः शुभा ग्रहा भवेयुस्तदा हरियोगः।

(२) सप्तमभावेशाच्चतुर्थनवमाष्टमभावगा गुरुचन्द्रबुधाः भवेयुस्तदा हरयोगः।

(३) लग्नेशाच्चतुर्थदशमैकादशभावगाः सूर्यशुक्रभौमा भवेयुस्तदा ब्रह्मयोगः। एवमेतद्योगत्रयमुपपन्नम्।

फलम्—योगत्रये समुत्पन्नो, विद्वान्धनपुत्रादिसंयुतः, सुखी च भवति।[1]

## (ऋ) चान्द्रयोगाः—

चन्द्राद्द्वितीयस्थाने ग्रहश्चेत्तदा सुनफाख्यो योगो द्वादशे ग्रहश्चेत्तदाऽनफाख्यो योग उभयत्र ग्रहौ चेत्तदा दुरधराख्यो योग उभयत्र ग्रहाभावस्तदा केमुद्रमनामको योगः।

आद्ययोगत्रस्य फलमुत्तमं चतुर्थस्य नोत्तमम्।

अन्येषु बहुषु योगेषु सत्स्वपि केमद्रुमे योगे कुफलं निःस्वत्वं भवति।[2] अत्र केमद्रुमयोगस्य भङ्गेऽपि कानिचिल्लक्षणान्याचार्येण निगदितानि तेषां विचारोऽत्रावश्यकः।

यदि चन्द्रश्च शुभग्रहदृष्टश्चेत्तथा सर्वे ग्रहा केन्द्रस्था भवेयुस्तदाप्ययं योगो विनश्यति यथा चात्र ग्रन्थकारः—

**'सर्वे खेटाः केन्द्रचतुर्थेषु संस्था दुष्टो योगश्चापि केमद्रुमोऽयं।**
**दुष्टं सर्वं स्वं फलं संविहाय कुर्युः पुंसां सत्फलं वै विचित्रम्॥'**[3]

---

१. अस्य योगस्य मुम्बई-संस्करणे नोल्लेखः।

२. अत्र जातकपारिजातकारः

**'योगे केमद्रुमे प्राप्ते यस्मिन् कस्मिश्च जातके।**
**राजयोगा विनश्यन्ति हरिं दृष्ट्वा यथा द्विपाः॥'**

कपिलेश्वर शर्मा, जातकपारिजातः, ७।८२, चौखम्बा संस्कृत सीरिज, बनारस।

३. बृ० पा० पू० भा० २२।५८ (मुम्बई-सं०)

जातकपारिजातकारोऽपि—

> 'निशाकरे केन्द्रगते भृगौ वा जीवेक्षिते नैव दरिद्रयोगः।
> शुभान्विते वा शुभमध्यगेन्दौ जीवेक्षिते नैव दरिद्रयोगः॥'[1]

## [लृ] सौरयोगाः—

चन्द्रं विना सूर्यस्यभावद्वितीयस्थे ग्रहे वेसि द्वादशस्थे च वेशि तयोभत्रयस्थे ग्रहैरुभयचरी नामका योगा भवन्ति। योगत्रयाणां शुभग्रहैः शुभं फलमशुभैरशुभं मिश्रैश्च मिश्रं फलं भवति।[2]

## [ल] पञ्चमहापुरुषयोगाः—

अत्र राजयोगानां मध्ये मङ्गलबुधगुरुशुक्रशनयो यदि स्वस्था उच्चस्था वा केन्द्रगा भवेयुस्तदा क्रमाद्रुचकभद्रहंसमालव्यशशसञ्ज्ञकाः पञ्च महापुरुषनामका योगा भवन्ति। एतेषां योगानां प्रायः सर्वेषु ग्रन्थेषु विस्तर उपलभ्यते। फलमपि सर्वेषां योगानामुत्तममस्ति।[3]

---

१. कपिलेश्वर शास्त्री, जातकपारिजातः ७।८०,८१, चौखम्बा संस्कृत सीरिज, बनारस।

२. अत्र काशी-संस्करणे वेसिस्थाने वोशि दृश्यते, जातक-पारिजाते च वासि वेशी इति शब्दद्वयमुपलभ्यते।
बृ० पा० ३८।१ (काशी-सं०)
जातक-पारिजातः, ७।१२१, चौखम्बा संस्कृत सीरिज, बनारस।

३. *एते पञ्चमहापुरुषयोगा अतीव प्रसिद्धा परं मुम्बई-संस्करणे नोल्लेखः।*
काशी-संस्करणे पञ्चसप्ततिसङ्ख्याकोऽध्यायः पञ्चमहापुरुषलक्षणाध्याय एव दृश्यते।
वराहमिहिरेणापि बृहत्संहितायां ६९ सङ्ख्याकः सकलोऽध्यायः पञ्चमहापुरुषलक्षणनाम्ना वर्णितः। बृहज्जातके नोल्लेखः।
एषां योगानामन्यग्रन्थेषु चाप्युल्लेखो विद्यते।
जातक-पारिजातः, चौखम्बा संस्कृत सीरिज, बनारस ७।५६-६५।
सारावली, मास्टर खेलाड़ीलाल एण्ड संस, बनारस, ३७ अध्यायः सकलः।
अनूप मिश्रः, मानसागरी, भार्गव पुस्तकालय, काशी, ४।१-१८।

## (ग) अन्यविविधयोगाः—

### (अ) राजयोगाः—

अत्र विचारो विधीयते।

राजयोगानां निरीक्षणं लग्नद्वये कर्तुं शक्यते। जन्मलग्ने कारकांशलग्ने वेति। बलाबलमपि योगस्यात्मकारकपुत्रकारकयोस्तथा लग्नेशपञ्चमयोः परस्परं सम्बन्धानुसारमूह्यते। तथा हि।

लग्नेशः पञ्चमस्थाने पञ्चमेशश्च लग्ने (एवं कारकांशेऽपि ज्ञेयम्) च स्यातामथ वात्मकारकपुत्रकारकावुभावपि लग्ने पञ्चमे स्वोच्चस्थौ स्वांशस्थौ शुभग्रहदृष्टौ भवेतान्तदा महाराजनामको योगोभवति। अत्र नरः स्यातः सुखी च भवति। नवमेशात्मकारकौ लग्ने पञ्चमे सप्तमे वा शुभग्रहदृष्टौ स्थितौ भवेतान्तर्हि जातको राजाभवति। अथ वात्मकारकांशाल्लग्नेशाद्वा तृतीये षष्ठमे पापग्रहयुते दृष्टे वाऽपि राजाभवति। पापशुभग्रहमिश्रसंयोगे केवल धनी भवति।

नवमेश आत्मकारकश्च द्वावेव लग्ने पञ्चमे सप्तमे वा शुभग्रहयुतौ दृष्टौ वा भवेतान्तदापि राजयोगः प्रोक्तः।

लग्नेशात्कारकाच्च द्वितीये चतुर्थे पञ्चमे च शुभग्रहयोगे राजा भवति। एवमेव तृतीये षष्ठे च पापग्रहयोगे (युते दृष्टे वेत्यर्थः) सत्यपि राजा भवति। मिश्रग्रहैस्तु केवलं धनी भवति।

कारके ततः पञ्चमे वा लग्ने लग्नपदे वा गुरुचन्द्रदृष्टे युते वा शुक्रे सति राजवर्गीयो भवति।

यद्येक एव ग्रहो जन्मलग्नं होरालग्नं घटीलग्नञ्च पश्यति तदापि महान् राजयोगो भवति।[1]

एतल्लग्नत्रये लग्नद्रेष्काणनवांशलग्नत्रये वा स्वोच्चस्थो ग्रहो भवेत्तदापि

---

१. अस्य योगस्य चर्चा जैमिनिसूत्रे विशेषेण दृश्यते।

'जन्मकाल घटिकास्वेकदृष्टासु राजानः।'

जैमिनीयसूत्राणि १।३।२४, गंगाविष्णु श्रीकृष्णदास, लक्ष्मी वेंकटेश्वर स्टीम् प्रेस, बम्बई।

राजयोगो भवति। यदि सूर्यादयोग्रहाः स्वस्थाः स्वांशस्थाः द्रेष्काणस्था वा लग्नं सप्तमञ्च पश्येयुस्तदापि राजयोगप्रदा भवन्ति।

### दृष्टियोगमधिकृत्य राजयोगबलकथनम्—

पूर्णदृष्टौ सति पूर्णयोगोऽर्द्धदृष्टौ सति चार्द्धयोगः पाददृष्टौ तु पादयोगो राजयोगो भवतीति भावः।

अत्र लग्नसप्तमस्थानयोरपि विशेष उक्तः। लग्नसप्तमयोर्ग्रहः राजयोगप्रदः। अस्य नवांशद्रेष्काणलग्नयोरपि विचारो विधेयः। तत्रापि लग्नसप्तमसम्बन्ध-वैशिष्ट्यं राजयोगप्रदम्। अस्य स्वोच्चादिकस्थत्वे त्वन्यदपि महत्त्वमिति।

राशिहोराद्रेष्काणनवांशत्रिंशांशेष्वेतेषु षड्वर्गबलद्योतकलग्ना यद्येकेनैव ग्रहेण दृष्टा युता वा भवेयू राजयोगो जायते।

लग्नं पश्यन्तः सर्वे ग्रहाः शुभफलप्रदा आचार्येण स्वीकृताः किं वहुना। यदि नीचग्रहोऽपि लग्नस्थो लग्नं वा पश्येत्तर्हि राजयोग उच्यते।

लग्ने द्वितीये च शुभग्रहयुते तृतीये च पापान्विते चतुर्थे च शुभग्रहाश्रिते नरो राजा वा तत्समो जायते।

चन्द्रगुरुशुक्रान्यतम एकोऽपि ग्रहः स्वोच्चस्थो द्वितीयभावगश्च स्यात्तदा राजयोगो वाच्यः।

यदि षष्ठेशाष्टमेशौ शुभग्रहौ यत्रकुत्रस्थौ लग्नं पश्यतस्तदपि राजयोगो ज्ञेयः।

गुरुबुधशुक्रान्यतम एकोऽपि ग्रहः स्वोच्चस्थः स्यादन्ये शुभग्रहा केन्द्रगा स्युस्तदापि राजयोगो निगदितः।।

केन्द्रेषु शुभग्रहेषु तृतीयषष्ठैकादशेषु च पापेषु हीनवंशजोऽपि राजा भवति।

यदि ग्रहत्रयमुच्चस्थं जन्मकाले स्यादथ वा ग्रहाणां चतुष्टयं पञ्चकं वा स्वोच्चत्रिकोणगं भवेत्तदापि हीनवंशजो राजा भवति।

यदि ग्रहाणां षट्कमुच्चस्थं स्यात्तदाचक्रवर्ती राजा भवति।

चन्द्रशुक्रौ यत्र कुत्रस्थौ तृतीयैकादशगौ परस्परं दृष्टौ वा भवेतान्तदापि राजयोगो ज्ञेयः।

दशमेशे स्वोच्चस्थे लग्नं पश्यति सति शुभग्रहेषु केन्द्रगेषु राजयोगः।

यदि चतुर्थस्थानगः शुभग्रहः स्यात्तर्हि राजयोगः।

यदि चतुर्थे चरराशिर्भवेत्तर्हि स्वल्पफलत्वं स्थिरराशौ तु मध्यमफलं द्विस्वभावे तु पूर्णफलं भवति।

यदि चोच्चस्थो ग्रहो कश्चिदेकादशस्थानगश्चतुर्थस्थानगो द्वितीयस्थानगो वा भवेत्तथा वाहनकारको (शुक्र इत्यर्थः) लग्नं पश्येत्तदपि राजयोगो भवति। बलाबलविचारेऽस्य योगस्य यदि न्यूनत्वं भवेत्तर्हि धनधान्यप्राप्तिस्तु निश्चितेति भावः

भावहोराघटीनामकलग्नत्रयं द्वयं वा स्वोच्चस्थो ग्रहः पश्येत्तदापि राजयोगो ज्ञेयः।

केन्द्रत्रिकोणसम्बन्धे राजयोगः—

त्रिकोणत्रयं लक्ष्मीस्थानं केन्द्रचतुष्टयं विष्णुस्थानं प्रोक्तम्।

अनयोः परस्परसम्बन्धेन विशेषराजयोगो भवति।

तत्रापि चतुर्थपञ्चमयोर्नवमदशमयोर्योगे विशेषराजयोगो ज्ञेयः। केन्द्रपञ्चमयोर्योगेऽमात्ययोगः। यदि द्वौ केन्द्रपञ्चमेशौ पारिजातादिवर्गगौ स्यातान्तदा राजयोगस्य प्राबल्यं भवति।

नवमेशदशमेशयोगे राजवन्दितो राजा भवति।

यदि दशमेशश्च नवमस्थः स्यात्तथा नवमेशश्च दशमस्थो भवेदथवा द्वावेवैकस्थौ भवेतामथ वा परस्परं दृष्टौ वान्यतरदृष्टिसम्बन्धयुक्तौ वा स्यातान्तदापि महान् राजयोगः।

एतौ द्वौ पारिजातवर्गगौ भवेतान्तर्हि राजा लोकानुशिक्षको भवति। उत्तमवर्गगौ स्यातान्तर्हि राजा हस्तिघोटकरथादियुतो भवति।

गोपुरवर्गगौ चेत्तर्हि राजाऽन्यराजमण्डलपूजितचरणकमलो भवति। सिंहासनवर्गगौ यदि तदा सर्वपृथिवीपालकश्चक्रवर्ती राजा भवति।

युधिष्ठिरशालिवाहननागार्जुनप्रभृतिकास्तु गोपुरवर्गयोगजाः समुत्पन्नाः।

मन्वादयो राजानस्तु पारावतवर्गजा आसन् ऐरावतवर्गजास्तु प्रथमजः स्वायम्भुवो मनुर्बभूव। हरिश्चन्द्रबलिवैश्वानरा सिंहासनवर्गजा अभवन्। देवलोकवर्गजास्तु भगवतो नारायणस्य सर्वे मत्स्यादिकल्किपर्यन्ता अवतारा निगदिताः।

एतेनैरावतादिवर्गाणामप्युत्तरोत्तरमधिकं प्राबल्यमस्य योगस्य दृश्यते इति सुस्पष्टम् ।

अन्यदपि । यदि वाहनेशो (चतुर्थेश इति) दशमस्थो दशमेशश्च चतुर्थस्थो वा भूत्वा पञ्चमेशेन नवमेशेन वा दृष्टः स्यात्तर्हि राजयोगः ।

चतुर्थेशदशमेशौ पञ्चमेशेन नवमेशेन वा युतौ स्यात्तदपि राजयोगः ।

पञ्चमेशो नवमेशेन लग्नेशेन वा युतो लग्ने चतुर्थे दशमे वा स्थितो भवेत्तर्हि राजवंशज एव राजा भवति ।

गुरुर्यदि स्वराशौ (धनुर्मीनयोरिति) नवमस्थाने शुक्रपञ्चमेशसंयुतो भवेत्तदापि राजयोगः ।

पञ्चमेशदशमेशचतुर्थेशलग्नेशान्यतम एकोऽपि नवमेशेन युतो भवेत्तदा राजयोगो वाच्यः । अत्र सर्वे राजयोगा जन्मलग्नवदात्मकारकलग्नादपि विचार्याः ।

**विशेषः—**

जन्मलग्ने लग्नेशपञ्चमेशयोरात्मकारकलग्ने आत्मकारकपुत्रकारकयोः सम्बन्धयोगे इमे राजयोगा बलशालिनो भवन्ति ।

लग्ने सप्तमे वा लग्नेशे सप्तमेशे आत्मकारके वा सति राजयोगः । एषु स्वोच्चस्थेषु स्वांशस्थेषु च महाराजयोगः प्रोक्तः ।

**विशेषयोगमाह—**

मध्याह्नादर्धरात्राद्वा सार्द्धघटीद्वयपर्यन्तमध्ये यदि कस्यचिज्जन्म स्यात्सोऽपि राजा धनी वा तत्समो जायते ।

लग्नेशात्सप्तमेशाच्च द्वितीये चतुर्थे पञ्चमे च शुभग्रहयुते सति राजयोगः । एवञ्च तृतीये षष्ठे च पापयुतेऽपि राजयोगः । अस्मिन् योगद्वये शुभपापमिश्रे सति मिश्रं फलम् । अर्थात् न राजा नैव दरिद्री चापि तु प्राज्ञः प्रतिष्ठितः सामान्यधनान्वित इति भावः ।

एवमेवात्मकारकादपि चतुर्थे पञ्चमे च शुभग्रहयुते सति राजयोगः तृतीये षष्ठे च पापयुते सत्यपि राजयोगः ।

## (इ) धनयोगाः[1] —

अत्र केचिद्विशेषधनयोगा अपि निर्दिष्टाः सन्ति ।

तेषु लग्नपञ्चमद्वितीयैकादशस्थानानां (धनस्थानानां) विशेषसम्बन्धे विचारो विहितः ।

(१) पञ्चमे शुक्रे स्वस्थे (वृषे तुलायां वा) शनौ चैकादशस्थानाश्रिते वृश्चिके मेषे वा महान् धनयोगः ।

(अत्र काशीसंस्करणे शनिस्थाने भौमशब्दः)[2]

द्वयमपि युक्तम् (एकत्र शनौ लग्नेशत्वात् पञ्चमे वृषराशौ सति तथा भाग्येशत्वात् (तुलाराशौ पञ्चमे सति) अन्यत्र मङ्गलस्य स्वराशियुतत्वादिति भावः)

(अयं योगो मिथुनमकरलग्नयोरेव भवति ।

(२) पञ्चमे स्वराशिस्थे बुधे (मिथुनकन्ययोरिति) चन्द्रगुरुमङ्गलेषु चैकादशस्थितेषु विशेषधनयोगः । (मिथुने गुरौ राशौ पञ्चमे तु चन्द्रस्य षष्ठेशत्वं गुरोश्चैकादशद्वितीयाधीशत्वं मङ्गलस्य तृतीयदशमेशत्वम्) कन्यायां पञ्चमराशौ तु चन्द्रस्य तृतीयेशत्वं गुरोश्चाष्टमैकादशाधिपत्वं मङ्गलस्य सप्तमद्वादशाधिपत्वमस्ति (अयं योगो वृषकुम्भलग्नयोरेव भवति)

(३) पञ्चमे स्वस्थे शनौ (मकरकुम्भयोरिति) चन्द्रे चैकादशस्थेऽप्युक्तयोगः । अयं योगः कन्यातुलालग्नयोरेव भवति कन्यायाञ्चन्द्रश्चैकादशाधिपः तुलायाञ्च दशमाधिपः) अत्र काशीसंस्करणे चन्द्रेण सह सूर्यस्याप्युल्लेखः । एकादशे च भौमेऽपि बहुधनयोगः ।

(४) पञ्चमस्थाने सूर्ये स्वस्थे सति चैकादशे बृहस्पतौ (कुम्भराशौ इत्यर्थः) (अत्र काशीसंस्करणे शनिचन्द्रगुरुत्रयाणामुल्लेखः) मुम्बईसंस्करणे रवीन्दुपूज्यौ इति पाठः कुत्रचित् चन्द्रगुर्वोरित्युल्लेखः) बहुधनयोगः । अयं योगः केवलं मेषराशावेव भवति ।[3]

---

१. बृ० पा० पू० भा० ३० अध्यायः सकलः (मुम्बई-सं०)
२. बृ० पा० ४१।२ (काशी-सं०)
३. बृ० पा० ४१।४ (काशी-सं०)

(५) पञ्चमें स्वस्थे गुरौ (धनुर्मीनयोरिति) चन्द्रभौमयोरेकादशस्थयोरपि बहुधनयोगः। अयं योगः सिंहवृश्चिकलग्नयोर्भवति।
अत्र काशीसंस्करणे विशेषः।[१]

(६) पञ्चमें स्वस्थे मङ्गले सति (मेषवृश्चिकयोरिति) शुक्रे चैकादशे (तुलावृषयोरिति) बहुधनयोगः। अयं धनुःकर्कलग्नयोरेव भवति।

## (उ) दरिद्रयोगाः[२] —

(१) लग्नेशे व्ययस्थे व्ययेशे च लग्नस्थे मारकेशयुते दृष्टे वा सति दरिद्रयोगः।

(२) लग्नेशे षष्ठस्थे षष्ठेशे च लग्नस्थे मारकेशादिदृष्टे युते वा लग्नेशे सति दरिद्रयोगः।

(३) जन्मलग्ने चन्द्रलग्ने वा केतुयुते सति लग्नेशश्च मारकेशादियुतो दृष्टो वाऽष्टमस्थो भवेत्तदापि दरिद्रयोगः।

(४) षष्ठाष्टमव्ययगते पापयुते मारकेशदृष्टे वा लग्नेशे राजवंशीयोऽपि पुरुषो निर्धनोभवति।

(५) पञ्चमेशनवमेशौ षष्ठद्वादशस्थानगौ मारकेशदृष्टौ भवेतान्तदपि निर्धनयोगः।

(६) पञ्चमेशदशमेशौ विना तथा मारकेशयुते दृष्टे वा पापग्रहे लग्ने सति निर्धनयोगः।

(७) पापदृष्टास्त्रिकेशाः यद्भावयुताः स्युरथ वा यद्भावाधिपा वा त्रिकस्था भवेयुस्तदापि नरो दुःखाक्रान्तो निर्धनश्च भवति।

(८) चन्द्रस्य राशिनवांशेशौ मारकेशयुतौ मारकस्थानगौ भवेत्तदापि निर्धनयोगः।

(९) लग्नेशलग्ननवांशेशौ षष्ठाष्टमगौ मारकयुतौ दृष्टौ वा स्यातान्तदपि निर्धनयोगः।

---

१. बृ० पा० ४१।७,८। (मुम्बई-सं०)
२. तत्रैव, ३१।१-२०

## विशेषमाह—

ये ये ग्रहा नवमेशपञ्चमेशयुता दृष्टा वा न स्युस्तया त्रिकेशयुता त्रिकगा वा मारकेशदृष्टाश्च भवेयुस्ते न सुखप्रदाः।

शुभस्थानगताः पापग्रहाः स्युस्तथा पापस्थानगाः शुभग्रहा भवेयुस्तदपि निर्धनयोगः।

कारकलग्नाज्जन्मलग्नाद्वा कारकेशलग्नेशयोर्द्वादशस्थाने दृष्टौ सति धनव्ययशीलयोगः।

एवमेवाष्टमे द्वादशे वा दृष्टौ दरिद्रयोगोऽपि कथितः।

द्वितीयस्थाने मङ्गलचन्द्रौ[1] भवेतान्तर्हि धनहानियोगः। शनियुतिस्तु विशेषधनहानिकरः। किन्तु बुधदृष्टिरपि स्यात्तर्हि बहुधनलाभयोगः।

द्वितीयस्थाने सूर्यः शनिदृष्टः स्यात्तदपि धनहानियोगः।

शनिदृष्ट्यभावे तु महाधनाढ्ययोगः।

बुधदृष्टश्च गुरुस्तत्र भवेत्तर्हि निर्धनयोगः।

बुधश्चापि चन्द्रदृष्टश्च स्यात्तत्र तदापि धनहानियोगः।

(७) पञ्चमे स्वस्थे चन्द्रे शनौ चैकादशस्थे बहुधनयोगः (अयं केवलं मीनलग्ने एव भवति)।

सम्प्रति लग्नमधिकृत्य केवलं धनयोगा निरूप्यन्ते।

(१) लग्ने स्वस्थे (सिंहलग्ने इति) गुरुमङ्गलयुते दृष्टे वा सूर्ये द्रव्ययोगः।
(२) लग्ने स्वस्थे (मेषवृश्चिकयोः) चन्द्रशनिशुक्रयुते युते दृष्टे वा भौमे द्रव्ययोगः।
(३) लग्ने स्वस्थे बुधभौमयुते दृष्टे वा गुरौ (धनुर्मीनयोः) द्रव्ययोगः।
(४) लग्ने शनिशुक्रयुते दृष्टे वा स्वस्थे बुधे सति (मिथुनकन्ययोः) द्रव्ययोगः।
(५) शनिबुधयुते दृष्टे वा लग्ने स्वस्थे शुक्रे (वृषतुलयोः) द्रव्ययोगः।
(६) चन्द्रे गुरुमङ्गलयुते दृष्टे वा लग्ने स्वस्थे (कर्कराशौ) द्रव्ययोगः।[2]

---

१. शनिभौमौ इति काशी-संस्करणे।
२. काशी-संस्करणे शनियोगस्याप्युल्लेखः। बृ० पा० ४१।४५ (काशी-सं०)

(७) शनौ भौमगुरुदृष्टे युते वा स्वस्थे लग्ने धनयोगः (मकरकुम्भयोः)

**एषु धनयोगेषु बलाबलदर्शनार्थं विशेषनियमकथनम्—**

ये ये ग्रहा पञ्चमेशनवमेशाभ्यां युता दृष्टा वा स्युस्ते शुभप्रदाः।

## [ऋ] बन्धनादियोगाः[1]

पराशरेण बन्धनयोगानामपि व्याख्यानं विहितम्।[2]

जैमिनिसूत्रे प्रथमाध्यायस्य तृतीयपादे पूर्णव्याख्यानं द्वयोः पुस्तकयोरत्र प्रायः साम्यमेव किं पराशरस्यानुकरणं जैमिनिसूत्रेऽथ च जैमिनि सूत्रस्यानुकरणं पाराशरीये शास्त्रेऽत्र सन्देहो वर्तते। वयं स्वीकुर्मः पाराशरस्यानुकरणं जैमिनीये ग्रन्थे तत्रापि सन्देहो जैमिनिसूत्रस्यापि मौलिकत्वात्। यदि जैमिनिसूत्रस्यानुकरणं पाराशरीये तदपि नोचितं पाराशरस्य जैमिनितः प्राचीनत्वात्। मूलमत्र विद्वद्भिर्मृग्यम्।

जन्मलग्नात्कारकलग्नाद्वा यदा द्वितीये द्वादशे च पञ्चमे नवमे च षष्ठे द्वादशे च तृतीयैकादशे च चतुर्थे दशमे च ग्रहसाम्यमर्थात् एकमेकं द्वयं द्वयं त्रयं त्रयमिति ग्रहाणामवस्थानं स्यात्तदा नरस्य बन्धनयोगो भवति। यथा द्वितीयस्थाने एको ग्रहस्तथा द्वादशेऽप्येक एव तथा द्वितीये यदि द्वयन्तर्हि द्वादशेऽपि द्वयमित्यर्थः। इत्थ त्रयादिकमपि बोध्यम्। अथ बन्धनकारको योगः शृङ्खलाबन्धनयोगो वोच्यते। पापग्रहेषु शृङ्खलाबन्धस्तनुपीड़ा च शुभेषु केवलं निरोध एव मिश्रेषु मिश्रत्वमिति भावः।

अत्र जैमिनिसूत्रवन्नेत्ररुग्योगस्याप्युल्लेखः।

शुक्रात्कारकलग्नादारूढलग्नाद्वा त्रिकोणस्थः सूर्यदृष्टः राहुः स्यात्तदा नेत्ररोगी भवति।

## [ध] सुखदुःखज्ञानप्रकारः—[3]

---

१. बृ० पा० पू० भा० ३१।२१-२८ (मुम्बई-सं०)

२. काशी-संस्करणे नोल्लेखः।

३. बृ० पा० पू० भा० ३४ अध्यायः सकलः (मुम्बई-सं०)

लोमशसुजन्मसंवादप्रकरणेन जन्ममृत्युपर्यन्तं सुखदुःखज्ञानप्रकारे विशेष प्रकरणमत्र वर्णितमुपलभ्यते ।

सूर्यभौमराहुशनैश्चराः पापग्रहाः प्रोक्ता अत एषां फलं पापफलमेव सदेति शास्त्रे प्रसिद्धम् । अतश्चैषां योगानुसारेण पापादिकफलस्यात्र निरूपण विदधाति ।

एषामंशान् संयोज्य त्रैराशिकानुपातादियोगेनायुःस्पष्टं पूर्वोक्तायुर्दायप्रकारेण कृत्वा जातकस्य सुखदुःखादिकं वाच्यम् ।

तत्रायुःस्पष्टस्य भागानुसारमत्र फलमिति प्रसङ्गे क्रमेण लब्धसङ्ख्यानुरूपं फलं निरूपयति । प्रायशः फलमत्र दुःखरूपमेव ।

त्रिसङ्ख्यालब्धौ किञ्चित्सुखं वाच्यम् । पञ्चाप्तौ स्त्रियो भयम् । नवाप्तौ हृत्पीडा । पञ्चदशाप्तौ भेषजम् (व्याधिरिति भावः) । एकोनविंशांप्तौ स्फुटतनुत्वम् (शरीरे रोग इति) त्रयोविंशाप्तौ कर्णव्यथा । एकोनत्रिंशाप्तौ शीतलादिरोगः । एकचत्वारिंशाप्तौ मृत्युभयम् । एकोनपञ्चाशदाप्तौ जलभयम् । एकोनषष्ट्याप्तौ चौरैर्धनापहरणम् । एकोनसप्तत्याप्तौ वह्निना नाशः । एकोनाशीत्याप्तौ चाल्पघातादिभयम् । एकोननवत्याप्तौ चाप्यल्पघातादिभयमेव । एकोनशताप्तौ सुतोत्पत्तिर्वाच्या । एकोनाष्टोत्तरशताप्तौ व्याधिभयम् । षोडशोत्तरशताप्तौ विवाहो वाच्यः । विंशोत्तरशताप्तौ पक्षद्वयान्ते मरणं वाच्यम् । अत्र न्यूनाङ्केन फलमपि न्यूनमेव वाच्यम् । इत्थं जातकस्य शुभाशुभफलं न्यूनाङ्कादिना वक्तुं शक्यते ।

पूर्वोक्तसूर्यभौमराहुशनीनामंशयोगानुसारं पुनः फलविशेषमाह ।

एषामंशान् संयोज्य संस्कृतस्य स्पष्टायुर्दायस्य भागद्वयं प्रकुर्वीत । अत्र यदि पूर्वभाग उत्तरभागो वा समसङ्ख्याकस्तदा तत्र भागे सुखं वाच्यम् । यदि चोत्तरभागः पूर्वभागो वा विषमसङ्ख्याकस्तदा, चात्र दुःखं वाच्यम् ।

एवमेवास्य भागत्रयं कुर्यात् । तस्मिन् भागसङ्ख्याके वर्षे घातादिकं व्रणादिकं वा वाच्यम् । त्रिभागस्यापि पुनर्भागत्रयं विधातव्यम् । तत्त्रिभागे च विस्फोटकादिकं ज्ञेयम् ।

अस्य भाग चतुष्टयं कुर्यात्तत्सङ्ख्याके वर्षे मातृकादीनां मरणं प्रोक्तम् ।

तस्य चतुर्थभागस्यापि भागचतुष्टयं कुर्यात्तच्चतुर्थांशे चापि पूर्वोक्तं मातृकादिमरणं फलं बोध्यम् ।

अस्य द्वितीयभागानुरूपे वर्षे धनहरणं तृतीये च मरणं ज्ञेयम् । पञ्चमभागे सुतादिकमरणम्, षष्ठभागे रिपुमरणम्, सप्तमभागे स्त्रीमरणम् । अष्टमांशे च ऋणयुक्तं मरणम् । नवमांशे स्वामिनो मरणम् । दशमांशे पितृमरणम् । एकादशांशे जीविकानाशः ।

द्वादशांशे पशुवाहनादिनाशः । लग्नांशे (प्रथमांशे इति) मित्राणां गुरूणां सहचारिणाञ्च नाश इति क्रमेण ज्ञेयम् ।

## पुनर्विशेषमाह—

पञ्चमभागे लाभोऽपि धनस्य भवति । षष्ठांशस्तु सदैव दु.खदः षष्ठांशस्य षष्ठोऽपि कुर्यात्तेनापि दुःखमेव विजानीयात् । सप्तमांशे सप्तमांशस्य दशांशे वा शिलादितो घातादिकं ज्ञेयम् । प्रथमे द्वितीये तृतीये चतुर्थे पञ्चमे षष्ठेसप्तमेऽष्टमे च भागेऽपि चतुष्पदान् मरणं वाच्यम् । नवमे दशमे द्वादशे चैकादशे वापि सरीसृपान्मरणं ज्ञेयम् ।

## पुनरपि फलमाह—

दशमांशे पुण्यदानादिकमेकादशांशे समदुःखकमष्टमांशे मित्रयोगो नवमांशे गुरुयोग इति प्रोक्तम् ।

द्वादशांशेऽतिव्ययस्त्रयोदशांशे मानहानिश्चतुर्दशांशे कलहं पञ्चदशांशे चौरभयं षोडशांशे परजायादिसङ्गावाप्तिः सप्तदशांशे नोद्वेगोऽष्टादशांशे शोक एकोनविंशांशेऽतिधृत्यं विंशांशे बन्धनादिकमिति क्रमेण बोध्यम् ।

सूर्यादिग्रहाणां पित्रादिकारकत्वेन विशेषफलमाह—

यस्मिन् भावे सूर्यस्तिष्ठेत्तद्भावानुसार पितुः सुखादिकं ज्ञेयम् । अर्थात्सूर्याश्रितभावस्य शुभाशुभफलप्राप्तयोगानुसारं पितुः सुखादिकं भवतीति भावः । एवमेव चन्द्राश्रितभावानुसारं विवाहादिक बोध्यम् ।

मङ्गलाश्रितभावानुसारं भ्रातृयोगादिकं विजानीयात् वृहस्पत्यधिष्ठितभावानुसारं पुत्रयोगादिक वाच्यम् । शुक्राश्रितभावानुसारञ्च कन्यायोगादिकं ज्ञेयम्।

शन्याश्रितभावानुसारं मातुः सुखादिकं वोध्यम्। बुधाश्रितभावानुसारं भगिनीयोगो ज्ञेयः।

अनेन सूर्यः पितृकारकः, चन्द्रो विवाहकारकः, भौमो मातृकारकः, बुधो भगिनीकारकः, गुरुः पुत्रकारकः, शुक्रः कन्याकारकः, शनिश्चमातृकारक इति ग्रहाणां पृथक् पृथक् कारकत्वादिकं स्पष्टं भवतीति विशेषेण वोध्यम्।

### विवाहकालज्ञानम्—

लग्नेशसप्तमेशयोरंशादिकं चतुर्भिर्गुणीकुर्यात्। तयोरन्यरमिते विवाहकालो ज्ञेयः। अत्र च लग्नेशाश्रितसप्तमेशाश्रितभावस्पष्टांशादिकस्य योगो विधेयस्तदन्तरमिते विवाहो ज्ञेयः। अपि च लग्नेशसप्तमेशाश्रितराशिसङ्ख्या द्विगुणी कुर्यात्तदन्तरमितेऽपि विवाहो वाच्यः। अथ वा लग्नेशसप्तमेशयोः स्पष्टस्यान्तरङ्कार्यम्। तदन्तरस्य राश्यादिभागं कुर्यात्। स्पष्टाङ्कतुल्ये वर्षे वा विवाहो वोध्यः।

### पुत्रकन्याविचारः—

अत्र पूर्वोक्तप्रकारवत् पञ्चमेकादशभावयोः स्पष्टादिकं युञ्जीत चतुर्भिर्गुणादिकं कृत्वा तदन्तरमितेवर्षे पुत्रकन्यालाभादिकं विचार्यम्।

### भ्रातृभगिनीविचारः—

एवमेव तृतीयैकादशयोः स्पष्टादिके भ्रातृभगिनीलाभादिकं वोध्यम्।

### व्ययलाभादिज्ञानम्—

द्वादशैकादशभावयोरन्तरं कार्यम्।

तदन्तरमिते वर्षे विशेषेण व्ययादिकं वोध्यम्।

एवमेव द्वादशेशैकादशेशयोरन्तरं विधेयम्। तदन्तरमिते वर्षे विशेषेण लाभादिकं वाच्यम्।

### मृत्युकालज्ञानम्—

सूर्यचन्द्रमङ्गलबुधगुरुशुक्रशनिभिराश्रितानां राशीनां स्पष्टादिकं युञ्जीत। तद्योगं द्वादशभिर्विभजेत्। लब्धाङ्कसङ्ख्याकं मृत्युमासं विजानीयात्। शेषं त्रिंश-

द्भिर्गुणितं कृत्वा दिनं बोध्यम् । एवमेव शेषे षष्टिभिर्गुणिते घटीपलादिकस्य ज्ञानं कार्यम् ।

### जलप्रसवज्ञानम्—

लग्नस्य चन्द्रस्य चान्तरं कार्यम् । अन्तरस्य घटीपलादिकं कुर्यात् । ततो जन्मेष्टघटीपलादिकं हीनं कुर्यात् । लब्धघटीपलादिकतुल्ये काले जलप्रसवं विजानीयात् ।

### पुष्कललाभज्ञानम्—

सूर्यचन्द्रस्पष्टयोरन्तरं कार्यम् । तदन्तरे लग्नस्पष्टादिकं युञ्जीत तत्परिमिते वर्षे पुष्कललाभं वदेत् ।

### ऋणस्य ऋणमुक्तस्य वा ज्ञानम्—

चन्द्राश्रितभावेशस्य लग्नेशस्य च स्पष्टादिकयोगेऽष्टमभावस्पष्टं युञ्जीत । तत्परिमिते वर्षे ऋणं वाच्यम् । एवमेव चन्द्राश्रितभावेशलग्नेशस्पष्टयोगे चन्द्रस्पष्टं युञ्जीत तत्परिमिते च वर्षे ऋणमुक्तं विजानीयात् ।

### पीडासौख्यज्ञानम्—

सूर्यचन्द्रलग्नानां स्पष्टादिके तदाश्रितभावेशानां स्पष्टादिकं युञ्जीत । तत्परिमिते वर्षे महतीं पीडां विजानीयात् ।

एवमेव सूर्यचन्द्रलग्नानां स्पष्टादिकात् तदाश्रितभावराशीशानां स्पष्टादिकं हीनं कुर्यात् तत्परिमिते च वर्षे सौख्यम् बोध्यम् ।

### शीतलादिरोगस्य पितुर्मृत्योश्च ज्ञानम्—

पञ्चमनवमभावस्पष्टयोरन्तरं कार्यम् । तत्परिमिते वर्षे शीतलादिकं वाच्यम् । अत्र लग्नद्वितीयभावयोरन्तरस्य सयोगपरिमिते वर्षे पितुर्मृत्युर्ज्ञेयः ।

### कर्मोदयज्ञानम्—

चन्द्राश्रितभावेशदशमभावस्पष्टयोः संयोगपरिमिते वर्षे कर्मोदयं विजानीयात् ।

व्ययज्ञानम्—

नवमेशद्वादशेशयोः संयोगपरिमिते वर्षे व्ययं वाच्यम् ।

(ङ) समीक्षा—

(अ) पूर्वपरम्परा—

राजयोगादिकनिरूपणेऽस्मिन् प्रकरणे पूर्वपरम्पराऽपि सुन्दररूपेण दृश्यते । यद्यपि सर्वस्यास्य प्रकरणस्य चर्चा पूर्वभागे एव लिखिता । परमुत्तरभागेऽपि रश्मिफलवर्णनाध्याये रश्मिसङ्ख्याफलेन ग्रामाधिपयोगानां तत्र च ग्रामाणामपि सङ्ख्याज्ञानस्य देशाधिपयोगा देशानाञ्च सङ्ख्याया सार्वभौमेन्द्रादियोगानां राजयोगानाञ्च चर्चा दृश्यते ।[1] अत्राध्याये नाभसादिराजयोगानां निर्देशोऽप्यस्ति। यथा हि—

'नाभसादिषु योगेषु राजयोगे स्थितं तु तत् ।'[2]

अथ चेदं लिखितमुत्तरभागे यदत्रानुक्तं स्यात्तत्तु गर्गहोरायां द्रष्टव्यम् ।[3] अपि च—

'राजयोगेषु सर्वेषु पैण्ड्यमाह पराशरः ।'[4]

अनेनेद सिध्यति यत्पराशरस्य पूर्वं राजयोगदिवर्णने गर्गस्यापि पूर्णाधिकार आसीत् । एवञ्च पूर्वभागस्य ३३ तमेऽध्याये सुखदुःखादिकथनाध्यायो लोमश उवाचेति शब्देन प्रारब्धो भवति । अतश्च लोमशस्यापि पराशरात्पूर्ववर्तित्वं दृश्यते ।[5] पूर्वोक्तराजयोगानां नाभसादियोगानाञ्च चर्चा नारदमहापुराणेऽपि विद्यते । यत्र नारदम्प्रति सनकसनन्दनसनत्कुमारसनातनैर्ब्रह्मणो मानसपुत्रैरुपदेशो विहितः । अत्र सनन्दनस्य नारदस्य सम्वादो त्रिस्कन्धज्योतिषचर्चायां विद्यते । येनपराशरात्पूर्वं सनन्दनस्यापि पूर्वपरम्परायां सन्निवेशो भवति ।[6]

१. बृ० पा० उ० भा० ४।३५-४० (मुम्बई-सं०)
२. तत्रैव ४।४२ ।
३. तत्रैव १२।४२ (मुम्बई-सं०)
४. तत्रैव १२।२१ ।
५. तत्रैव पू० भा० ३३।१, पृ० २०० ।
६. नारदमहापुराणम्, १।२।१७०-२१३ श्लोकाः संक्षिप्तनारदविष्णुपुराणाकम्, कल्याणम्, जनवरी १९५४, गीता प्रेस, गोरखपुर ।

## (इ) उत्तरवर्त्तिषु प्रभावः—

पराशराद्रुत्तरवर्त्तिषु ऋषिषु ज्योतिषशास्त्रे जैमिनेरेव मूर्धन्यत्वम्। तेन न केवलं राजयोगानामपि तु बन्धनादिकानामन्येषामपि योगानां विशदा चर्चा विहिता। यथा हि—

'जन्मकालघटिकास्वेकदृष्टासु राजानः।'[1]

'पश्चाद्रिपुभाग्ययोर्ग्रहसाम्ये बन्धः' 'कोणयोरिपुजाययोः कीटा युग्मयोर्दाररिष्फयोश्च।'[2] 'अपि च 'मातरि गुरौ शुक्रे चन्द्रे वा राजकीयाः।'[3] 'स्वदारगयोः शुक्रचन्द्रयोरातोद्यं राजचिह्नानि च'[4]।

इत्यादि। अस्य मूलमपि बृहत्पाराशरे विद्यते।[5]

पौरुषेषु वराहमिहिरस्यैव प्रमुखत्वम् तेन न केवलं बृहज्जातके एव राजगादीनां योगानां चर्चा कृता अपि तु संहिताग्रन्थे बृहत्संहितायामपि पञ्चमहापुरुषयोगानां जातकयोगानामुल्लेखो विस्तरेण फलकथनपूर्वकं विहितः। बृहज्जातकेऽपि ११, १२, १३, १४ तमा अध्यायाः क्रमेण राजयोगनाभसयोगचन्द्रयोगद्विग्रहयोगनाम्ना दृश्यन्ते। अत्र सर्वा छाया बृहत्पाराशरस्य विद्यते।[6]

सारावल्यामपि कल्याणवर्मणा १३, १४, २१, ३५, ३७, ३६ तमा अध्यायाः चन्द्रयोगसूर्ययोगनाभसयोगराजयोगपञ्चमहापुरुषयोगराजयोगभङ्गनाम्नाऽङ्किताः सन्ति।[7]

---

१. जैमिनिकृतं 'जैमिनिसूत्रम्', १।३।२४, चौखम्बासंस्कृत सीरिज, बनारस।
२. तत्रैव १।३।४२।
३. तत्रैव, १।३।३५।
४. तत्रैव, १।३।४४।
५. बृ० पा० पू० भा० ३६।२५,२६। (मुम्बई-सं०)
   तत्रैव ३१।२०-२४
६. अच्युतानन्द झा, 'बृहज्जातकम् ११, १२, १३, १४ अध्यायाः, चौखम्बा संस्कृत सीरिज बनारस।
७. सीताराम झा, सारावली १३, १४, २१, ३५, ३७, ३६ अध्यायाः मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

अत्र च बृहत्पाराशरस्य बृहज्जातकस्य छाया दृश्यते। जातकपारिजाते वैद्यनाथाचार्यमहोदयेन सप्तमेऽध्याये राजयोगनामके सर्वेषां नाभसचान्द्रसौरादि-योगानां विशदं वर्णनं कृतमस्ति। अत्र च पूर्णरूपेण बृहत्पाराशरस्यैवानुकरणम्।[1] सर्वार्थचिन्तामणिकारेण व्यङ्कटेशेन नवमोऽध्यायो राजयोगनाम्नाङ्कितः। अत्र च चान्द्रसौरयोगानामन्येषाञ्च योगानां बृहत्पाराशरस्यैवानुकरण विहितम्।[2] आचार्येण ढुण्ढिराजमहोदयेनापि जातकाभरणे राजयोगानां पञ्चमहापुरुषयोगानां नाभसयोगानामनुकरणं कृतमस्ति।[3]

आचार्यपुञ्जराजेन १४, १५, १७, १६, २० तमा अध्यायाः शम्भुहोराप्रकाशे विविधयोगकर्माजीवराजयोगराजयोगभङ्गपञ्चमहापुरुषलक्षणनाम्ना निरूपिताः सन्ति।[4]

एवमेव जातकादेशमार्गदैवज्ञाभरणादिग्रन्थेष्वपि द्रष्टव्यम्।

## (उ) वैशिष्ट्यम्—

बृहत्पाराशरेऽस्मिन् ग्रन्थे राजयोगादियोगानामद्भुतो ज्ञानप्रकारः। अन्येषु-ग्रन्थेषु केवलं ग्रहाणां पापपुण्यप्रकारेण तथा च तेषां ग्रहाणां योगेनैव योगास्तेषां फलञ्च दृश्यते, परं पराशरस्य ग्रहाणां पापपुण्यज्ञाने भिन्ना प्रक्रिया विद्यते। अत्र च लग्नादिभावानां स्वामित्रकारेण ग्रहाणां पापपुण्यत्वं स्वीक्रियते। तथा च कलियुगे पराशरस्यैवानुसरणं विहितम्।

**'कलौ पराशरः स्मृतः।'[5]**

---

१. कपिलेश्वर शास्त्री, जातकपारिजातः ७ अध्यायः चौखम्बा संस्कृत सीरिज बनारस।

२. महीधर शर्मा, सर्वार्थचिन्तमणिः, ६ अध्यायः, गंगाविष्णु श्रीकृष्णदास, लक्ष्मी वेंकटेश्वर प्रेस, कल्याण बम्बई।

३. जातकाभरणम् १८, १८, २० अध्यायाः, किशनलाल द्वारकाप्रसाद, बम्बई भूषण प्रेस, मथुरा।

४. महीधर शर्मा, शम्भुहोराप्रकाशः, १४, १५, १७, १६. २० अध्यायायः, गंगाविष्णु श्रीकृष्णदास, लक्ष्मीवेंकटेश्वर प्रेस, कल्याण बम्बई।

५. बृ० पा० विद्वदभ्यर्थना, पृ० ४ (मुम्बई-सं०)

इयं ग्रहाणां पापपुण्यज्ञानप्रक्रियाऽतीव मनोरमा शुद्धा च।

अनया प्रक्रियया ग्रहाणां फलकथनं प्रत्यक्षेण चमत्कारि दृश्यते जैमिनिना तु या विलक्षणा प्रक्रिया प्रकटीकृता तस्या मूलमपि पाराशरहोराशास्त्रे विद्यते इति पूर्वं मया लिखितम्। अनया ग्रहाणां योगायोगेन फलकथनमेव फलितज्यौतिषशास्त्रस्य तत्त्वमिति बी० वी० रमण महोदयेनाङ्कितम्।[1] अपि च जैमिनिसूत्रस्याध्यायद्वये एव सर्वाष्टी टीका वर्तन्ते परञ्चावशिष्टाध्यायद्वये राजयोगादिकानां विशेषेण वर्णनं दृश्यते तत्राङ्गलभाषायां टीकोपलभ्यते। अत्र च येषां राजयोगानां वा महाराज-योगानामारम्भे एव—

'अथ राज जनिताभ्यां योगे योगे लेयाऽमेषाधिपः, 'उच्चनीचस्वांशवती तावृशदृष्टिश्च शुभमातृद्रष्टे यदि महाराजः। लेयलाभयोः परकाले'

इत्यादिकेषु सूत्रेषु चर्चा दृश्यते[2] यत्रापि मूलं बृहत्पाराशरे विद्यते यथा हि—

आत्मकारकपुत्राभ्यां राजयोगं प्रकल्पयेत्॥
तनुपञ्चमनाथाभ्यां यथैव द्विजसत्तम।
केन्द्रपुत्रेशयोर्योगे योगोऽमात्यमिदो भवेत्।
कर्मेशस्य तु योगेन राजसाचिव्यतामियात्॥

इत्यादि।[3]

अन्यदपि वैशिष्ट्यम्—

यदीमे राजयोगा कलौ विप्राणां भवेयुस्तदा तेषां राजशासनादिकं न भवति। केवल ते विप्राः यज्ञयागकर्मनिष्ठाः सन्तः श्रीधनैर्युक्ता भवन्ति। शूद्रादयो म्लेच्छधर्मिणश्च राजयोगेषु सत्सु राजयोगयुक्ताः कलियुगे भवन्ति। तथा हि—

---

१. बी० वी० रमणः, थ्री हुण्ड्रड इम्पोर्टेण्ट कम्बिनेशनज, भूमिकायां, पृ० २ पं० ७, रमण पब्लिकेशञ्ज, बंगलोर।

२ सुनीतकुमारकारः, जैमिनिसूत्राज, ३।१-३, रमन पब्लिकेशन्ज, बंगलोर।

३. वृ० पा० पू० भा० २८।४, २८।३८,४०।

'शूद्रादयः कलौ राजधर्मिणो म्लेच्छधर्मिणः ।
विप्राश्चेच्छ्रोधनैर्युक्ता यज्ञकर्मक्रिया रताः ।'[1]

अत्र राजयोगान्तमभिप्रायोऽपि ज्योतिषरत्नाकरकारेणैवं लिखितम् । 'यद्राजयोगस्य नायमर्थः नृपस्योपाधिरिति । अपि तु राजयोगस्यायमभिप्रायः यद्राजयोगयुक्तो मनुष्यः स्वजीवने सांसारिकसुखद्रव्यादिविषये साफल्यमुपयास्यतीति । साफल्यस्यापि न्यूनाधिक्यं ग्रहाणां बलाबलेषु निर्भरमिति भावः ।'[2]

१. बृ० पा० उ० भा०, ४।४१ (मुम्बई-सं०)
२. श्री देवकीनन्दनसिंह, ज्योतिषरत्नाकरः प्रथमखण्ड, पृ० ३१३, श्रीगिरिजाधरसिंह, ग्राम तथा पत्रालय—माउर, जि० मुंगेर ।

नवमोऽध्यायः

# दशानिरूपणम्

## (क) विषयावतरणम्—

अस्मिन् पाराशरहोराशास्त्रे दशाविचारस्य महत्त्वपूर्णं स्थानम्। दशाविचार एव भारतीयानां ज्योतिर्विदामाचार्याणामद्भुता पद्धतिरिति कथ्यते। अस्य दशाविचारस्यास्मिन् ग्रन्थे—३५, ३६, ३७, ३८, ३९, ४०, ४१, ४२, ४३, ४४, ४५, ४६, ४७, ४८, ४९, ५०, ५१ तमेषु इति, पूर्वभागस्य च सप्तदशसङ्ख्याकेष्वध्यायेषु विचार उपलभ्यते। अध्यायानां सर्वाधिकसङ्ख्यात्रास्मिन् विचारे एव दृश्यते।

३५ तमे अध्याये विविधप्रकाराणां दशानां भेदानां नामनिर्देशपूर्वकं तासामानयनप्रकारविधिर्निर्दिष्टः। दशायाः ४२ भेदानामुल्लेखोऽत्र। ३६ तमेऽध्याये विंशोत्तरीदशाया विशेषफलकथनमत्र विहितम्। ३७ तमे अध्याये दशाया भुक्तभोग्यानयनप्रकारपुरःसरं विंशोत्तर्यां सूर्यान्तर्दशाफलमङ्कितम्। ३८ तमादध्यायादारभ्य ४५ तमाऽध्यायान्तं चन्द्रादीनामन्तर्दशानां फलं निर्दिष्टम्। ४६ तमेऽध्याये विदिशाफलं (प्रत्यन्तरफलमिति) दृश्यते। ४७ तमेऽध्याये सूक्ष्मदशानयनप्रकारविधिपुरःसरं तत्फलस्य विवेचनं विद्यते। ४८ तमेऽध्याये प्राणदशाफलं वर्त्तते। ४९ तमेऽध्याये कालचक्रदशानयनविधिनिर्देशपूर्वकं तत्फलकथनप्रकारो निगदितः। ५० तमेऽध्याये चरदशाफलकथनं ५१ तमेऽध्याये च दशावाहनफलं सुदर्शनचक्रस्य च फलं विशेषेण दृश्यते।

## (ख) दशास्वरूपम्[1] —

ज्योतिषशास्त्रे दशाया महत्त्वपूर्णं स्थानमस्ति। अयमेव महानाश्चर्यकरः

---

१. वृ० पा० (मुम्बई-सं०) पू० भा० ३५ अध्यायमारभ्य ५० अध्यायान्तं द्रष्टव्यम्।

प्रकारो यत्र पाश्चात्याः साम्प्रतमपि मुह्यन्ति । अनेन प्रकारेणैव मानवस्य सकल-जीवनफलनिरूपणं भवति । जन्मकुण्डलीचक्रे तु विविधराजयोगदरिद्रयोगानां पितृमातृपुत्रभ्रातृजायादिकानां विविधवस्तूनां सुखदुःखादिकं ज्ञानमेतेषां प्राप्तिवियोग-दर्शनं रूपैश्वर्यादिविविधनिरूपणं भवति । परन्तु प्रश्नश्चायमत्र प्रादुर्भवति यत्कदा जन्मना दरिद्रोऽपि राजयोगं प्राप्तस्तथा राजकुले जातोऽपि दरिद्रतां प्राप्त इति दृष्ट्वा मनसि चेयमाकांक्षा समुत्पद्यते यदिमे राजदरिद्रादियोगाः कदा फलं प्रापयिष्यन्ति वयस आदौ मध्ये चान्ते किं भविष्यति । कदा विवाहः कस्मिन् काले मातृपितृमरणं कदा राज्याप्तिः कदा सुतोत्पत्तिः कदा बन्धनयोगः कदा भाग्योदयं कदायुषः समाप्तिरित्यादिविविधवस्तूनां निर्देशनं दशाप्रकारेण ज्ञातुं शक्यते ।

सर्वाश्चैता दशा नक्षत्रग्रहराशित्रयमधिकृत्य वर्णिताः सन्ति । अस्या भेदा बहवो दृश्यन्ते ।

सर्वेषु प्रायो ज्योतिषग्रन्थेषु दशाप्रकरणानां वर्णनमुपलभ्यते ।

अस्मिन् पाराशरीये होराशास्त्रे तु प्रायशः सकलानामेव भेदानां वर्णनं दृष्टिपथमवतरति ।

## (इ) दशानां भेदाः—

अत्राचार्येण द्विचत्वारिंशद्भेदा निरूपिताः।[1] तासां निम्नप्रकारेण नामानि निगदितानि सन्ति ।

(१) विंशोत्तरी (२) षोडशोत्तरी (३) द्वादशोत्तरी (४) अष्टोत्तरी (५) पञ्चोत्तरी (६) शताब्दिका (७) चतुरशीत्यब्दिका (८) द्विसप्ततिका (९) षष्टि-हायनी (१०) षट्त्रिंशत्का (११) नवमांशनवदशा (१२) राश्यंशदशा (१३) काल-दशा (१४) कालचक्रदशा (१५) चक्रदशा (१६) चरपर्या दशा (१७) चरदशा (१८) नवमांशस्थिरदशा (१९) स्थिरदशा (२०) उत्तरदशा (२१) ब्रह्मग्रहाश्रितषष्ठां-त्यब्दिकादशा (२२) केन्द्रादिदशा (२३) कारकग्रहदशा (२४) मण्डूकदशा (२५) शूलदशा (२६) नक्षत्रदशा (२७) योगार्द्धदशा (२८) दृग्दशा (२९) त्रिकोणदशा (३०) नक्षत्रदशा (३१) तारादशा (३२) वर्णदशा (३३) पञ्चस्वरदशा (३४) योगिनी दशा (३५) पैण्ड्यांशनैसर्गिकदशा (३६) संध्या दशा (३७) पाचकदशा ।

१. बृ० पा० (मुम्बई-सं०) ३५।११
काशी-संस्करणे केवलमष्टविंशतिसंख्याकानां भेदानामुल्लेखः ।
बृ० पा० ४६।२-११ (काशी-सं०)

अत्रेमा एव केवलमुल्लिखिता शेषा पञ्च का इति निर्देशाभावः अथ च विंशोत्तरी पञ्चधा निर्दिष्टा। किं तस्या भेदान् संयोज्य यदि द्विचत्वारिंशद्भेदा इति मन्यामहे तदपि विंशोत्तर्या पूर्वमेव निर्देशत्वात्तदाप्येकचत्वारिंशद्भेदा भवन्ति।

अत्र भेदेषु अष्टकवर्गदशायाः नोल्लेखस्तस्याः सन्निवेशे ४२ सङ्ख्यका भेदा अपि भवितुमर्हन्ति।

आसु सर्वासु दशासु विंशोत्तरी दशैव मुख्या।

**कलौ तु विंशोत्तरी मतेति' ज्योतिर्विद्भिः कथ्यते।**

काशीसंस्करणेऽयं पाठोऽप्युपलभ्यते।

**'दशाबहुविधास्तासु मुख्या विंशोत्तरी मता।'**
**कलौ विंशोत्तरी तस्माद् दशा मुख्या द्विजोत्तम॥'**

पञ्च चास्या भेदाः फलज्ञानार्थम्।

(१) दशा (२) अन्तर्दशा (३) प्रत्यन्तर्दशा (४) सूक्ष्मदशा (५) प्राण-दशा।

## (ख) दशानयनप्रकारः—

### (अ) विंशोत्तरीदशानयनविधिः—

अश्विनीप्रभृतिकानि सप्तविंशतिनक्षत्राणि सन्तितत्र कृतिकात आरम्य पूर्वाफाल्गुनीपर्यन्तमुत्तराफाल्गुनीतः पूर्वाषाढापर्यन्तमुत्तराषाढातो भरणीपर्यन्तं वारत्रयं सूर्यचन्द्रमङ्गलराहुगुरुशनिबुधकेतुशुकाख्यानां नवग्रहाणां क्रमशो दशाकालो भवति। अत्र सूर्यस्य ६, चन्द्रस्य १०, भौमस्य ७, राहोः १८, गुरोः १६, शनेः १९, बुधस्य १७, केतोः ७, शुक्रस्य च २०, सङ्ख्याकानि वर्षाणि गण्यन्ते। इत्थं पूर्णायुर्विंशोत्तरशतमिति।

---

१. बृ० पा० (काशी-सं०) ४६।३
२. तत्रैव, ४६।१४

## (इ) भुक्तभोग्यज्ञानप्रकारः—

यस्य ग्रहस्य दशायां जन्म भवेत्तस्य दशा वर्षसङ्ख्यया जन्मकाले नक्षत्रस्य विगतपलानि (भयातमित्यर्थः) गुणीकृत्य सर्वनक्षत्रस्य पलैः (भभोगेनेति) विभज्य गतवर्षसङ्ख्या भवति। पुनर्भयातद्वादशसङ्ख्यया गुणीकृत्य भभोगेन विभज्य गतमासा भवन्ति। पुनश्च त्रिंशत्सङ्ख्यया भयातं गुणीकृत्य भभोगेन विभज्य गतदिवससङ्ख्या भवति।

एवमेव षष्टिसङ्ख्यया गुणीकृत्य भभोगेन विभाज्य घटिकाः पुनश्च विघटिका भवन्तीति भावः।

एवं गतदशाभागं पूर्णदशाभागे हृत्वा शेष भागो दशायाः भोग्यकालो भवति। गतभागः पूर्वजन्मनि गत इत्यर्थः।

## अन्तर्दशाप्रकारमाह—

यस्य ग्रहस्य महादशायां यस्य ग्रहस्यान्तर्दशाज्ञानस्यावश्यकता स्यात्तस्यैव ग्रहस्य महादशावर्षाणां गुणनं कृत्वा दशसङ्ख्यया भागमाहरेत् लब्धा माससङ्ख्या भवति।

शेषं त्रिंशत्सङ्ख्यया गुणितं कुर्यात्ततश्च दशभिर्भागमाहरेत्ततश्च दिनानि भवन्ति।

## प्रत्यन्तर प्रकारमाह—

यस्य ग्रहस्य प्रत्यन्तरमिच्छेत्तस्यान्तर्दशा वर्षादिकानां दिनानि कृत्वा ग्रहवर्षसङ्ख्या गुणनं कुर्यात्ततश्च विंशोत्तरशतेन विभज्य दिनानि विजानीयात्। एवं पुनश्च षष्टिसङ्ख्यया गुणीकृत्य विंशोत्तरशतेन विभज्य घटिकाविघटिकादिकस्य ज्ञानं कुर्यादिति।

एवमेव प्रकारः सूक्ष्मदशानयने प्राणदशानयने चेति सर्वं विज्ञेयमिति भावः।

## (ई) अन्यासां षोडशोत्तरीप्रभृतीनां दशानां पृथक् पृथक् आनयनविधि—

यदा कस्यचित्कृष्णपक्षे जन्मलग्नञ्च चन्द्रहोरायां भवेदथ च शुक्लपक्षे सूर्यहोरायां भवेत्तदा षोडशोत्तरी दशा फलज्ञानार्थमुपयुक्तेति भावः।

## आनयनप्रकारमाह

पुष्यनक्षत्रादारभ्य क्रमशः सूर्यमङ्गलगुरुशनिकेतुचन्द्रबुधशुक्रानामष्टग्रहाणां दशाक्रमो भवति (अत्र राहोर्गणनाभावः इति)। ११, १२, १३, १४, १५, १६, १७, १८, सङ्ख्याकानि क्रमाद्वर्षाणि भवन्ति।

## द्वादशोत्तरी—

यदा कस्यचित् पुरुषस्य लग्ने शुक्रस्य नवांशे सति जन्म भवेत्तदा द्वादशोत्तरी नाम दशाया ग्रहणं भवति।

## आनयनविधिमाह—

जन्मनक्षत्राद्रेवतीनक्षत्रान्तङ्गणयेत्ततश्च तां सङ्ख्यामष्टभिर्विभजेत् शेषेण क्रमशः सूर्यगुरुकेतुबुधरविमङ्गलशनिचन्द्रादीनां ग्रहाणां द्विसङ्ख्यावृद्धिक्रमेणार्थात् ७, ९, ११, १३, १५, १७, १९, २१ क्रमेण वर्षाणि ज्ञेयानि।

## अष्टोत्तरीप्रकारः—

यदा लग्नं विनाऽन्यत्र कुत्रापि लग्नेशाद्राहुस्तिष्ठेत्तदाष्टोत्तरी दशा ग्राह्या। मुम्बई संस्करणेऽस्या भेदद्वयं प्रदर्शितम्।

एकत्र कृत्तिकादिनक्षत्रादारभ्याथवाऽन्यत्रार्द्रानक्षत्रादारभ्य वा गणनां कुर्यात्। तत्र क्रमः।

आर्द्रानक्षत्रतः कृत्तिकातो वा चतुष्टयत्रितयक्रमेण नक्षत्राणां सूर्यचन्द्रमङ्गल बुधशनिगुरुराहुशुक्रादीणां ज्ञातव्यानि। यथार्द्रापुनर्वसुपुष्याश्लेषाचतुष्ट्यं सूर्यस्य मघापूर्वाफाल्गुन्युत्तराफाल्गुनीत्रितयञ्च चन्द्रस्येव पुनश्चतुष्टयं भौमस्य त्रितयं बुधस्येत्यादिकम्।[1]

## पञ्चोत्तरी—

---

1. बृ० पा० पू० भ० ३५।२३ (मुम्बई-सं०)
   काशीसंस्करणेऽन्यप्रकारस्याप्युल्लेखः। तयायं विशेषः, कृष्णपक्षे दिवा जन्म शुक्लपक्षे रात्रौ जन्म च स्यात्तदैवाष्टोत्तरीफलकथनाय प्रोक्ता।
   अत्र नक्षत्राशमधिकृत्य दशानयनप्रकार उक्तस्तस्यान्यत्रोल्लेखो न दृश्यते। (बृ० पा० ४६।२१-२३, काशी-सं०)

यदा कस्यचित्कर्कलग्ने कर्कस्यैव द्वादशांशे जन्म भवेत्तदा पञ्चोत्तरी दशा ग्राह्या।

**आनयनप्रकारः—**

अनुराधानक्षत्रादारभ्य जन्म नक्षत्रान्तं यावती सङ्ख्या स्यात्तत्र सप्तभिर्भागं कुर्याच्छेषसङ्ख्यया क्रमात्सूर्यबुधशनिमङ्गलशुक्रचन्द्रगुरूणां सप्तग्रहाणां दशाक्रमो विज्ञेयः वर्षाणि चैकवृद्धया क्रमादेतेषां १२, १३, १४, १५, १६, १७, १८ सङ्ख्यकानि ज्ञेयानि।

**शताब्दिका—**

वर्गोत्तमनवांशे जन्म चेत्तदा शताब्दिका दशा प्रोक्ता।

**आनयनप्रकारः—**

रेवतीनक्षत्रादारम्य जन्मनक्षत्रान्तं गणयित्वा तत्सङ्ख्या सप्तभिराहृत्य शेषसङ्ख्यया क्रमात्सूर्यचन्द्रशुक्रबुधगुरुमङ्गलशनीनां दशाक्रमं विजानीतात् ५, ५, २०, २०, १०, १०, २०, २०, ३० वर्षाणि क्रमेण ज्ञेयानि।

**चतुरशीत्यब्दिका—**

दशमेशे दशमभावस्थे जन्म चेत्तदा चतुरशीत्याब्दिका दशा ग्राह्या।

**आनयनविधिमाह—**

स्वातिनक्षत्रादारभ्य जन्मनक्षत्रान्तगणनया यावती सङ्ख्या स्यात्तां सप्तभिराहृत्य क्रमात्सूर्यादीनां सप्तग्रहाणां दशाक्रमः। वर्षसङ्ख्या च प्रत्येकस्य १२ ज्ञेया।

**द्विसप्ततिका दशा—**

यदालग्नेशश्च सप्तमे भावेस्यात्सप्तमेशश्च लग्ने भवेत्तदा द्विसप्ततिका दशा ग्राह्या।

**आनयनप्रकारः—**

मूलनक्षत्रादारभ्य जन्म नक्षत्रान्तसङ्ख्यामष्टभिराहरेच्छेषसङ्ख्यया राहुयुतानां सूर्यादिग्रहाणां दशाक्रमो विज्ञेयः। सर्वेषां ग्रहाणां वर्षसङ्ख्या ९, इति ज्ञेया।

**षष्टिहायनी—**

यदा लग्नेशश्चन्द्रराशीशश्चैक एव स्यात्तदेयं दशा ग्राह्या ।[1]

**आनयनप्रकारः—**

अश्विनीनक्षत्रतस्त्रितयञ्चतुष्टयञ्चेति क्रमेण नक्षत्राणामष्टोत्तरीदशावद्गुरुसूर्यमङ्गलचन्द्रबुधशुक्रशनिराहूणां दशाक्रमो ज्ञेयः। गुरुसूर्यभौमानां १०, १० वर्ष सङ्ख्या तथाऽन्येषां ग्रहाणां ६, ६ वर्षसङ्ख्येति। यथाश्विनीभरणीकृत्तिकेति त्रितय गुरोस्तथा रोहिणीमृगशिरार्द्रापुनर्वसुचतुष्टयं सूर्यस्येत्यादिकं बोध्यम्।

**षट्त्रिंशतिका—**

यदि मनुष्यस्य दिवसे सूर्यहोरायां रात्रौ च चन्द्रहोरायां जन्म स्यात्तदेय दशा ग्राह्या।

**आनयनप्रकारः—**

श्रवणनक्षत्रादारम्य जन्मनक्षत्रान्तां सङ्ख्यामष्टभिर्हृत्वा शेषसङ्ख्यया क्रमाच्चन्द्रसूर्यगुरुमङ्गलबुधशनिराहूणां दशाक्रमो ज्ञेयः।

एकैकवृद्ध्या चैषां क्रमेण १, २, ३, ४, ५, ६, ७ सङ्ख्याकानि वर्षाणि ज्ञेयानि।[2]

**नवमांशनवदशा—**

इयं दशा सदा ग्राह्या।

**आनयनप्रकारः—**

ग्रहेषु यस्यांशकलाविकलादिकं सर्वग्रहापेक्षया न्यूनं तस्य दशा प्रथमा तथोत्तरमनेन क्रमेणैवार्थात् तदधिकांशकलाविकलादिकस्य द्वितीयातृतीयेत्यादिनवग्रहाणां दशा बोध्या।

---

१. काशी-संस्करणे भिन्न प्रकारः। तत्र जन्मलग्ने सूर्ये सति चेयं दशा ग्राह्या। बृ० पा० ४६।४० (काशी-सं०)

२. अत्र टीकाकारेण सीतारामझामहोदयेन विशेषटिप्पण्यामिदमभिमतं स्वकीयं प्रकटीकृतमस्ति यत्पराशरमतेन तु विंशोत्तरीदशैव मुख्या तथाष्टोत्तरीप्रभृतिका दशास्तत्तस्यितौ व्यक्तिविशेषकृते विशिष्टा इति। तत्रैव, पृ० ३०१।

ननु यदि ग्रहांशकलादिकं ग्रहद्वयस्य त्रयस्य वा साम्यन्तर्हि यो ग्रहो नैसर्गिकबलहीनस्तस्य दशा प्रथमेति ज्ञेयम् ।

**कालदशा—**

नास्या विशेपत्वं प्रयोजने कथितम् ।

**आनयनप्रकारः—**

अहोरात्रस्य षष्टिघटिकं मानमस्ति ।

सूर्योदयात्सूर्यास्तसमयाच्च पूर्वं परं पञ्च पञ्च घटिका सन्ध्यानाम्ना निगदिता इत्थञ्च दश घटिका रात्रौ दश घटिका दिने सन्ध्या घटिका सञ्जाता पञ्च सूर्योदयात्परं पञ्च च सूर्यास्तात्पूर्वमिति भावः । पञ्च सूर्योदयादर्वाक् पञ्च सूर्यास्तात्परं दशघटिका इति । शेषे विंशति घटिका दिने विंशतिघटिकाश्च रात्रौ सन्ति । दिने विंशतिघटिकाना पूर्णा सञ्ज्ञा तथा रात्रौ विंशतिघटिकानां मुग्धेति । सूर्योदयीयदशसन्ध्याघटिकानां खण्डाख्यासञ्ज्ञा तथा सूर्यास्तोयदशसन्ध्याघटिकानां सुधा सञ्ज्ञा कथिता । पूर्णमुग्धमध्येष्टघटिकाना षड्भिर्गुणनं कुर्यात्तथा खण्डसुधाघटिकानां द्वादशभिर्गुणनं कुर्यात्तथा पञ्चचत्वारिंशत्सङ्ख्यया विभजेत् । लब्धघटिकानां सूर्यादिग्रहमानसङ्ख्यया (अर्थात् यथा सूर्यस्यैका चन्द्रस्य द्वयं भौमस्य त्रयमित्यादि) गुणनं कुर्यात्ततश्च मासानां वर्षादिकं कृत्वा सूर्यादिनवग्रहाणां क्रमशो दशाक्रमं लिखेत् ।[1]

**चक्रदशा—**

दिवा जन्म चेत्तदा राशीश्वरस्य राशितो रात्रौ जन्म चेत्तदा लग्नस्य राशितः सन्ध्याञ्जन्म चेत्तदा द्वितीयभावराशितो दशाक्रमो ज्ञेयः । प्रत्येकराशेर्दशायाः १० वर्षाणि प्रोक्तानि ।

**चरदशा—**

अस्या दशाया जैमिनिनाऽपि विशिष्टत्व प्रदर्शितमस्ति । अनया दशयैव तत्रायुर्दायादिकस्यापि विचारो विहितः ।

---

१. काशी-संस्करणे मुग्धपूर्णघटिकाना द्विर्गुणनंकृत्वा 'खण्डसुधानाञ्च चतुर्भिर्गुणनंकृत्वा पञ्चदशभिराहरण प्रोक्तम् । (बृ० पा० ४६।४७-४८, (काशी-सं०)

**आनयनप्रकारः—**

मेषवृषमिथुनात्मकस्य प्रथमपादस्य तुलावृश्चिकधनुरात्मकस्य द्वितीयस्य विषमसञ्ज्ञा तथा शेषपादद्वयस्य (कर्कसिंहकन्यामकरकुम्भमीनानामिति) समसञ्ज्ञा निगदिता। तत्र विषमे क्रमेण समे व्युत्क्रमेण तत्तद्राशीश्वरान्तं गणनां कृत्वा दशावर्षाणि विजानीयात्। वर्षसङ्ख्या च यदि राशीशो लग्ने तदा द्वादशवर्षाणि द्वितीये चैकं तृतीये द्वयञ्चतुर्थे त्रयमित्यादि बोध्यम्। यथा मेषलग्ने भौमे च कर्कस्थे क्रमेण गणनया वर्षत्रयमागतम्। कर्के च लग्ने चन्द्रे च मेषस्थे व्युत्क्रमेण वर्षत्रयमागतमिति भावः।

विशेषोऽत्र वृश्चिकराशेर्मङ्गलकेतू कुम्भस्य च शनिराहू स्वामिनौ स्तोऽतोऽत्र स्वामिद्वयमेकत्रैव राशौ भवेतान्तर्हि द्वादशवर्षाणि यद्येकः स्वस्थोऽन्यश्चान्यराशिस्थस्तदान्यराशिसङ्ख्यां गृह्णीयात्। यदि द्वावेव विभिन्नराशिस्थौ भवेतान्तर्हि द्वयोर्मध्ये यो बलीयान् तस्य वर्षसङ्ख्यां गृह्णीयात्। बलग्रहणे चात्र ग्रहात् सग्रहो राशिर्बलवान् चरात्स्थिरः स्थिराच्च द्विस्वभावो बलीयानिति। बलसाम्ये यस्याधिकवर्षसंख्या भवेत्तां गृह्णीयात्।

**नवांशस्थिरदशा—**

आनयनप्रकारः। अत्र मुम्बईसंस्करणे सविस्तरमस्या उल्लेखः। तत्र प्रकारद्वयमाह। चरदशा स्थिरदशाक्रमेणेति पूर्वं चरदशानिरूपणम्। यदि चरदशावत् विषमलग्नेषु जन्म स्यात्तदा लग्नादिक्रमारभ्य दशाक्रमः (यदि समलग्नेषु) जन्म तदा व्युत्क्रमेण दशाक्रमः (अर्थान्मेषलग्ने मेषवृषादिक्रमेण कर्कलग्ने च कर्कमिथुनवृषादिक्रमणेत्यर्थः) दशामानेतुं प्रत्येकराशेः ९ वर्षाणि ज्ञेयानि।

**स्थिरदशा—**

अत्र राशीनां चरदशावद्दशाक्रमो नास्ति चरदशायां तु राशीशस्थितिवशाद्विभिन्नानि वर्षाणि भवन्ति। परमत्र तु वर्षाणां निश्चितसङ्ख्यास्ति। अत एवेयं स्थिरदशोच्यते।

**आनयनप्रकारः—**

चरराशीनां ७ स्थिराणां ८ द्विस्वभावानां तु ९ दशावर्षाणां सङ्ख्या निश्चिता।

यत्र ब्रह्मग्रहस्तिष्ठति तद्राशि पुरस्कृत्य विषमे क्रमेण समे व्युत्क्रमेण चरदशावद्दशाक्रमोऽस्तीति भावः। लग्नात् षष्ठेशाष्टमेशद्वादशेशेषु यो बली तथा लग्नसप्तमयोर्मध्ये यो बलवान् राशिस्तद्राशितः पृष्ठे षड्राशिषु यो विषमराशिगो ग्रहो विद्यते स ब्रह्मग्रह इत्युच्यते। (अत्र पृष्ठत्वेन लग्ने बलवति सप्तमाल्लग्नपर्यन्तपृष्ठत्वं सप्तमे बलवति लग्नात्सप्तमान्तं पृष्ठत्वमिति भावः) यदि शनिराहुकेतुषु मध्ये कश्चिद्ब्रह्मग्रहो भवति तर्हि तस्य ब्रह्मत्वं नास्ति। अपि च तस्माद्यः षष्ठेशः स ब्रह्मा भवति। (अत्र रव्यादिष्वपि षष्ठ इत्यपि ज्ञेयम्) यद्यनेका ग्रहा ब्रह्मत्वे प्राप्ता भवेयुस्तदा योऽधिकांशो स ब्रह्मा भवति। अंशेषु चापि साम्ये यस्तेषु बलवान् (नैसर्गिकादिबलयुत इत्यर्थः) स ब्रह्मा भवति।

यदि राहो ब्रह्मत्वं प्राप्तं भवति तर्हि वैपरीत्यमर्थात् यो ग्रहो न्यूनांशो स ब्रह्मा भवति।

आत्मकारकादष्टमेशोऽष्टमस्थो वा ग्रहो ब्रह्मा भवति। विवादे तु सर्वेषु बलवानेव ग्रहो ब्रह्मेति भावः।

## अथ ब्रह्मग्रहाश्रितषष्ठांत्यब्दिकादशा।[1]

अस्या दशाया व्याख्यानमपि मुम्बईसंस्करणे एव दृश्यते। नाम्ना चेयं दशा प्रकटयति यत्प्रत्येकराशेः ६ वर्षदशाक्रम इति। पूर्वोक्तब्रह्मग्रहाश्रितराशितोऽस्या आरम्भो भवति।

### आनयनप्रकारश्चायं—

यद्विषमलग्ने लग्नेशस्य ग्रहस्य पूर्वं ततश्च तद्ग्रहात्षष्ठस्य ग्रहस्य ततश्च तद्ग्रहात्षष्ठस्येति गणना च सूर्यादिग्रहाणां क्रमानुपूर्वकमत्र ग्राह्या। यथा यदि सूर्यश्च लग्नेशस्तर्हि पूर्वं सूर्यस्य ततश्च षष्ठग्रहस्य शुक्रस्य ततश्च शुक्रात्षष्ठस्य चन्द्रस्येति भावः। इयं गणना विषमलग्ने क्रमेण भवति समे लग्ने तु भिन्नप्रकारोऽ

---

1. बृ० पा० (मुम्बई-सं०) पू० भा० ३५।१३२-१४२।

दितः । ते रुद्रशूलराशिं पुरस्कृत्य स्थिरदशावद्दशाक्रमः चरराशिषु ७ स्थिरेषु ८ द्विस्वभावेषु ९ वर्षसङ्ख्या पूर्वोक्ता तथा च विषमे क्रमेण समे व्युत्क्रमेणेति भावः । इयं दशा शूलग्रहमधिकृत्य निरूपिता । अत एवास्या नामापि शूलदशेति- निर्याणविचारे चेयमुपयोगिनी ।

**नक्षत्रदशा—**

नक्षत्रमधिकृत्य या दशा भवति सा नक्षत्रदशा । अपोत्तरी विंशोत्तर्यौरेवा- परं नाम। जैमिनिसूत्रेऽपि[1]

**'सिद्धा उडुदाये ।'**

इति सूत्रे प्रतिपादिता ।

**योगार्द्धदशा—**

इयमपि दशा लग्नसप्तमयोर्मध्ये बलवन्तं राशिमधिकृत्य प्रवृत्ता भवति। चरस्थिरदशा—लब्धानां वर्षाणां योगं कृत्वा तदर्द्धवर्षसङ्ख्या ग्राह्या । अत एवेयं योगार्द्धदशेति । यथा चरदशायां मेषराशौ पञ्चवर्षाणि तथा स्थिरदशायां सप्तयोगे च, द्वादशात्र च षड्वर्षाणि ग्राह्यानीति भावः । जैमिनिसूत्रेऽपि चास्या निर्देशः ।[2]

**दृग्दशा—**

राशीनां दृष्टिप्रकारमनुसृत्येयं दशा प्रवृत्ता ।

लग्नात्पूर्वं नवमराशेस्ततश्च दृष्टिचक्रे सम्मुखराशेः कुत्रचित्क्रमेण कुत्रचिद्- व्युत्क्रमेण, पञ्चमराशेस्ततश्च कुत्रचित्क्रमेण कुत्रचिद्व्युत्क्रमेण । एकादशस्य च सम्मुखराशेः । नन्वत्र प्रश्नश्चायं यन्नवमदशमैकादशेषु प्रथमं सम्मुखराशेः कथं ग्रहणं कृतं कुतो न पञ्चमराशेः ग्रहणमिति । अभिपश्यत्यृक्षाणि पार्श्वभेचेतिप्र- माणात्पञ्चमराशेः प्रथमं ग्रहणाभावः । अत एवेयं त्रिकूटदशा । तेन पूर्वं नवमस्य दशमस्यैकादशस्य दृग्दशा भवति । अतश्चेयं नवमदृग्दशादशमदृग्दशैकादशदृग्दशेति भावः ।

पञ्चमैकादशयोर्विषमे वैपरीत्यं समे तु सामान्यम् । वृषवृश्चिकराशिद्वयस्य विषमे गणनाऽस्ति । अतोऽत्र वैपरीत्यं बोध्यम् । अर्थाद्वृश्चिकयोर्विषमपदस्थत्वा-

---

१. जैमिनिसूत्रम् २।४।१८, चौखम्बा संस्कृत सीरिज, बनारस ।
२. तत्रैव, २।४।१९-२० ।

दुत्क्रमेणैव पञ्चमैकादशौ दृग्योग्यौ भवतः। सिंहकुम्भराशिद्वयस्य तु समपदे ग्रहणाद्यथा सामान्यमत्रापि व्युत्क्रमेणैव पञ्चमैकादशौ दृग्योग्यौ भवतः।

द्विस्वभावराशिषु पञ्चमैकादशयोर्दृग्योग्यत्वं नास्ति।

तत्रायं क्रमः—

लग्नान्नवमदशमैकादशेषु द्विस्वभावराशिषु प्रथमन्तेषामेव ततश्च सप्तमस्य पुनश्च विषमे क्रमेण समे च व्युत्क्रमेण चतुर्थदशमयोर्दृग्दशेति भावः।

दशावर्षसङ्ख्या तु सर्वेषां राशीनां क्रमशो ९ सङ्ख्याकैव। अस्यायं स्पष्टार्थः। यदि लग्नान्नवमराशिश्चरस्तर्हि प्रथमं नवमस्य तस्माच्च पुनरष्टमपञ्चमनवमानां क्रमशो दशा भवति। स्थिरराशिश्चेत्तर्हि प्रथमं नवमस्यैव पुनश्च व्युत्क्रमेण षष्ठस्य पञ्चमस्य नवमस्य च दृग्दशेति भावः। यदि द्विस्वभावराशिश्चेत्तर्हि प्रथमं तस्य द्विस्वभावस्य ततश्च विषमे सति सप्तमस्य क्रमेण च चतुर्थदशमयोः समे राशौ सति सप्तमस्य व्युत्क्रमेण च दशमचतुर्थयोर्दृग्दशेति ज्ञेया।

अयं सर्वो भावोऽत्र मुम्बईसंस्करणे जैमिनीयसूत्रस्याचार्यनीलकण्ठकृतटीकानुसारमुपलभ्यते।[1]

काशीसंस्करणे तु भिन्नमार्गो वर्तते।[2]

तत्राय पाठः। पूर्वं लग्नान्नवमराशेस्ततश्च तद्दृष्टानां राशीनां पुनश्च दशमराशेस्ततश्च तद्दृष्टानां राशीनां पुनश्चैकादश राशेस्ततश्च तद्दृष्टानां राशीनां दृष्टयनुसारमियं दृग्दशा भवति। अत्रापि क्रमत्रयमेव। लग्नान्नवमराशिश्चेत्तर्हि व्युत्क्रमेण स्थिरश्चेत्तर्हि क्रमेण द्विस्वभावे राशौ विषमे सति तु क्रमेण समे सति तु व्युत्क्रमेण।

दृग्दशानिरूपिता। दशावर्षसङ्ख्यापि नैव स्थिरा नवसङ्ख्याका। अपि तु स्थिरदशावच्चरराशीनां ७ स्थिराणां ८ द्विस्वभावानां ९ इति ज्ञेयम्।[3]

---

१. जैमिनिसूत्राणि, खेमराज श्रीकृष्णदास, श्री वेंकटेश्वर स्टीम् प्रेस, मुम्बई, २।४।२१-२३, पृ० ६९।

२. वृ० पा० (काशी-सं०) ४६।१३४-१३६।

३. (अ) काशी-संस्करणे टीकाया 'मातृधर्मयोः सामान्यं प्राचीनवृत्तिरित्यादि सूत्रस्य व्याख्यानमाचार्यनीलकण्ठानुसारं न लिखितमस्ति।
वृ० पा० ४६।४२६, पृ० ३३९ (काशी-सं०)
(ब) मुम्बई संस्करणस्याचार्यनीलकण्ठस्य व्याख्यानं तुल्यम्।

त्रगृहीतः। तत्र व्युत्क्रमेण चरदशावद्वर्षाणि ग्राह्याणि। अथ वा ६ वर्षाण्येव ग्राह्याणि। परञ्च षट्राशिपर्यन्तं नोर्ध्वं केवलं हि सप्ततिवर्षप्रतिपादिकैवेयं दशा।

जैमिनिसूत्रे तु भिन्नः प्रकारः प्रदर्शितः। तत्र षड्वर्षदशा स्थाने चरराशिवद्दशाग्रहणं विहितम्। विषमे क्रमेण समे चोत्क्रमेणेति तु ज्ञेयमेव।[1]

**केन्द्रादिदशा—**

लग्नसप्तमयोर्मध्ये यो बलवान् राशिस्तस्मात्प्रकारत्रयेण दशाक्रमो विद्यते।

*यदि बलवान् राशिश्चरो भवेत्तर्हि तस्मादेव विषमे क्रमेण समे व्युत्क्रमेण* दशारम्भो भवति। यदि स्थिरराशिर्भवेत्तर्हि तस्मात् षष्ठराशितो विषमे क्रमेण समे व्युत्क्रमेण दशाक्रमो भवति।

द्विस्वभावराशिश्चेत्तर्हि प्रकारद्वयम्—

विषमे पूर्वं केन्द्रगतानां राशीनां ततश्च पणफराणामतः परमापोक्लिमराशीनां दशा कथिता। समे तु पूर्वं केन्द्रगतानां राशीनां ततश्चापोक्लिमानामतः परं पणफराणामिति भावः। दशावर्षसङ्ख्या तु प्रत्येकराशे ९ इति ज्ञेया।[2]

**कारकेन्द्रदशा—**

इयमपि केन्द्रादिदशावज्ज्ञेया। अर्थात् विषमराशिस्थे च कारके पूर्वं केन्द्रगतानां राशीनां पुनश्च पणफराणान्ततश्चापोक्लिमानां दशाक्रमो भवति।

कारके च समराशिस्थे सति पूर्वं केन्द्रगतानां पुनश्चापोक्लिमानां ततश्च पणफराणां राशीनामिति भावः। दशावर्षमानञ्च प्रत्येकस्य पूर्वोक्ता ९ सङ्ख्यैव।[3]

---

१. जैमिनिसूत्राणि, गङ्गाविष्णु श्रीकृष्णदास, लक्ष्मी वेंकटेश्वर स्टीम् प्रेस, मुम्बई २।३।२६-२७।

२. जैमिनीयसूत्रेऽयमेव प्रकारः।
(अ) जैमिनिसूत्रम् २।४।७ १०, चौखम्बा संस्कृत सीरिज, बनारस।
(इ) काशी-संस्करणे चरराशिप्रकारेण लिखितम्।
बृ० पा० ४६।१२४ (काशी-सं०)

३. अस्या काशी-संस्करणे नोल्लेखः।
जैमिनिसूत्रे चोल्लेखो दृश्यते, जैमिनिसूत्रम्, २।४।११, चौखम्बा संस्कृत सीरिज, बनारस।

**कारकग्रहदशा—**

इयं दशा कारकग्रहानधिकृत्यवर्त्तते। तत्र कारकसङ्ख्यापि प्रकारद्वयेन निरूपिताऽस्ति । अर्थाद्राहोरपि कारकेषु गणानां कृत्वाष्टकारका। अन्यथा तु सप्तेति ।

**आनयनप्रकारः—**

आत्मामात्यभ्रातृमातृपितृपुत्रस्त्रीकारका ये ग्रहा यस्यां जन्मकुण्डल्यां सन्ति तेषां लग्नाद्यत्र स्थितिर्विद्यते चरराशिवल्लग्नात्तत्कारकपर्यन्तं वर्षाण्यूह्यानि। पूर्वमात्मकारकस्यानन्तरममात्यकारकस्येत्यादि ज्ञेयम्। विषमसमयोर्मध्ये क्रमेणव्युत्क्रमेण च गणना तु पूर्ववदेव बोध्या।

**मण्डूकदशा—**

केन्द्रादिक्रमेण मण्डूकवदुत्प्लुत्य पतनान्मण्डूकनाम्नेयं दशा प्रोक्ता।

**आनयनप्रकारः—**

स्थिरदशायां चरराशीनां सप्त, स्थिराणामष्ट, द्विस्वभावानाञ्च नववर्षसङ्ख्या, निगदिता। अत्र लग्नसप्तमयोर्मध्ये यो राशिर्बलवान् तमारभ्य दशाक्रमः। परमत्र मण्डूकरीत्यात्। त्रिकोणक्रमोऽत्र ग्राह्यः। यदि मेषलग्नं भवेत्तर्हि मेषसिंहधनुर्वृषकन्यामकरमिथुनतुलाकुम्भकर्कवृश्चिकमीना इति। एवं वृषलग्नं स्यात्तर्हि वृषकन्यामकरमिथुनादिक्रमेण ज्ञेयम्। स्त्रियो जन्मकाले तु केवलं सप्तमस्थानादेव दशाक्रमः कार्योसंस्करणे तु विभिन्नः प्रकारः। तत्र लग्नसप्तमयोर्मध्ये बलवन्तं राशिमधिकृत्य राशिस्वरूपेण दशाक्रमः। अर्थाद्यदि बलवान् राशिश्चरास्यस्तर्हि पूर्वं केवलं चराः पुनश्च स्थिरास्ततो द्विस्वभावाः। मेषकर्कतुलामकरास्ततोवृषसिंहवृश्चिककुम्भास्ततो मिथुनकन्याधनुर्मीना इति भावः। अयमेव प्रकारो जैमिनीये सूत्रेऽपि।[1]

**शूलदशा—**

द्वितीयाष्टमभावयोर्मध्ये यो बलवान् राशिः स रुद्रशूल सञ्ज्ञक इति निग-

---

१. (अ) वृ० पा० (मुम्बई-सं०) पू० भा० ३५।२१९-२२६।
   (इ) वृ० पा० (काशी-सं०) ४६।१२८, १२६।
   (उ) जैमिनीसूत्रम् चौखम्बा संस्कृत सीरिज, बनारस, २।४।१५।

**त्रिकोणदशा—**

त्रिकोणे यो वलवान् राशिस्तं पुरस्कृत्य चरदशावच्च वर्षक्रममानीय विषमराशौ क्रमेण समराशौ च व्युत्क्रमेण दशाक्रमो वोध्या।

प्रयोजनम्—

अत्र द्वारवाह्याभ्यां फलविचारं कुर्यात् । वर्तमानदशाराशेर्नाम द्वारं तथा प्रथमदशाप्रदराशितो द्वाराशिपर्यन्तं यावती वर्षसङ्ख्या भवति सा वाह्यशब्देनोच्यते । तथा सप्तमतृतीयप्रथमनवमराशिभ्यः स्त्रीमातृशरीरपितृणाञ्चापि विचारो विधेयः । अर्थात्पत्नीकारकाद्ग्रहात्सप्तमे पत्नीविचारः । मातृकारकात्तृतीये भ्रातृविचारः । आत्मकारकात्प्रथमे शरीरविचारः । पितृकारकान्नवमे पितृविचारः ।[1]

**नक्षत्रराशिदशा—**

जन्म नक्षत्रस्य सर्वभोगघटिका (सर्वर्क्षस्येति) द्वादशभिर्विभजेत् लब्धसङ्ख्यया जन्मलग्नादारभ्य राशिं पुरस्कृत्य दशाक्रमं विजानीयात् । वर्षसङ्ख्या च प्रत्येक राशेः ६ इति निश्चिता यथा जन्मलग्नं मिथुनं नक्षत्रञ्चोत्तराफाल्गुनी सर्वर्क्षभोगपष्टि घटिकाः, गत नक्षत्रघटिका चतुर्दशेति मिथुनात्तृतीयं सिंहराशिपूर्वकं द्वादशराशीनां दशेति भावः ।[2]

**तारादशा—**

जन्मसम्पद्विपत्क्षेमप्रत्यरिसाधकवाधकयमैत्रानामानि च क्रमात्सूर्यचन्द्रभौमराहुगुरुशनिबुधकेतुशुक्राणामिति । ग्रहेषु यः केन्द्रस्थो ग्रहस्तस्य पूर्वदशाक्रमः । केन्द्रगेषु वहुषु ग्रहेषु यो वलवत्तमस्तस्यादिमा दशेति वोधव्यम् । दशावर्षसङ्ख्याऽपि विंशोत्तरीवत्कथिता । अस्य भुक्तयोग्यानयप्रकारोऽपि विंशोत्तरीवदेव ।

---

१. (अ) जैमिनीसूत्रेऽप्ययमेव प्रकारः 'जैमिनिसूत्रम्' २।४।२४-२६, चौखम्बा संस्कृत सीरिज, बनारस ।
(इ) काशी-संस्करणे फलविचारस्य नोल्लेखः ।

२. जैमिनीसूत्रेऽप्ययमेव प्रकारः ।
जैमिनिसूत्रम् २।४।२७, चौखम्बा संस्कृत सीरिज, बनारस ।

केवलं ग्रहाणां तारानामकरणकारणेन चास्या दशाया अपि तारा नामेति भावः ।

### वर्णददशा—

जन्मलग्नहोरालग्नयोर्मध्ये यो राशिर्बलवान् तस्माद्वर्णददशाप्रवृत्तिर्भवति । (पूर्वंवर्णदराशेर्विचारः) होरालग्नजन्मलग्नयोर्द्वयोर्विषमराशिसञ्ज्ञके समराशिसञ्ज्ञके वा द्वयोर्योगः कार्यः । युक्तं यो राशिः स वर्णदराशिरिति । द्वयोर्विभिन्नत्वेऽर्थादेको विषमोऽन्यः सम इत्थं भूते सति द्वयोर्विशोधनं कार्यम् । शेषराशिर्वर्णद इति । यदि वर्णदराशिविषमसञ्ज्ञकः स्यात्तर्हि मेषराशित आरभ्य क्रमेण चरदशावद्वर्षसङ्ख्यया दशाक्रमो ज्ञातव्यः । वर्णदराशिः समः स्यात्तर्हि मीनराशितो व्युत्क्रमेण चरदशावद्वर्षसङ्ख्यया दशाक्रम इति भावः ।[1]

### पञ्चस्वरदशा—

पञ्चस्वरदशाया अपि होराशास्त्रे महान् महिमा वर्तते । यतो हि राशीनामभिरचना सप्तविंशतिनक्षत्रमण्डलमधिकृत्य वर्तते । नक्षत्राणाञ्च पादाः स्वरवर्णोपरि विद्यन्ते । अतः कस्यचित्पुरुषस्य नामाक्षरानुसारमेव नक्षत्रराशिज्ञानं भवति । तेनैव शुभाशुभफलज्ञानं भवति । अत्रापि तन्नामाक्षरानुसारमेव पञ्चस्वरोपरि दशाक्रमो विद्यते ।

### आनयनप्रकारः—

पूर्वं पञ्चस्वरान् (अ इ उ ए ओ) क्रमशो लिखेत्ततश्चाध एषां ङ्, ञ् णेति-वर्णत्रयं विहाय क्रमशः शेषान्वर्णान् लिखेत् । अकारस्य नीचैः—क छ उधभवाः । इकारस्याधः ख ज ट न म शा इति । उकारस्य नीचैर्ग झ त प य षा इति । एकारस्याधः घ ट थ फ र साः । ओकारस्य नीचैः च ठ द बला इति भावः । एतन्नियमानुसारं यत्र नाम स्वरः स्यात्तत्तश्च दशाक्रमो भवति प्रत्येकस्वरस्य च द्वादश वर्षाणि सन्ति पूर्णयोगश्च षष्ठिरिति । ङ्, ञ्, ण् वर्णत्रयोपरि कस्यचिन्नाम न

१. (अ) काशी-संस्करणे नोल्लेखः ।
(इ) जैमिनीसूत्रेऽप्ययमेव प्रकारः, जैमिनिसूत्रम् १।१।३३, चौखम्बा संस्कृत सीरिज, बनारस ।

भवति। अतस्तेषामत्र न गणनाकृता। यदि नामस्यात्तर्हि ङ ञ् णा एषां स्थाने ग ज ड एतद्वर्णानुसारं—दशाक्रमो बोध्यः।

वृश्चिकर्कसिंहमेषा अ-स्वरे, कर्कमिथुनकन्या इ-स्वरे, धनुर्मीनौ उ-स्वरे, तुला-वृषौ ए-स्वरे, मकरकुम्भौ ओ-स्वरे क्रमशो राशीनां सन्निवेशो बोध्याः।

## योगिनीदशा—

अष्टग्रहाश्रिताष्टनामधेयेयं दशा। तथा हि मङ्गलापिङ्गलाधान्याभ्रामरी-भद्रिकोल्कासिद्धासङ्कटेति। चन्द्रसूर्यगुरुमङ्गलबुधशनिशुक्रराहवश्चैतेऽष्टग्रहाःस्वा-मिनश्चासां क्रमादिति।

## आनयनप्रकारः—

जन्मनक्षत्रसङ्ख्या त्रिभिर्युता कृत्वाष्टभिर्हरेत्। शेषसङ्ख्यया दशाक्रमोऽस्ति यदि शेषं शून्यं स्यात्तर्हि सङ्कटानाम्नी दशा बोध्या। भुक्तभोग्यप्रकारश्च विंशोत्तरीवदेव निगदितः। इयमपि नक्षत्रदशा ज्ञेया।

## अथ पिण्डादिदशाचतुष्टयम्—

पिण्डायुदशा, अंशायुदशा, निसर्गायुदशा अष्टकवर्गायुदशा चेति दशा चतुष्टयं निरूप्यते। आसु दशासु यस्य ग्रहस्यायुर्वर्षाणि गणितेन भवन्ति तानि वर्षाण्येव दशाक्रमे बोध्यानि।

एतच्चतुष्टयस्य विशेषानयप्रकारश्चायुर्दाये एव प्रदर्शितः। तत्रैवैतत्सर्व-मूह्यम्।[1]

## सन्ध्यादशा—

परमायुर्दाययस्य विंशोत्तरशतस्य दशामधिकृत्य लग्नेशादारभ्य क्रमशः शेष नवग्रहाणां दशा ज्ञेया।[2]

---

१. अत्र काशी-संस्करणे विशेषः।
पूर्वं लग्नसूर्यचन्द्रेषु यो बलवत्तमस्तस्य ततश्च केन्द्रगानां, पणफरगानामापोक्लिम-गानाञ्च दशाक्रमो ज्ञेयः।—बृ० पा० ४६।१५०-१५१ (काशी-सं०)

२. अत्र मुम्बई-संस्करणे विंशोतरस्य दशांशाः १२ वर्षाणि लिखितानि तदशुद्धम्। काशी-संस्करणे दशांशः १२ वर्षाणि लिखितानि तच्छुद्धम्।

**पाचकदशा—**

सन्ध्यादशामानं (विंशोत्तरशतस्य द्वादशांशा १० वर्षसङ्ख्येति) १० वर्षाणि षड्भिर्गुणीकृत्यैकत्रिंशत्सङ्ख्यया विभज्य वर्षादिकलब्धिर्भवति । इयं लब्धि लग्नराशिं पुरस्कृत्य प्रथमं लिखेत् । अस्या लब्धेरर्द्धं द्वितीयतृतीयचतुर्थस्थानेषु स्थापयेत् । पुनश्च लब्धेस्तृतीयांशं शेषेष्वष्टस्थानेषु लिखेत् । इयं नाम पाचकदशोच्यते ।

## (ऋ) कालचक्रदशावर्णनम्[1]

अस्या दशाया अपि महान् महिमा प्रकटीकृत आचार्येण । विंशोत्तरीदशोत्तरमस्या एव महत्त्वपूर्णं स्थानमस्मिन् होराशास्त्रीये ग्रन्थे । मनुष्याणां शुभाशुभज्ञानाय सारभूतमस्या दशायास्तत्त्वम् । अयञ्च सुगमो मार्ग इति । अनया भूतं भव्यञ्च भावि, तत्सर्वं ज्ञातुं शक्यते इत्याचार्यस्याभिप्रायः ।

**आनयनप्रकारः—**

अत्र द्वादशारं चक्रं लेख्य तच्च तिर्यगूर्ध्वसमानकं स्यात्तत्र द्वादशगृहाःस्युः सव्यापसव्यज्ञानाय । तत्रोपचक्रद्वयं लेख्यम् । चक्रयोर्मध्ये निम्नाङ्कितरीत्याऽश्विन्यादीनां नक्षत्राणां न्यासं कुर्यात् । इदमेव द्वादशराश्यात्मकं चक्रं कालचक्रदशाप्रबोधकम् । अश्विनीभरणीकृत्तिकेति नक्षत्रत्रयं सव्यचक्रे रोहिणीमृगशिरार्द्राश्रयमपसव्ये । इत्यञ्चाग्रेऽपि । येनाश्विनी कृत्तिकापुनर्वसुपुष्याश्लेषाहस्तचित्रास्वातिमूलपूर्वाषाढोत्तरापूर्वाभाद्रपदरेवतीत्यादीनि पञ्चदशनक्षत्राणि सव्ये तथा च रोहिणीमृगशिरार्द्रामघापूर्वाफाल्गुन्योत्तराफाल्गुनीविशाखानुराधाज्येष्ठाश्रवणधनिष्ठाशतभिषेत्यादीनि द्वादशनक्षत्राण्यपसव्ये ।

पुनश्च देहजीवांशादिकज्ञानमप्यधोलिखितप्रकारेण विजानीयात् ।

अश्विनीनक्षत्रस्य प्रथमचरणे मेषो नाम देहो धनुर्नाम जीवस्तथा मेषवृषमिथुनकर्कसिंहकन्यातुलावृश्चिकधनुरिति राशयस्तत्त्वेषां स्वामिनश्च क्रमेण दशाधीशा इति ।

---

१. वृ० पा० (मुम्बई-सं०) पू० भा० ४६ अध्यायः सकलः ।

भुक्तं भवति । तच्च दशावर्षमानात् न्यूनीकुर्याच्छेषं वर्षादिकं भोग्यं भवति । तद्राशिपुरःसरमेव दशाक्रम इति भावः । प्रत्येकचरणे नवराशय उक्ता अतोऽत्र विंशोत्तरीवन्नवराशीनां तद्राशिपतिदशामानवर्षसङ्ख्यानुसारं दशाक्रमं विलिखेदिति भावः ।

## (लृ) दशावाहनविचारः[1]

### अत्र दिनदशाज्ञानार्थं दशावाहननिरूपणमाह—

यस्मिन् दिने दशाप्रवेशः स्यादथ वा विशेषदिनस्य शुभाशुभज्ञानायावश्यकता भवेत्तदा जन्मनक्षत्रादारभ्य तद्दिननक्षत्रान्तं सङ्ख्याङ्गणयेत् । लब्धाङ्कसङ्ख्यां नवभिर्हरेत् । शेष सङ्ख्यानुसारं दशावाहनं विजानीयात् । तेषां क्रमशो निम्नाङ्कितानि नव नामानि तानि च शेषसङ्ख्याक्रमेण बोध्यानि ।

### वाहननामानि—

(१) गर्दभः । (२) घोटकः । (३) हस्ती । (४) महिषः । (५) जम्बूकः । (६) सिंहः । (७) काकः । (८) हंसः । (९) मयूरः ।

### ऐतेषांफलमाह—

नामानुरूपमेवैषां फलमपि । तथापि विश्लेषेण फलं व्यातनोति ।

दशाप्रवेशकाले गर्दभवाहनोपलब्धौ मनुष्यो लज्जाधनधान्यवस्त्रादिरहितो जडश्च भवति । घोटकवाहनोपलब्धौ चपलो बहुभक्षकः प्रकटवुद्धिः सघोषचमूपतिः दृढतनुर्बहुकार्यकरश्च भवति । हस्ती वाहनोपलब्धौ नानाकार्यरतो मूर्खः शुभगतिकः सेनापतिः सर्वसौख्यकरः, सुभूषणधरश्चञ्चलो नानाकलाकौशलरतश्च मानवः कथितः महिषवाहनोपलब्धौ वलबुद्धिहीनोऽग्निभयातुरो वलवान् प्रोक्तो नरः । जम्बूकवाहनोपलब्धौ व्याधिदुःखपीडितः कृशः धनधान्यहीनः शत्रुजनक्षुभितश्च भवति ।

सिंहवाहने वलिष्ठः शत्रुनाशकरः प्रोक्तः । काकवाहने चञ्चलो मलिनः

---

१. बृ० पा० ५१।१-१३ )मुम्बई-सं०)

कुवेषी नीचजनवन्दितः कुचेष्टः, स्त्रीद्वेषी, नृपशत्रुभययुतः ज्ञेयः। हंसवाहने-सुखैश्वर्यक्रीडायुतो बुद्धिमान् भवति। मयूरवाहने, धीरो मधुरवाक्यो बहुसुखैश्वर्यक्रीडायुतश्च भवति।

## (ग) दशाफलनिरूपणम्—

### (अ) दशाफलकथनप्रकारः—

### विंशोत्तरी दशाफलकथने बलाबलविचारः—

नक्षत्रदशेयं कथ्यते। नक्षत्रानुसारं ग्रहज्ञानं भवति। ततश्च ग्रहदशा भवति। ग्रहाणां बलाबलमवलोक्य चास्य फलं कथयितुं शक्यते। जन्मकुण्डल्यां ये राजयोगादय उक्ता सन्ति तेषां फलं कदा भवतीति प्रश्ने दशाया आविष्कार समजनीति प्रतीयते। अनेनेत्थं कथ्यते यद्यश्च ग्रहोऽत्र यस्य योगस्य राजयोगस्य दरिद्रयोगस्य नेत्रान्धादिविविधयोगानाञ्च वा कारकस्तस्य दशायां तत्फलं भवतीति ज्ञेयम्।

तस्य योगस्य फलस्यापि बलाबलं विविधप्रकारेणात्र निरूपितम्। फलविज्ञाने तस्य बलाबलस्य ज्ञानं सुतरामावश्यकम्। तद्बलाबलानुसारि च शुभाशुभफलं भवति।

तस्य बलाबलस्यातिसूक्ष्मत्वं विस्तृतञ्च दृश्यते—

पूर्वं ग्रहाणां बलाबलविचारश्चात्र विधीयते।

(१) ग्रहाणां होराद्रेष्काणादिसप्तवर्गज दशवर्गजं षोडशवर्गजं बल कथितम्[1]।
इदं बल वर्गजं बल भवति।

(२) केन्द्राधिपतयः शुभाशुभफलहीना अशुभाश्चाशुभफलहीना भवन्ति त्रिकोणपाश्च सदा शुभा इत्यादिकं भावबलं कथ्यते।

द्वितीयसप्तमभावौ मारकौ। नवमदशमौ धर्मकर्मसूचकौ। नवमपञ्चमौ विशेषधनप्रदौ इति सर्वं भावानुसारं विचार्यं भवतीति प्रकारान्तेणापि भावबलमुपलभ्यते।

---

१. बृ० पा० (मुम्बई-सं०) पू० भा० ३६ अध्यायादारभ्य ५० अध्यायान्तं द्रष्टव्यम्।

अश्विनीद्वितीयचरणे मकराख्यो देहो मिथुनसञ्ज्ञको जीवो मकरकुम्भमीनवृश्चिकतुलाकन्याकर्कसिंहमिथुनका इति राशयस्तथैषां स्वामिन एवं दशाधीशा इति।

अश्विनीतृतीयचरणे वृषा नाम देहो मिथुनं नाम जीवो वृषमेषमीनकुम्भमकरधनुर्मेषवृषमिथुनकाश्च राशयस्तेषां पतय एव दशाधीशाः।

अश्विनीचतुर्थचरणे कर्को नाम देहो मीनाख्यो जीवः कर्कसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनाख्या राशयस्तथैषामेवाधिपा दशाधीशा इति।

अयं प्रकार अश्विनीपुनर्वसुहस्तमूलकृत्तिकाश्लेषास्वात्युत्तराषाढारेवतीनामकेषु दश नक्षत्रेषु समो ज्ञेयः।

निम्नोक्तप्रकारश्च भरणीपुष्यचित्रापूर्वाषाढोत्तराभाद्रपदनामकेषु पञ्च नक्षत्रेषु बोध्यम्।

प्रथमचरणे चैषां वृश्चिको देहो मीनाख्यो जीवस्तथा वृश्चिकतुलाकन्याकर्कसिंहमिथुनवृषमेषमीनसञ्ज्ञका राशय एषाञ्चैवाधिपा दशाधीशा इति।

द्वितीयचरणे च कुम्भाख्यो देहः कन्यासञ्ज्ञको जीवः कुम्भमकरधनुर्मेषवृषमिथुनकर्कसिंहकन्याख्या राशय एषामधिपा एव दशाया अपि स्वामिन इति।

तृतीयचरणे तुला देहो कन्याजीवस्तुलावृश्चिकधनुर्मकरकुम्भमीनवृश्चिकतुलाकन्याख्या राशय एषां स्वामिन एव दशाया अपि स्वामिन इति।

चतुर्थचरणे कर्काख्या देहो धनुर्नाम जीवः कर्कसिंहमिथुनवृषमेषमीनकुम्भमकरधनुराख्या राशय एषामधिपा एव दशाधिपा इति।

एतत्सर्वं सव्यचक्रस्येति भावः।

अत्रापि भागद्वयम्।

यथा रोहिणीमघाविशाखाश्रवणाख्येषु नक्षत्रचतुष्टयेषु निम्नप्रकारेण देहजीवादिकं बोध्यम्।

प्रथमचरणे कर्को देहो धनुर्जीवो धनुर्मकरकुम्भमीनमेषवृषसिंहकर्काख्या राशय एषामधिपा एव दशास्वामिन इति।

द्वितीयचरणे तुला देहः कन्या जीवः कन्यातुलावृश्चिकमीनकुम्भमकरधनुवृश्चिकतुला सञ्ज्ञका राशय एषामेवाधिपा दशाधिपा इति।

तृतीयचरणे कुम्भोनाम देहः कन्याख्यो जीवः कन्यासिंहकर्कमिथुनवृषमेष धनुर्मकरकुम्भाख्या राशय एषां स्वामिन एव दशास्वामिन इति।

चतुर्थचरणे वृश्चिको देहो मीनाख्यो जीवो मीनमेषवृषमिथुनसिंहकर्ककन्या-तुलावृश्चिकसञ्ज्ञका राशय एषां स्वामिन एव दशाधीशा इति।

एवमेव निम्नाङ्कितप्रकारेण मृगशिरार्द्रापूर्वाफाल्गुन्योत्तराफाल्गुन्यनुराधा ज्येष्ठाधनिष्ठाशतभिषाख्येषु नक्षत्राष्टकेषु बोध्यम्।

प्रथमचरणे कर्को देहो मीनसञ्ज्ञको जीवः मीनकुम्भमकरधनुर्वृश्चिकतुला-कन्यासिंहकर्कान्ता राशय तेषामधीशा एव दशाधीशा इति।

द्वितीयचरणे वृषो देहो मिथुनाख्यो जीवः मिथुनवृषमेषधनुर्मकरकुम्भमीन मेषवृषाश्च राशयस्तेषां पतय एव दशापतय इति।

तृतीयचरणे मकराख्यो देहो मिथुनाख्यो जीवः मिथुनसिंहकर्ककन्यातुला-वृश्चिकमीनकुम्भमकरा राशय एषामधिपा एव दशाधिपा इति।

चतुर्थचरणे च मेषो देहो धनुराख्यो जीवो धनुर्वृश्चिकतुलाकन्यासिंहकर्क-मिथुनवृषमेषाश्च राशय एषामधिपा एव दशाधीशा इति।

क्रमशश्च मेषादीनां द्वादशराशीनां ७,१६,६,२१,५,६,१६,७,१०,४,४,१० वर्षाणि दशाया बोध्यानि। एवमेषां राशीशानां राशिवदेव सूर्यादिग्रहाणां बोध्यम्। यथा मेषस्य भौमस्य मेषेशस्यापि ७ इति भावः।

विशेषोऽत्रायं ज्ञेयः यन्नक्षत्रस्य चरणे यो नवांशानुसारं यो राशिर्लभ्यते तस्मा-न्नवराशिपर्यन्तं जन्मकाले प्रश्नकाले वा मनुष्यस्य परमायुर्ज्ञेयम्।

प्रसङ्गतोऽत्र नक्षत्रनवांशानयप्रकारोऽपि प्रोक्तः। गतनक्षत्रसङ्ख्यां त्रिभिर्हत्वा शेषसङ्ख्याञ्चतुर्भिर्गुणीकृत्य वर्तमाननक्षत्रचरणसङ्ख्यां युञ्जीत। तत्सङ्ख्या-नुसारमेव मेषादिराशिभ्यः क्रमशो नवांशराशिर्विज्ञेयः।

राशीनां पूर्णायुर्मानमपि निम्नप्रकारेण ज्ञेयम्।

मेषसिंहधनुषां शतमिति। कर्कवृश्चिकमीनानां षडशीतिरिति। मिथुनतुला कुम्भानां त्र्यशीतिरिति। वृषकन्यामकराणां पञ्चाशीतिरिति।

यस्मिन्नक्षत्रचरणे मानवस्य जन्म स्यात्तस्य चरणस्य गतघटीपलानि दशावर्षसङ्ख्यया गुणीकुर्यात् ततश्च पञ्चदशसङ्ख्यया हरेत्तल्लब्धिर्वर्षादिकं

लग्नेशः शुभोऽष्टमेशो नित्यमशुभ इत्यादिकं भावेशबलं भवति। तथा च लग्नेशोऽष्टमस्थः स्यादथ वा नवमस्थः स्यादिति भावेशानां भावस्थितिवशात्फले वैशिष्ट्यमतश्चेदं भावभावेशबलमपि कथितुं शक्यते।

षोडशवर्गेषु स्वोच्चमित्रादिस्थानसङ्ख्यावशाच्च पारिजातसिंहासनादि-सञ्ज्ञावशादपि वर्गजं फलं भवति।

ग्रहाणामष्टकबलमपि प्रोक्तमस्ति—

स्वोच्चमूलत्रिकोणातिमित्रमित्रादिकग्रहयोगवशात्प्राप्तं शुभं नीचातिशत्रवा-दिकग्रहयोगाप्तमशुभञ्चापि ग्रहजं बलं भवति।

ग्रहाणां बालयुवावृद्धाद्यवस्थादीप्ताद्यवस्था जाग्रदाद्यवस्थापूर्णादिविविधा-वस्थानुसारमपि ग्रहबलं ज्ञेयम्।

आरोहणावरोहणादिकमपि ग्रहबलम्।

ग्रहाणां भावस्फुटसन्धियोगस्थितिवशादपि बलं ज्ञेयम्।

दृग्बलकालबलादिकषड्बलस्य रश्मिबलस्या चाप्यत्र विचारो विधातव्यः।

अब्दचर्यामासचर्यादिनचर्यानुसारमपि बलज्ञानमावश्यकम्।

धूमाद्यप्रकाशकपापशुभमित्रादिराह्वादिग्रहाणां योगायोगेनापि प्राप्तं शुभा-शुभं बलं ग्राह्यम्।

राशीनामपि दृष्टिवशाद्ग्रहाणां शुभाशुभबलं भवति।

ग्रहाणां स्थानकरणादिकबलविचारोऽपि दृश्यते।

ग्रहाणां कारकपाचकवेधकादिसञ्ज्ञयापि बलं भवति।

सत्यत्रेताद्वापरकलियुगानां भेदेनापि बलाबलज्ञानमत्र ग्राह्यम्।

अन्यदपि यद्बलाबलयंत्र शास्त्रे प्रोक्तं तत्सर्वं विचार्यैव दशाफलकथनं महर्षिपराशरेणात्र निर्देशो विहितः।

तथा हि चास्मिन् ग्रन्थे।

द्रव्यकर्मगुणा यस्य स्वभावा कथिताःपुरा।
ते सर्वे स्वदशाकाले योज्या भावदृगादिषु॥

भावदृष्टिबलेष्टानि फलानि कथितानि च।
भावाध्यायोक्तरव्यादिफलान्यत्रैव योजयेत् ॥[1]

अनेनेदमपि सिध्यति यत्पूर्वं ग्रहाणां द्वादशभावानुसारं भावेशानुसारञ्च पृथक् पृथक् फलं निरूपितं तस्यापि पाककालस्तस्य तस्यग्रहदशायामेव भवतीति निश्चितम्।

अत्र च व्यङ्कटेशोऽपि–

यद्यद्व्रव्यङ्कथितमृषिभिर्यस्य यस्य ग्रहस्य।
कर्माजीवोऽपि तनुभृतां यश्च यश्चोदितोऽत्र ॥
यद्भावोत्थं यदपि ग्रहजं योगजं दृष्टिजञ्च।
तत्तसर्वं ग्रहबलवशाद्योजनीयं दशायाम् ॥[2]

जातकपारिजातकारोऽपि—

करोति यद्भावगतः स्वपाके तद्भावजन्यं त्वशुभं शुभं वा।[3]

दशायाफलं कदा भवतीति प्रश्नेऽत्रोत्तरमाह।

ग्रहो यदि प्रथमद्रेष्काणस्थस्तदा दशारम्भकाले एव फलं करोति।

द्वितीयद्रेस्काणस्थः स्यात्तदा दशामध्यकाले फलप्रद इति।

तृतीयद्रेष्काणगतश्चेत्तदा दशाया अन्ते फलकारकः प्रोक्त इति।

वक्रगतियुक्तो ग्रहश्चेत्तदा पूर्वोक्तं फलं वैपरीत्ये ज्ञेयमर्थाद्यदि वक्री ग्रहस्तृतीये द्रेष्काणगस्तदा तस्य फलं दशारम्भे भवति द्वितीये द्रेष्काणे दशाया मध्ये प्रथमे च दशान्तकाले इति ज्ञेयम्।[4]

अपि च—

शीर्षोदयराशिस्थो ग्रहो दशारम्भे पृष्ठोदयस्थो दशान्ते चोभयोदयराशिगश्च मध्ये फलप्रदः।[5]

---

१. बृ० पा०। (मुम्बई-सं०) उ० भा० १५।९९, १००।
२. महादेव श्रीनिवासः, दशाफलदर्पणम्, पृ० १, श्री भुवनेश्वरी प्रेस, रतलाम।
३. कपिलेश्वर शास्त्री, जातकपारिजातः १८।१७, चौखम्बा संस्कृत सीरिज, बनारस।
४, बृ० पा० (मुम्बई-सं०) पू० भा० ३५।३१०, ३११।
५. बृ० पा० (काशी-सं०) ५०।८८।

द्वादशभावानामधिपतित्वेन पृथक्-पृथक् ग्रहाणां दशायां शुभाशुभमाह—

तथा हि। लग्नेशस्य दशा बलकारिका। द्वितीयेशस्य मृत्युकरी कष्टकरी वा। तृतीयेशस्यापि दशा पापफलप्रदा। चतुर्थेशस्य गृहनिर्माणकरी। पञ्चमेशस्य विद्यासुखप्रदा। षष्ठेशस्य रोगकरी। सप्तमेशस्य शोकप्रदा। अष्टमेशस्य मृत्युकरी। नवमेशस्य सत्कर्मकरी। दशमेशस्य नृपाश्रयप्रदा। एकादशेशस्य लाभप्रदा। द्वादशेशस्य दशायां रोगो द्रव्यनाशो बहुकष्टञ्च भवति।

दशाफलेऽन्यद्वैशिष्ट्यमाह—

स्वगृहस्थ उच्चत्रिकोणशुभादिवर्गगतो बलयुतो भावेशो ग्रहः पूर्णफलं शुभं करोति।

शत्रुनीचस्थानगो निर्बलश्च ग्रहोऽशुभं फलं करोति।

पञ्चमेशस्य नवमेशस्य च दशातीव शुभदा।

नवमेशयुतस्य दशमेशस्य दशा राज्यपुत्रप्रदा।

पञ्चमेशयुक्तस्य नवमेशयुतस्य वा दशाऽपि शुभदा।

दशमेशयुतस्य चतुर्थेशस्यापि दशा सुखप्रदा।

पञ्चमेशयुतस्य दशमेशस्य दशा राज्यसुखधनप्रदा। दशमेशयुतस्य पञ्चमेशस्यापि दशा शुभा।

पञ्चमेशयुतस्य दशमेशस्यापि शुभदेति ज्ञेयम्।

चतुर्थेशयुतस्य नवमेशस्य दशाऽपि शुभा।

पञ्मस्थस्य दशमेशस्य दशा शुभा।

षष्ठसप्तमयोरेकोऽधिपतिः सन् दशमस्थः दशमेशेन युतः वा स्यात्तदापि तस्य ग्रहस्य दशा शुभा। षष्ठाष्टमद्वादशाधीशा यदि पञ्चमेशयुताभवेयुस्तदा तेषामपि दशा शुभा। चतुर्थेशो दशमस्थश्चेदथ वा दशमेशश्चतुर्थस्थः स्यात्तदा तयोरपि दशा शुभा।

पञ्चमेशदशमेशचतुर्थेशनवमेशा यद्येकत्र युता यत्र कुत्रापि स्युरथवैतैर्युता वाऽन्ये ग्रहा स्युस्तदेषां दशा राज्यप्रदा।

चतुर्थस्थस्य पञ्चमेशस्य दशमेशस्य वा।

ताभ्यां युक्तस्य युक्तानां दृष्टानां वा ग्रहाणां दशा राज्यप्रदा।

दशमस्थस्य पञ्चमेशस्य दशा सम्पत्करी। दशमस्थस्य नवमेशस्य दशा राज्यप्रदा।

यस्मिन् भावे शुभस्वामिसम्बन्धयुत उच्चस्थो ग्रहः स्यात्तस्य दशायामत्यैश्वर्यं भवति।

यद्द्वादशो ग्रहः स्वराशिस्थो धनराशिस्थो वा भवतिस्वभावं द्वितीयभावञ्च पश्यति तस्यापि दशायां धनलाभो जायते।

यस्माद्ग्रहाद्द्वादशस्थो ग्रहः स्यात्तस्य दशायां धनक्षयो भवति।

यस्माच्च त्रिकोणस्थाः पापग्रहाः स्युस्तस्य दशायामात्मनाशः, पुत्रहानिः, पितुः पीडा, मनस्तापश्च भवति।

यस्मात्त्रिकोणगाः षष्ठाष्टमेशौ सूर्यचन्द्रशनयश्च भवेयुस्तस्य दशायामपि पुत्रपीडा, धनहानिश्च भवति।[1]

यस्मात्त्रिकोणगो राहुः केतुर्वा स्यात्तस्य च दशायां विदेशभ्रमणं क्लेशो, भयञ्च भवति।

यस्माच्च षष्ठाष्टमयोः स्थानयोर्नीचाः क्रूरा वा ग्रहाः स्युस्तस्य दशायां शत्रुरोगनृपाणां भयं प्रोक्तम्।

यस्माच्चतुर्थस्थः क्रूरः स्यात्तस्य दशा भूगृहक्षेत्रनाशप्रदा। भौमश्चेत्तदा गृहदाहः पशुहानिश्च भवति।

यदि शनिश्च स्यात्तदा हृदयशूलम्। सूर्यश्चेत्तदा राजप्रकोपः।

राहुः स्यात्तदा सर्वस्वहरणं विषचौरादिजं भयञ्च।

यस्माच्च दशमस्थः राहुः स्यात्तस्य दशा पुण्यतीर्थाटनप्रदा।

यस्माद्दशमैकादशनवमस्थाः शुभग्रहा स्युस्तस्य दशायां विद्याधनधर्मसत्कर्मख्यातिपौरुषसिद्ध्यादीनां वस्तूनां लाभो भवति।

यस्माच्च पञ्चमसप्तमषष्ठगाः स्वोच्चशुभग्रहा भवेयुस्तस्य दशा पुत्रदारादिसम्प्राप्तिकरा नृपपूजाप्रदा च।

---

१. काशी-संस्करणे पञ्चस्थाने भौमस्योल्लेखः :
बृ० पा० ५०।५६ (काशी-सं०)

यस्मिन् भावे पञ्चमैकादशदशमचतुर्थनवमलग्नपतयः स्थिताः स्युस्तस्य दशा तत्तद्योगानुसारं तत्तद्भाववृद्धिकरीति ज्ञेया।

अत्र गुरुः शुक्रः शुभभावेशो वा स्थितः स्यात्तस्यापि दशा शुभैश्वर्यकल्याणकरा देवब्राह्मणभक्तिप्रदा च ज्ञेया।

यस्माच्च चतुर्थस्य उच्चस्त्रिकोणेशो वा स्यात्तस्य दशा वाहनग्रामलाभप्रदा पशुवृद्धिकरी च ज्ञेया। अत्रयदि चन्द्रः स्यात्तदा घृतादिरसलाभः प्रोक्तः। पूर्णचन्द्रे च निधिप्राप्तिर्मणिसञ्चयो वा प्रोक्तः। शुक्रश्चेत्तदा मृदङ्गवाद्यगानादिपुरस्कारो भवति। गुरुः स्यात्तदान्दोलिकालाभः।

यत्र लग्नेशदशमेशनवमेशोच्चशुभग्रहयोगः स्यात्तस्य दशा सर्वोत्कर्षमहैश्वर्यसाम्राज्यादिमहत्फलप्रदा।

एवं भावभावेशयोगानुसारं फलमुक्त्वा ग्रहाणामुच्चनीचादिसञ्ज्ञानुसारं फलमाह।

अत्रैवं नक्षत्रदशा ग्रहाणां परमोच्चोच्चपूर्वापरत्रिकोणस्वगृहस्थमित्रस्याधिमित्रस्थतात्कालिकमित्रस्थोदासीनस्थशत्रु धिशत्रुनीचतत्पूर्वापरपरमनीचनीचशत्रुवर्गस्थपापयुक्तस्ववर्गस्थत्रिकोणकेन्द्रस्थयुद्धपराजितपरमास्तादिसञ्ज्ञायुतानां स्वगुणानुसारं शुभाशुभं फलं ज्ञेयम्।

**स्पष्टव्याख्यानमाह—**

षड्बलैक्ययुक्तस्य परमोच्चस्य च दशा सम्पूर्णाख्या सा च राज्यभोग्यशुभफलकरी।

उच्चस्य बलयुतस्य च ग्रहस्य दशा पूर्णाख्या बहुलैश्वर्यप्रदा किञ्चिद्रोगभयकरा चेति प्रोक्ता।

परमनीचस्य दुर्बलस्य च दशा रिक्ताख्या रोगधनहानिमृत्युभयप्रदा।

अत्युच्चातिनीचयोर्मध्यगस्य ग्रहस्य दशावरोहिणीनाम्नी प्रोक्ता। मित्रस्थोच्चस्य च दशा मध्याख्या साधारणशुभफलप्रदा।

परमनीचात्परमोच्चान्तगतस्य ग्रहस्य दशा चारोहिणी नाम्नी प्रोक्ता।

नीचस्य शत्रुनवांशस्थस्य च दशाऽधमाख्या भयकष्टदुःखप्रदा ज्ञेया। एवमेता दशा नामानुरूपं फलप्रदा भवन्ति।

पुनरपि गुरुनवमेशयोर्योगेन फले वैशिष्ट्यमाह—

योगदृष्टि केन्द्रगृहादिभिः यदि गुरोर्नवमेशस्य वा सम्बन्धः स्यात्तदा तद्योग-विशिष्टानामपि ग्रहाणां दशा भाग्यवृद्धिकरा । जन्मकाले भाग्ययोगादिफलदो ग्रहश्च यदा मार्गी भवति तदैव शुभफलप्रद इति ज्ञेयम् । एवमेवान्येषामपि ग्रहाणां बलाबलानुसार तारतम्येन शुभाशुभं फलं प्रोक्तम् ।

केन्द्रपणफरापोक्लिमभावानां योगेनापि तारतम्येन पूर्णमध्याल्पफल बोध्यम् ।

नैसर्गिकाणां तात्कालिकमित्रग्रहाणामन्यर्दशायां सर्वे ग्रहाः शुभफलप्रदाः । शत्रुग्रहाणाञ्चान्तदर्शायामशुभफलकराश्चेति भावः ।

## (इ) चरदशाफले विशेषः—

चरदशाफले द्वादशराशीनां दशायां तेषामन्तर्दशायाञ्च फलमाह ।

दशाधीशो ग्रहो यस्मिन् राशौ स्थितस्तत आरम्य द्वाशराशीनामन्तर्दशा ज्ञेया । तत्र यो राशिः स्वस्वामियुतो मित्रयुतो वा तस्मिन् राज्यादिसम्पत्प्राप्ति-र्ज्ञेया । यत्र पापो नीचः शत्रुस्थो वा स्यात्तत्राशुभं फलं वाच्यम् । यत्राष्टकवर्गीय-शुभचिन्हबाहुल्यन्तत्र शुभम् । यत्राशुभबाहुल्यन्तत्राशुभम् ।

स्वस्वभावक्रमेणापि (तनुधनसहजादिक्रमेणेति भावः) पुत्रदारादिकानां शुभाशुभं बोध्यम् । यथा पुत्रचिन्तायां पञ्चमस्थानं पुत्रलग्नमवबुध्य ततश्च द्वितीयस्थानात्पुत्रधनचिन्ता तृतीयस्थानात्पुत्रभ्रातृणां चिन्ता चतुर्थात्पुत्रमातृचिन्ता पञ्चमात्पुत्रविद्यादिचिन्ता चेत्यादिकं सर्वं विचार्यमेवमेव मातृपितृदारादिकाना-मपि ज्ञेयम् ।

ग्रहाणां राशीनाञ्च यद्बात्वादिक प्रोक्तन्तस्य लाभालाभादिकं तेषां ग्रहाणां राशीनाञ्च दशायामेव ज्ञेयम् ।

एवमेवेष्टानिष्टस्थानभेदाच्छुभपापग्रहदशाभेदाच्छुभपापग्रहयोगाच्च यत्कि-मपि शुभाशुभं प्रोक्तन्तस्य फलमपि तत्तद्ग्रहराशिदशास्वेव बोध्यम् ।

ग्रहवद्राशिदशायामपि द्वादशराशीनामन्तर्दशादिक प्रोक्तम् ।

पुनरपि फले वैशिष्ट्यमाह—

येषां भावानां स्वामिनः कारका वा केन्द्रत्रिकोणस्थास्तेषां दशायां तत्तद्भावानां वृद्धिः ।

येषां भावानाञ्च कारकादयो दुष्टस्थानस्था (षष्ठाष्टमद्वादशस्था इति भावः) तेषां भावानां हानिरिति ।

यस्माद्भावाद् द्वितीये लाभे तृतीये चतुर्थे दशमे चतुर्थे वा ग्रहा अथवा यद्भावनाथो भावं पश्यति यद्वा यस्य भावस्य स्वामी बलवानुच्चस्थो वा तद्भावपुष्टिमाहुः ।

वैपरीत्ये यद्भावेशः शत्रुस्थो नीचः पापो वा तद्भावहानिरिति ज्ञेया ।

भावेशाश्रितराशीशोऽपि यदि ग्रहः षष्ठाष्टमभावस्थो भावेशश्च स्वभावं न पश्यति चेत्तदापि तद्भावहानिरिति । लग्नेशे च परमोच्चस्थे लग्ने च शुभयुते दृष्टे वा शतमायुर्योगो भवति ।

द्वितीय नवमैकादशमभावचतुष्टये बलयुते सति सम्पूर्णधनागमयोगः प्रोक्तः । मनुष्यश्च कुबेरवदाढ्यो भवति ।

*लग्ने लग्नेशचतुर्थेशयोगेऽश्ववाहनादि लाभः । अत्र शुक्रश्चेत्तदान्दोलिका*-प्राप्तिः । गुरुश्चेत्तदा गजवाहनलाभ इति विशेषेण बोध्यम् ।

**विशेषयोगमाह—**

केन्द्रैकादशद्वितीयलग्नत्रिकोणतृतीयस्थानेषु लग्नेशचतुर्थेशयोगे लग्नेऽपि लग्नेशचन्द्रयोगे वा लग्ने चन्द्रे चन्द्रराशौ च लग्नेशे सति वैतयोर्भाग्यकेन्द्राश्रितयोर्वा सति द्वौ दुःस्थानगौ भूत्वा स्वभावं पश्येतान्तदा दीनवंशसमुत्पन्नोऽपि मनुष्यश्चतुर्वाहनयुतो नृपो भवतीति ज्ञेयम् ।

## (उ) चरदशाफलकथनम् ।[1]

चरदशाया अपि विंशोत्तरीकालचक्रदशाफलवद्विशेषेण फलमत्र ग्रन्थकारेणाङ्कितम् । इयं दशा *लग्नमारभ्य द्वादशभावानायायुर्वर्षानुरूपं प्रोक्ता । अथ चात्र* यदि दशाप्रदराशितोऽष्टमपञ्चमनवमभावेषु पापग्रहश्चेत्तदा सा दशा दुःखप्रदा

१. बृ० पा० (मुम्बई-सं०) पू० भा० ५० अध्यायः सकलः ।

ज्ञेया। यदि च तृतीयषष्ठमभावगतः पापग्रहः स्यात्तदा तद्दशायाञ्जयसुखादिकं वाच्यम्। अथ चात्र तृतीयषष्ठमभावगतः शुभग्रहो भवेत्तदा पराजयादिकमशुभं प्रोक्तम्। दशाप्रदराशितः एकादशभावगतः पापः शुभो वा ग्रहः स्यात्तदा तु शुभमेव फलम्।

अथ च यदि दशाप्रदराशिः शुभग्रहयुतश्चेत्तदा शुभं फलम्।
अशुभग्रहयुतः स्यात्तदा चाशुभं फलमिति विशेषेण ज्ञेयम्।

## अत्र विशेषमाह—

यदि दशाप्रदराशिः शुभः परञ्चात्र पापग्रहयुतिस्तदा पूर्वं शुभं पश्चादशुभं फलं वाच्यम्। एवं यदि दशाप्रदराशिः पापः परञ्चात्र शुभग्रहयुतिस्तदा पूर्वं पापफलं पश्चाच्छुभफल वाच्यम्। दशाप्रदराशिरपि पापोऽत्र ग्रहोऽपि पापः स्यात्तदा सदा चात्र पापफलमेव वाच्यम्।

एवं शुभराशौ शुभग्रहयोगे सदा शुभं फलं ज्ञेयम्।

अथ च शुभराशिः शुभपापग्रहयुतश्चेत्तदा पूर्वं कष्टं पश्चात्सुखं वाच्यम्। एवमेव पापराशिः पापशुभयुतः स्यात्तदा पूर्वं सौख्यं पश्चात्कष्टमिति वोध्यम्।

## अत्र विश्लेषणमाह—

द्वितीयपञ्चमचतुर्थभावेषु राजप्रीतिजयसौख्यारोग्यादिकं वाच्यम्। नवमभावेऽपि शुभयुते सति धर्मबुद्धिगुरुजनसौख्यादिक प्रोक्तम्। तृतीयस्थे पापे शत्रुजयो ज्ञेयः। चतुर्थस्थे पापे स्थानहानिः, सप्तमस्थे पापे स्त्रीकष्टं दशमस्थे कीर्तिहानिः, नवमस्थे पितृपीडनमित्यादिकञ्चात्र ज्ञेयम्। एषु शुभग्रहयोगे सौख्यं वाच्यम् केन्द्रस्थानेष्वपि शुभग्रहेषु लाभशत्रुजयादिकं ज्ञेयम्।

## अत्र विशेषः—

जन्मकालग्रहस्थित्यनुरूपं दशाकालेऽपि गोचरवशाद्ग्रहस्थितौ सत्यां द्वयोस्तारतम्येन फलं वाच्यम्। यथा हि यदि जन्मकालेऽपि राशिः शुभग्रहयुतस्तथा दशाभोगकालेऽपि गोचरवशात्स राशिः शुभग्रहयुतस्तदा पूर्णं शुभं फलं वाच्यम्।

यदि च जन्मकाले राशिः पापयुतो गोचरेऽपि पापाक्रान्तस्तदा पूर्णपापफलं बोध्यम्। मिश्रे मिश्रफलं ज्ञेयम्।

यश्च दशाप्रदराशिः शुभग्रहयुतस्तस्य च पश्चादपि शुभग्रहः स्थितस्तदा तस्य दशा शुभप्रदा बोध्या। अन्यथा चाशुभं फलं वाच्यम्। यद्राशितः पञ्चमे नवमे शुभग्रहाः स्युस्तस्य राशेर्दशायामपि शुभं फल ज्ञेयम्। अन्यथा पापग्रहाः स्युस्तदा पापफलं वाच्यम्।

राशीनां बाधास्थानान्यधिकृत्य फलमाह—

मेषकर्कतुलामकराणां चरराशीनां क्रमेण कुम्भवृषसिंहवृश्चिकाख्या राशयो बाधास्थानानि प्रोक्तानि दशाप्रदराशीशाक्रान्तराशौ बाधास्थानेषु वा पापग्रहयुतौ महाशोकबन्धरोगादिकं पापफलं प्रोक्तम्।

### अत्रापवादमाह—

अथ च दशाराशिः स्वोच्चग्रहयुतश्चेत्तदा तत्रापि शुभं फलम्। यश्च राशिर्ग्रहशून्यस्तस्य दशायां फलमपि दुःखप्रदमिति बोध्यम्।

दशाराशितः षष्ठाष्टमद्वादशभावा एव बाधास्थानानि भूत्वा राहुयुता भवेयुस्तदा तद्दशायां प्रस्थानबन्धननृपभयशत्रुपीड़ादिकमशुभं फलं प्रोक्तम्। दशाप्रदराशिर्यदि शनिरविराहुमङ्गलादिपापग्रहयुतश्चेत्तदा तदन्तर्दशायां राजकोपाद्धानिर्भयञ्च वाच्यम्। दशाप्रदराशितस्तद्राशीशाद्वा पञ्चमे नवमे वा नीचपापग्रहयुते मृत्युभय प्रोक्तम्। अन्यथा स्वोच्चग्रहयुते तु सौख्यं नगरग्रामाधिपत्यं धनपुत्रसौभाग्यादिकं सेनापत्यादिकञ्च शुभं फलं ज्ञेयम्।

दशाप्रदराशीशो गुरुदृष्टः शुभराशिगश्च स्यात्तदा तद्दशायां धनपुत्रमङ्गलप्राप्त्यादिकं प्रोक्तम्।

### ग्रहाणां शत्रुराशिवर्णनमाश्रित्य फलमाह—

वृषतुलामकरकुम्भमिथुनाख्या राशयः सूर्यस्य, वृश्चिकतुलाकुम्भाख्या चन्द्रस्य, कुम्भमीनमिथुनतुलाकन्याख्या भौमस्य, कर्कमीनवृश्चिककुम्भाख्या बुधस्य, वृषतुला

मिथुनकन्याख्या गुरोः, सिंहवृश्चिककर्कधनुराख्या शुक्रस्य मेषसिंहधनुर्वृश्चिककर्काश्च शनेः क्रमेण शत्रुराशयो वोध्याः। सूर्यादिग्रहाणामेषु शत्रुराशिषु योगे सति चाशुभं फलं वाच्यम्।

## राजयोगकारकग्रहानुसारं फलमाह—

ये राजयोगप्रदाः शुभग्रहमध्यस्थाश्च वा भवेयुरथवा येभ्यो द्वितीयचतुर्थभावस्थाः शुभग्रहाः स्युस्तेषां ग्रहाणां दशा शुभफलदा। शुभग्रहद्वयमध्यगः पापग्रहोऽपि शुभफलप्रदो वाच्यः।

शुभग्रहस्य मध्ये शुभग्रहदशा शुभा प्रोक्ता। यस्य ग्रहस्य पञ्चमनवमभावस्थः शुभग्रहस्तस्यापि दशा शुभप्रदा। यस्य ग्रहस्य दशारम्भे दशान्ते च मित्रग्रहस्य शुभराशेर्वा दशा भवेत्तस्यापि ग्रहस्य दशा शुभफलप्रदेति ज्ञेयम्। यस्य दशारम्भात्पञ्चमनवमस्थः शुभग्रहोऽथ वा शुभराशौ शुभग्रहस्य दशान्तरं भवेत्तस्यापि फलं शुभम्। शुभराशौ पापदशारम्भोऽपि शुभः। शुभराशौ शुभदशारम्भस्त्वतीव शुभ इति स्वतः स्पष्टम्। दशारम्भे पापराशिश्चेदथवा तस्य राशेः स्वामी नीचादौ स्थितः स्यात्तदा तद्दशायां भाग्यहानिर्ज्ञेया।

यद्राशौ राशितो वा पञ्चमनमस्थो नीचग्रहोऽथवा राशीश्वरो वा नीचो नीचयुतो वा स्यात्तद्दशायां धनधान्यादिकहानिर्रोगभयञ्च वाच्यम्।

## राहुकेत्वोर्विशेषमाह—

कुम्भराशितो राहोर्वृश्चिकाच्च केतोः राशिचतुष्टयान्तं स्वस्थानं प्रोक्तम्।

तद्राशिषु राहुकेत्वोः स्थितिवशात्तद्राशीनां दशासु शुभं ज्ञेयम्।

यस्य ग्रहस्य दशा शुभा प्रोक्ता स ग्रहो यदि मारकराशिस्थोऽथवा यद्राशौ दशान्तः स्यात्तत्र शुक्रेण चन्द्रेण युते दृष्टे वा तद्दशायां राजकोपाद्धनक्षय इति ज्ञेयम्।

शत्रुराशौ राहुणा दृष्टे युते वापि पूर्वोक्तं फलं वोध्यम्। शनिदशायां मकरराशिदशायां वा पूर्वोक्तं फलं न भवतीति विशेषः।

राहोर्दशान्ते सर्वस्वनाशमरणबन्धनदेशत्यागकष्टादिकं ज्ञेयम् । यदि राहुतः पञ्चमनवमस्थः पापश्चेत्तदा तु निश्चयेन दुःखं ज्ञेयम् ।

राह्वादिपापग्रहाक्रान्तराशीनामपि दशासु पूर्वफलं प्रोक्तम् । राशिदशारम्भे मारकग्रहयुतिश्चेत्तदापि न शुभं फलम् । अत्र राहुणा योगे तु बन्धनं धननाशश्च वाच्यः । यत्र कुत्रापि दशारम्भे राहुश्चेत्तदा तद्भावहानिर्बोध्या । यथा द्वितीयभावस्थे धननाश इति ।

चन्द्रशुक्रयुते द्वादशभावे राजकोपेण धननाशो भवति प्रोक्तः ।

केतुमङ्गलयुतिश्चेत्तदा मरणमग्निभयञ्च वाच्यम् ।

दशारम्भे चन्द्रशुक्रयुतिद्वितीयभावे चेत्तदा राज्यलाभः ।

## अर्गलाविचारेण चरदशाफलमाह—

एवमर्गलाविचारेणाऽपि शुभाशुभं फलं ज्ञेयम् । अर्थाद्यस्य ग्रहस्य राशेः शुभार्गलायां शुभः पापो वा ग्रहस्तिष्ठेत् तेन दृष्टं लग्नं प्रबलं भवति ।

(अत्र लग्नशब्देन राशिर्ग्राह्यः) तद्दशायां शुभं वाच्यम् ।

यश्चराशिविपरीतार्गलायुतश्चेदथ वा शुभग्रह दृष्टो न स्यात्तद्दशायामशुभं ज्ञेयम् । शुभगृहदृष्टे सति शुभं फलं भवति ।

### (ऋ) दशाफलभेदद्वयकथनम्—

ग्रहाणां दशाया अपि प्रकारद्वयेन फलमुपलभ्यते ।

साधारणविशिष्टभेदेन । स्वभावतो ग्रहस्य यत्फलं प्रोक्तं तत्साधारणमित्युच्यते । स्थानस्थितिवशाच्च यत्फलं कथ्यते तद्विशिष्टाख्यं निगदितम् ।[1]

## (लृ) सूर्यादिग्रहाणां क्रमेण दशाफलकथनम्[1]—

### तत्रादौ सूर्यफलम्—

स्वोच्चः परमोच्चः स्वस्थः केन्द्रत्रिकोणैकादशभावगो मूलत्रिकोणस्थो नवमेशेन दशमेशेन वा युतः षड्बलयुतः स्ववर्गादिस्थितः सूर्यश्चेत्तदा महासौख्यधनलाभराजसन्मानाश्वान्दोल्यादिकप्राप्तिर्भवति ।

---

१. बृ० पा० (काशी-सं०), पृ० ३४७ ।

१. बृ० पा० (मुम्बई-सं०) पू० भा० ३६।१-८६ ।

पञ्चमेशेन युते सति पुत्रलाभो द्वितीयेशेन युते सति गजान्तैश्वर्यलाभश्चतुर्थेशेन युते तु वाहनत्रयप्राप्तिर्नृपकृपया सेनापतिश्च भवति। सुखधनवस्त्रवाहनादिकलाभश्च प्रोक्तः।

नीचः षष्ठाष्टमद्वादशभावगो निर्बलः पापयुतेक्षितो षष्ठाष्टमद्वादशभावपतियुतो राहुकेतुयुतो वा स्यात्तदा सूर्यस्य दशायां धनधान्यनाशराजदण्डमहापीड़ाज्वरप्रकोपप्रवासापमृत्युभयचौरसर्पव्रणभीतियशः क्षयादिकञ्च प्रोक्तम्। पितृनाशमनस्तापजनद्वेपादिकमपि भवति। गृहे चाशुभञ्ज्ञेयम्। अत्र सूर्यो यदि शुभग्रहदृष्टश्चेत्तदा क्वचित्सुखप्राप्तिरपि ज्ञेया। पापदृष्टश्चेत्तदा सर्वमशुभमेव प्रोक्तम्।

## चन्द्रफलमाह—

चन्द्रोऽपि सूर्यवत्पूर्वोक्तप्रकारेणोच्चादिवर्गस्थः केन्द्रत्रिकोणलाभगः शुभग्रहदृष्टो युतो वा पूर्णबलान्वितः स्यात्तदा तस्य दशायां भाग्यवृद्धिधनैश्वर्यादिलाभराजप्रीतिवस्त्रवाहनादिलाभपुत्रसुखराजदर्शनराज्यलाभादिकं प्रोक्तम्। यत्नात्कार्यसिद्धिर्गृहेशुभकार्याणि भवन्ति। अश्वान्दोल्यादिलाभः श्वेतवस्त्रप्राप्तिश्च ज्ञेया। चन्द्रे द्वितीयस्थे चोच्चस्थे स्वस्थे वा सति विविधैश्वर्यधनलाभो भाग्यवृद्धिर्महत्सुखञ्च ज्ञेयम्। राजसम्मानं विद्याप्राप्तिश्च भवति।

क्षीणे नीचे चन्द्रे धनहानिः प्रोक्ता। षष्ठाष्टमद्वादशभावगे सबले सति क्वचित्सौख्यं धनलाभश्च ज्ञेयः। पापयुते दुर्बले तु राजद्वेषो, मनोव्यथा धनधान्यनाशश्चज्ञेयः शरीरपीड़ामातृकष्टमपि बोध्यम्।

## भौमदशाफलम्—

पूर्वोक्तसूर्यचन्द्रवदुच्चादिराशिस्थे केन्द्रत्रिकोणलाभगे शुभयुते दृष्टे वा बलवति च भौमे राज्यभूमिधनधान्यवाहनवस्त्राभूषणादिकस्य लाभो राजसम्मानञ्च प्रोक्तम्। विदेशे स्थानलाभः, सोदराणां सुखप्राप्तिश्च ज्ञेया। केन्द्रगे तृतीयस्थे वा पराक्रमेण धनाप्तिर्युद्धे शत्रुजयश्च प्रोक्तः। स्त्रीपुत्रधनराजसम्मानादिकस्य प्राप्तिश्च बोध्या। दशादौ सुखप्राप्तिर्दशान्ते किञ्चित्कष्टमित्यत्र विशेषोऽपि ज्ञेयः।

नीचादिराशिगे षष्ठाष्टमद्वादशस्थे दुर्बले पापदृष्टे युते वा सति चाशुभं फलं प्रोक्तम्।

**राहुदशाफलम्—**

पूर्ववद्राहोरप्युच्चादिराशिस्थे (अत्र राहोर्वृषराशिवच्च सञ्ज्ञकः। केतोश्च वृश्चिक इति ग्रन्थान्तरेषु राहोर्मिथुनं केतोश्च धनुरिति प्रोक्तम्। अत्र राहोर्मिथुनं केतोश्च धनुरिति मूलत्रिकोणं ज्ञेयम्। राहोः कन्या केतोर्मीनमिति स्वगृहे प्रोक्ते) राहोः स्वगृहं कुम्भमपि लिखितम्।[1] बहुसौख्यं धनधान्यादिप्राप्तिः मित्रप्रभुवशाच्छुभं वाहनपुत्रवस्त्रालङ्कारादिलाभो विदेशे राजसम्मानञ्च प्रोक्तम्। शुभयुक्ते दृष्टे योगकारकसंयुते केन्द्रत्रिकोणतृतीयैकादशान्यतमस्थानगे शुभराशिगे वा महाराजप्रसादेन सर्वसम्पत्सुखाप्तिर्यवनराजसम्मानं गृहे कल्याणञ्चज्ञेयम्।

अष्टमस्थे द्वादशस्थे वा कष्टञ्ज्ञेयम्। पापग्रहेण मारकग्रहेण वा युते नीचराशिगे वा स्थानभ्रंशो मनोव्यथा। स्त्रीपुत्रनाशः कुत्सितभोजनाप्तिश्च ज्ञेया।

**अत्र विशेषः—**

दशादौ शरीरपीड़ाधनधान्यनाशश्च ज्ञेयः। दशामध्ये सौख्यं स्वदेशधनाप्तिस्तथा दशान्ते कष्टं स्थानभ्रंशो मनोव्यथा च प्रोक्ता।

**गुरुदशाफलम्—**

पूर्ववदुच्चादिराशिस्थे केन्द्रलाभत्रिकोणादिस्थे च महत्सौख्य राजसम्मानं गजाश्वादिप्राप्तिर्देवब्राह्मणपूजनं स्त्रीपुत्रादिसौख्यं वाहनवस्त्रादिलाभो यज्ञयागादिकर्मसिद्धिर्वेदान्तश्रवणादिकं महाराजप्रसादेनेष्टसिद्धिरान्दोलिकादिप्राप्तिः कल्याणं महत्सुखमन्नदानञ्च प्रोक्तम्। नीचास्तादिके च स्थिते षष्ठाष्टमस्थे पापयुते दृष्टे वा स्थानभ्रंशो मनस्तापं पुत्रपीड़ा पश्वादिधनहानिस्तीर्थयात्रादिकं महद्भयञ्च बोध्यम्।

**अत्र विशेषः—**

दशादौ कष्टफलं चतुष्पादजीवलाभस्तथा मध्येऽन्ते च सुखं राजसम्मान वैभवादिप्राप्तिश्च बोध्या।

---

१. बृ० पा० ४७।३६ (काशी-सं०)

## शनिदशाफलम्—

शनिरपि स्वोच्चादिराशिगे तृतीये चैकादशे वा स्थिते सति राजसम्मान-वैभवैश्वर्यसत्कीर्तिविद्यावादविनोदादिकस्य लाभो ज्ञेयः। महाराजप्रसादेन गज-वाहनभूषणाप्तिः सेनाधीशान्महत्सुखञ्च प्रोक्तम्। राज्यलाभो गृहे कल्याणं स्त्री-पुत्रादिलाभश्च बोध्यः। षष्ठाष्टमद्वादशस्थे नीचेऽस्तङ्गते वा विषशस्त्रादिपीड़ा स्थानभ्रंशो महद्भयं पितृमातृवियोगः स्त्रीपुत्रादिपीडनमनिष्टं राजवैपम्यकार्यञ्च बोध्यम्। शुभयुक्तेक्षिते योगकारकसंयुक्ते केन्द्रत्रिकोणलाभगे धनुर्मीनराशिगते वा शनौ राज्यलाभो महोत्साहो गजाश्ववस्त्रादिप्राप्तिश्च कथिता।

## बुधदशाफलम्—

पूर्ववत्स्वोच्चादिराशिस्थे केन्द्रलाभत्रिकोणगे च बुधे धनधान्यसत्कीर्तिज्ञान-महत्सुखनृपप्रीतिसुकर्मगुणवृद्धिपुत्रदारादिसौख्यं देहारोग्यादिकप्राप्तिश्च प्रोक्ता। व्यापारेण धनागमः क्षीरेण भोजनञ्च बोध्यम्।

शुभदृष्टियुते नवमेशत्वेन दशमस्थे सति बुधस्य दशा सम्पूर्णफलदा बल-वती च प्रोक्ता।

पापग्रहयुते दृष्टे वा राजद्वेषमनोव्यथाबन्धुजनविरोधविरोधविदेशगमनकल-हमूत्रकृच्छ्रादिकं परप्रेष्यञ्च प्रोक्तम्। षष्ठाष्टमद्वादशस्थे सति लाभ भोगधना-दिनाशवातपीड़ापाण्डुरोगकृषिगोभूमिनाशनृपचौराग्निभयादिकञ्च बोध्यम्।

## अत्र विशेषः—

दशादौ धनधान्यविद्यालाभमहत्सुखादिकं पुत्रकल्याणसम्पत्तिः सन्मार्गेण धनाप्तिश्च ज्ञेया। दशामध्ये राजसम्मानं दशान्ते च दुःखमिति प्रोक्तम्।

## केतुदशाफलम्—

स्वोच्चादिस्थे केतौ ( केतुर्वृश्चिकस्य उच्चो मिथुनस्थो मूलत्रिकोणी मीनस्थः स्वगृहीति पूर्वोक्तम् ) केन्द्रलाभत्रिकोणस्थे शुभराशिस्थे शुभवर्गस्थे वा देशग्रामाधिपत्यं स्त्रीपुत्रवाहनचतुष्पादजीवादिकलाभो देशान्तरप्रयाणमन्यदेशे च सौख्यं प्रोक्तम्। तृतीयैकादशषष्ठान्यतमभावस्थे सुखं राज्यञ्च प्रोक्तम्। मिश्रन-

वांशस्थे गजाश्वादिलाभश्च ज्ञेयः । द्वितीयाष्टमद्वादशान्यतमभावगे पापदृष्टे युते वा शूद्रसङ्गो निगडबन्धुनाशः स्थानभ्रंशो मनोव्यथा नानारोगपीड़ा च ज्ञेया।

**अत्र विशेषः—**

दशादौ राजयोगा दशामध्ये महद्भयं दशान्ते दूराटनं शरीरपीड़ा च ज्ञेया ।

**शुक्र दशाफलम्—**

पूर्ववदुदच्चादिस्थे केन्द्रादिगे राज्याभिषेकगजाश्वपश्वादिलाभो नित्यमिष्टान्नभोजनं वस्त्रभूषणादिकस्य प्राप्तिरखण्डमण्डलाधीशराजसम्मानं मृदङ्गवाद्यघोषो गृहलक्ष्मीप्राप्तिश्च बोध्या ।

त्रिकोणस्थे मीनस्थे च सति राज्यार्थगृहसम्पत्प्राप्तिर्विवाहोत्सवैश्वर्यपुत्र-कल्याणेष्टबन्धुसमागमादिकं सेनाधिपत्यं नष्टराज्याद्धनप्राप्तिर्गृहे गोधनसङ्ग्रहश्च प्रोक्तः । षष्ठाष्टमद्वादशनीचान्यतमभावस्थे स्त्रीपुत्रादिपीडात्मबन्धुजनवियोगादिकं ज्ञेयम् ।

नवमेशदशमेशत्वेन लग्नस्थे चतुर्थस्थे वा सति शुक्रस्य दशायां देशग्रामाधिपत्यं देवालयतडागादिपुण्यकर्मसङ्ग्रहोऽन्नदानं नित्यमिष्टान्नभोजनमुत्साहः कीर्तिः सम्पत्तिः स्त्रीपुत्रधनैश्वर्यप्राप्तिर्महत्सौख्यञ्च बोध्यम् । एवमेव शुक्रस्यान्तर्दशाया अपि फलं ज्ञेयम् ।

**अत्र विशेषः—**

शुक्रस्य द्वितीयेशत्वे सप्तमेशत्वे वा दशायां शरीरपीड़ा ज्ञेया । अस्य शान्तिरप्यत्रैवोक्ता । मृत्युञ्जयमन्त्रजपो रुद्रीपाठो गोदानं महिषीदानं वा कार्यम् । अनेन जपदानादिकेनारोग्यं भवतीति भावः ।

दशानामन्तर्दशानां प्रत्यन्तर्दशानामप्येवं बलाबलानुसारं फलं वाच्यम् । अयमेव प्रकारः सर्वत्र । अन्यच्च विस्तारभयादत्र न निरूप्यते ।

**(ए) कालचक्रदशाफलम्[1]—**

---

१. बृ० पा० पू० भा० ४६।४१-१६४ (मुम्बई-सं०) ।

इयं दशा पूर्वं भगवता शङ्करेण पार्वतीं प्रति प्रोक्ता। अस्या महिमा चात्र दृश्यते। ग्रन्थकारेण सारमुद्धृत्य लघुमार्गेणात्र फलप्रकारो दर्शितः।

**फलप्रकारमाह--**

नवांशानुसारं फलनिरूपणम्।

मेपनवांशके चौरो भवति, वृषांशे श्रीमान्, मिथुनांशे ज्ञानी, कर्कांशे राजा, सिहांशे राजसः, कन्यांशे पण्डितः, तुलांशे राजमन्त्री, वृश्चिकांशे निर्धनो, धनुरंशे ज्ञानी, मकरांशे पापः, कुम्भांशे व्यापारी, मीनांशे च धान्यवान् भवतीति क्रमेण बोध्यम्।

**ग्रहाणामुदयानुरूपं फलमाह—**

सूर्यस्योदये राज्यं प्राप्नोति चन्द्रस्योदये कृपिकरो भवति। भौमस्योदये शूरो भवति। बुधस्योदये विमलबुद्धियुतः पण्डितो जायते। गुरुशुक्रयोरुदये तु राज्य मवाप्नोति। शनेरुदये च चौरो भवति।

**देहजीवफलमाह—**

अत्र देहजीवसमायोगः पापग्रहयोगः फलमपि दुःखम्। शुभग्रहयोगे शुभं फलं प्रोक्तम्। अर्थात्पापग्रहयोगे मरणादिकं ज्ञेयम्। शुभग्रहयोगे भूपणादिकस्य पुत्रदारादिकस्य च लाभो भवति। अर्थात्पापक्षेत्रदशायोगे देहजीवौ दुःखितौ भवतः। शुभक्षेत्रदशायोगे तु हर्षितौ कथितौ।

यत्र स्थनेपु देहजीवसमायोगे भौमसूर्यशन्यादीनामेकस्य ग्रहयोगः स्यात्तदा मरणं भवति बहुग्रहयोगे तु का कथा। यत्र जीवो देहयोगयुतः पापग्रहैर्युतश्च तद्दशायां मरणं वाच्यम्। केवले देहयोगे महायोगे महाबाधा ज्ञेया। जीवयोगेऽपि सति मरणं वाच्यम्। जीवे यदा गुरुयोगस्तत्र च राहोर्वक्रस्य शनेः सूर्यस्यापि स्थितिर्भवेत्तदा मृत्युकालो ज्ञेयः। अस्य शास्त्रविधानेन शान्तिः कार्या।

**शुभयोगमाह–**

यदा जीवस्य गुरुणा योगो देहस्य च चन्द्रगुरुशुक्रबुधाद्यैः शुभग्रहैर्योगस्तदा सौख्यं, रोगमृत्युनाशश्च वाच्यः।

## त्रिविधिगतिमाश्रित्य फलमाह–

माण्डूकीमर्कटीसिंहावलोकवतीति नाम्ना त्रिधा गतिः प्रोक्ता । अत्र-माण्डूक्यां गत्यां मण्डूकवदुत्प्लुत्वनमग्रे गमनं भवति । मर्कटायां गत्यां मर्कटवत्पृष्ठतो गमनम् । सिंहावलोकने गत्वा पुनरागमनं भवति यथा सिंहोऽग्रे गत्वा पुनः पश्चात्पश्यतीति भावः । अत्रायं भावः। यदा षष्ठराशितश्चतुर्थराशौ पञ्चमराशितस्तृतीयराशौ गमनं भवति सा गतिर्माण्डूकीति कथ्यते । एतत्फलं रोगकारणम् ।

यदा च पञ्चमराशितश्चतुर्थराशौ चतुर्थराशितश्च तृतीयराशौ गमन भवति सा मर्कटी गतिः कथ्यते। तस्या फलं महद्भयं प्रोक्तम् ।

यदा च द्वादशमीनराशितोऽष्टमवृश्चिकराशौ नवमधनुपश्च प्रथमेषराशौ च गमनं भवति सा सिंहावलोकननाम्ना गतिः कथ्यते। तत्फलं मरणं वाच्यम् ।

## विश्लेषणपूर्वकगतिफलमाह—

कन्यातः कर्कटे गमने सिंहान्मिथुने च माण्डूकीगत्यां रोगो भवति । मीनाद्-वृश्चिके धनुपश्च मेषे गमने सति सिंहावलोकनगतावपि रोगो भवति । सिंहावलोकनगतौ माण्डूकगत्याञ्चापमृत्युर्भवति । मीनाद्वृश्चिके गमने सति ज्वरो वाच्यः । कन्यातः कर्कटे तु मातृबन्धुविनाशनम् । सिंहान्मिथुने च स्त्रियो व्याधिभयम् । कर्कटात्सिंहगमने देहवधः । धनुपश्च मेषगमने पितृवन्धमरणं प्रोक्तम् ।

## पुनरपि फलमाह—

कन्यातः कर्कटगमने पूर्वभागे महत्फलम् । उत्तरभागे चोत्तरदेशमाश्रित्य सौख्येन यात्राप्राप्तिः । सिंहान्मिथुने गमने सति पूर्वभागं त्यक्त्वा चोत्तरभागे कार्य-सिध्यर्थं नैर्ऋत्यां सुखयात्रा भवति ।

सव्यचक्रे कर्कात्सिंहगमने मेषगमने वा कार्यहानिर्व्याधिभयञ्च ज्ञेयम् । तत्र दक्षिणदिशं गत्वा पुनरागमनं भवति ।

पुनः राशिक्रमेण फलं निरूपयति—

कुम्भे व्याधिर्मनोदुःखं मिथुने निर्धनता च भवति ।

मीनाद्वृश्चिके याते चोत्तरदिशं प्राप्य सङ्कटं प्राप्नोति ।

धनुषश्च मेषगमने सति भयं यात्राव्याधिर्बन्धुमरणादिकञ्च ज्ञेयम् । धनुषश्च तुलायां गमने सम्बन्धिवाहश्च ज्ञेयः । वृश्चिके गमने सति स्त्रीप्राप्तिः प्रोक्ता। मेषे गमने सति दक्षिणदिशि गमनं सुखादिकं ज्ञेयम् । अत्र देहजीवसमायोगे शनिस्तिष्ठेत्तदाऽपमृत्युर्बोध्यः ।

## अथ महादशाफलमाह—

सूर्यादिग्रहयोगे राशियोगे च सति क्रमेण सूर्यस्य रक्तपित्तव्याध्यादिकं, चन्द्रस्य धनकीर्तिप्रजावृद्धिवस्त्राभरणप्राप्त्यादिकं, भौमस्य ग्रन्थिस्फोटज्वरपित्तादिकं, बुधस्य गुरोश्च धनप्रजावृद्धिभोगादिकं, शुक्रस्य विद्याविवाहगृहधान्यप्राप्त्यादिकं, शनेश्च तापाधिक्यमहादुःखबन्धुनाशादिकं फलं वाच्यम् । शुभग्रहयोगे शुभं फलमशुभग्रहयोगे चाशुभं मिश्रग्रहयोगे तु मिश्रफलं वाच्यम् ।

## कालचक्रदशायामन्तर्दशानां फलमाह[1]

पूर्वं राशिक्रमेण मेषादिद्वादशराशिषु राश्यन्तर्दशानां राशीशानामनुसारेण फलमाह ।

## तत्रादौ मेषस्य फलमाह—

मेषांशे भौमस्यान्तर्दशायां ज्वरव्रणादिकं भवति बुधशुक्रचन्द्रजीवानाञ्चान्तर्दशायां वस्त्राभरणादिकलाभः कथितः । सूर्यस्य शत्रुक्षोभादिकं महद्भयं प्रोक्तम् ।

## वृषभस्य फलमाह—

*वृषभांशे शनेरन्तर्दशायां नृपेण सहातिकलहो गुरोस्तु विद्यालाभमहत्प्रीतिसुखराजप्रसादिकञ्च प्रोक्तम् ।* मङ्गलस्य देशत्यागमरणज्वरशस्त्राघातादिकं शुक्रचन्द्रबुधानाञ्च वस्त्रभूषणस्त्रीलाभादिकं प्रोक्तम् । सूर्यस्यान्तर्दशायान्तु नृपभीतिपितृमरणहिंस्रजन्तुभयादिकं वाच्यम् ।

## मिथुनफलमाह—

मिथुनांशे शुक्रस्यान्तर्दशायां मौक्तिकवस्त्राभरणस्त्रीलाभादिकं प्रोक्तम् ।

---

१. वृ० पा० पू० भा० ४६।७५-१३६ (मुम्बई-सं०)

भौमस्य मातृपितृमरणज्वरव्रणविदेशगमनादिकं ज्ञेयम् । गुरोश्च विद्याद्रव्यमहैश्वर्यलाभादिक भवति । शनेरन्तर्दशायां प्रयाणमहाव्याधिमरणार्थनाशबन्धुनाशादिकं वाच्यम् । बुधस्य वस्त्रपुत्रविद्यासुखादिकलाभो वाच्यः ।

### कर्कस्यफलमाह—

कर्कांशे चन्द्रस्य स्त्रीपुत्रधनसुखलाभः, सूर्यस्य नृपशत्रुणां भयं ज्वरव्याधिदाहादिक ज्ञेयम् । बुधशुक्रयोः पुत्ररत्नविद्याधनवन्धुलाभादिकं वाच्यम् । भौमस्य विपशस्त्रमरणज्वरदाहपीड़ादिकं भवति । गुरोर्नृपप्रसादमहैश्वर्यलाभादकं भवति । शनेस्तु वातव्याधिसर्पवृश्चिकभयनानाकष्टादिकं वोध्यम् ।

### सिंहस्य फलमाह—

भौमस्यान्तर्दशायां मुखरोगपित्तज्वरशस्त्राघातादिकं ज्ञेयम् । बुधशुक्रयोर्धनस्त्रीपुत्रसुखलाभादिकं वाच्यम् । चन्द्रस्य चोच्चैःपतनदेशत्यागधननाशादिकं वोध्यम् । सूर्यस्य शत्रुजनभयज्वरव्याधिवुद्धिनाशमरणभयादिकं प्रोक्तम् । गुरोस्तु धनधान्यलाभविप्रराजप्रसादिकं वाच्यम् ।

### कन्याफलमाह—

कन्यांशे शनेरन्तर्दशायां व्याधिदुःखप्रयाणज्वरपीडादिकं ज्ञेयम् । वुधशुक्रचन्द्राणां भृत्यपुत्रधनवस्त्राभरणलाभादिक वाच्यम् । सूर्यस्य च विदेशगमनरोगभयबन्धुकलहशस्त्राघातादिकं प्रोक्तम् ।

### तुलाफलम्—

तुलांशे शुक्रस्य सद्बुद्धिसुखस्त्रीपुत्रधनवस्त्रलाभादिकं ज्ञेयम् । भौमस्य पितृकष्टसुहृद्वैरशिरोरोगज्वरशस्त्रघाताग्निदाहादिकं वाच्यम् ।

गुरोस्तु धनरत्नधर्मकर्मराजप्रसादसर्वसुखलाभादिकं वोध्यम् । शनेश्च विदेशगमनमहारोगक्षेत्रभयशत्रुवाधामहादुःखादिकं वाच्यम् । वुधस्य च स्त्रीपुत्रधनैश्वर्यसुखसौभाग्यवन्धुलाभादिकं प्रोक्तम् ।

### वृश्चिलफलमाह—

वृश्चिकांशे शुक्रबुधश्चन्द्राणामन्तर्दशायां नानाधनधान्यसुखैश्वर्यलाभरंग-

नाशादिकं वाच्यम्। सूर्यस्य शत्रुक्षोभव्याधिपितृकष्टहिंसकजन्तुभयधननाशादिकं ज्ञेयम्। भौमस्य वातपित्तरोगव्रणाग्निदाहशस्त्राघातादिकं प्रोक्तम्। गुरोस्तु धनधान्यरत्नलाभविप्रभक्तिराजप्रसादिकं बोध्यम्। शनेस्तु धनधान्यनाशबन्धुवियोगमनोव्ययशत्रुभयादिकं वाच्यम्।

## धनुःफलम्—

भौमस्यान्तर्दशायां ज्वरमुखरोगातिदाहशरीरक्लेशछर्दिव्याध्यादिकं ज्ञेयम्। शुक्रबुधचन्द्राणाञ्च श्रीविद्यासौभाग्यनृपप्रसादलाभादिकं वाच्यम्। सूर्यस्य स्त्रीधननाशराजभयकलहादिकं प्रोक्तम्। गुरोस्तु दानधर्मतपालाभराजप्रसादधनस्त्रीप्राप्त्यादिकं बोध्यम्।

## मकरफलमाह—

मकरांशे शनेरन्तर्दशायां विजदेवनृपाणां प्रकोपः, देशत्यागबन्धुनाशदिकञ्च वाच्यम्। शुक्रबुधचन्द्रगुरूणाञ्च देवार्चनतपोध्यानद्विजपूजनराजप्रसादादिकं वाच्यम्। भौमस्य गदाघातरक्तपित्तातिसारज्वरशिरोरोगभयादिकं बोध्यम्। शनेस्तु पितृबन्धुनाशो ज्वरशत्रुराजभयादिकञ्च ज्ञेयम्।

## कुम्भफलमाह—

कुम्भांशे शुक्रस्यान्तर्दशायां नानाविद्याधनस्त्रीपुत्रमित्रसुखशरीरारोग्यैश्वर्यलाभादिकं ज्ञेयम्। भौमस्य ज्वराग्निचौरशत्रुभयमनोव्ययादिकं बोध्यम्। गुरोस्तु सुखारोग्यराजप्रसादसुखादिकं प्रोक्तम्। शनेश्च कफवातपितभयकलहप्रयाणक्षयरोगभयादिकं ज्ञेयम्। बुधस्य च पुत्रमित्रस्त्रीधनैश्वर्यसुखसौभाग्यलाभादिकं सुखं वाच्यम्।

## मीनफलम्—

मीनांशे चन्द्रस्यान्तर्दशायां विद्यास्त्रीबहुक्रीडालाभो व्याधिनाशश्च ज्ञेयः। सूर्यस्य बन्धुकलहरोगचौरभयादिक वाच्यम्। बुधशुक्रयोश्च शत्रुविजयपशुभूमिधनपुत्रलाभादिक प्रोक्तम्। भौमस्य जनविवादकलहशत्रुभयादिकं ज्ञेयम्। गुरोश्च धनवस्त्रश्रीसुखराजप्रसादकीर्त्यादिकं वाच्यम्।

शनेस्तु धनैश्वर्यनाशः वेश्यादीनामुपद्रवेण देशत्यागो निर्धनता च बोध्यम् ।

**अत्र वैशिष्ट्यमाह—**

इयं कालदशायां द्वादशराशिषु द्वादशराशीनामन्तर्दशफलकनस्थाने राशीशानां ग्रहाणामनुरूपं फलं सौकर्येण प्रोक्तम् । पापग्रहाणां फलं पापं शुभानाञ्च शुभम्। परञ्च यदिपापा अपि दशाधीशस्य मित्राणि भवन्ति तदा पापानामपि दशा शुभप्रदा भवति । अथ च शुभग्रहा अपि यदि दशाधीशस्य शत्रवो भवन्ति तदा शुभग्रहाणामपि दशा चाशुभप्रदेति ज्ञेया ।

**दशाफलभोगेऽनिवार्यतामाह—**

जातकेन दशानुरूपं फलमवश्यमेव भोक्तव्यम् । यतो ह्रीदं फलं पूर्वजन्मकृतसुकृतदुष्कृतानुरूपं ग्रहयोगानुसारमस्मिन् जन्मनि भवति । अतश्चास्य फलस्य भोगोऽनिर्वाय इत्याहात्र ग्रन्थकारः ।[1]

**अथ कालचक्रनवांशदशाफलमाह[2]—**

कालचक्रदशायां द्वादशराश्यन्तर्दशानां फलकथनस्थाने तन्नवांशराशीनां फलमुक्तम् ।

**अधुना नवांशवशेन राशीनां फलं निरूपयति । तत्रादौ मेषफलमाह ।**

मेषे मेषेनवांशके रक्तपीड़ा, वृषांशे धान्यवृद्धिः, मिथुनांशे ज्ञानोदयं, कर्कांशे धनवृद्धिः, सिंहांशे शत्रुभयं, कन्यांशे स्त्रीसुखं, तुलांशे राजमन्त्रित्वं, वृश्चिकांशे मृत्युभयं, धनुरंशे धनलाभश्च, क्रमेण ज्ञेयम् ।

**वृषफलमाह—**

वृषे मकरांशे पापकर्माणि, कुम्भे वाणिज्यम्, मीने सर्वार्थसिद्धिः, वृश्चिकेऽग्निभयम्, तुलायां राजसम्मानम्, कन्यायां शत्रुवर्धनम्, कर्के स्त्रीकष्टम्, सिंहे नेत्रपीडनम्, मिथुने विषभयम्, इति च क्रमेण फलं प्रोक्तम् ।

---

१. बृ० पा० पू० भा० ४६।३५ (मुम्बई-सं०)

२. बृ० पा० ५०।१३७-१६४ (मुम्बई-सं०)

### मिथुनांशफलमाह—

मिथुने वृषांशे धनलाभः, मेषे ज्वरसम्भवः, मिथुने च मातुलप्रीतिः, कुम्भे शत्रुवर्धनम्, मकरे चौरभयम्, धनुषि विद्यावृद्धिः, मेषे शस्त्रसङ्घातः, वृषे कलहः, मिथुने सुखमिति सर्वं क्रमेण फलं वाच्यम्।

### कर्कांशफलमाह—

कर्के कर्कांशे सुखप्राप्तिः, सिंहे नृपभयम्, कन्यायां भ्रातृपूजा, तुलायां यशोलाभः, वृश्चिके पितृबाधः धनुषि ज्ञानधनागमः, मकरे त्वयशो लोके, कुम्भे वाणिज्यहानिः, मीने सुखमिति सर्वं क्रमेण फलं बोध्यम्।

### सिंहांशफलमाह—

सिंहे वृश्चिकांशे कलहः, तुलांशे सुखसम्पत्तिः, कन्यांशेऽतिलाभः, कर्कांशे पशुभयम्, सिंहांशे पुत्रलाभः, मिथुने शत्रुवर्धनम्, वृषांशे सुखसम्पत्तिः, मेषांशे महत्कष्टम्, मीने दीर्घयात्रा चेति सिंहराशौ क्रमेण फलं वाच्यम्।

### कन्यांशफलमाह—

कन्यायां कुम्भांशे धनलाभः, मकरांशेऽपि धनप्राप्तिः, धनुषि भ्रातृसौख्यम्, मेषे मातृसुखम्, वृषे पुत्रसौख्यम्, मिथुने शत्रुभयम्, कर्के स्त्रीप्रीतिः, सिंहे व्याधिः, कन्यायां पुत्रवृद्धिरिति सर्वंक्रमेण कन्याराशौ फलं प्रोक्तम्।

### तुलांशफलमाह—

तुलायां तुलांशे धनलाभः, वृश्चिकांशे भ्रातृवृद्धिः, धनुषि पितृसौख्यम्, मकरे मातृकष्टम्, कुम्भे वाणिज्यलाभः, मीने सुखसम्पत्तिः, वृश्चिके स्त्रीकष्टम्, तुलायां जलभयम्, कन्यायां सुखसम्पत्तिरिति सर्वं तुलायां राशौ फलं बोध्यम्।

### वृश्चिकांशफलमाह—

वृश्चिके कर्कांशे धनहानिः, सिंहे राजभयम्, मिथुने भूमिलाभः, वृषेऽर्थलाभः, मेषे रक्तपीडा, मीने सुखसमृद्धिः, कुम्भे वाणिज्यलाभः, मकरे धननाशः, धनुषि च सुखसमृद्धिरिति सर्वं वृश्चिकराशौ फलं क्रमेण ज्ञेयम्।

### धनुरंशफलमाह—

धनुषि मेषांशे धनलाभः, वृषे भूमिवृद्धिः, मिथुने कर्के सिंहे च सर्वसिद्धिः, कन्यायां कलहः, तुलायां धनलाभः, वृश्चिके रोगोत्पत्तिः, धनुषि च पुत्रसुखमिति सर्वं धनुराशौ क्रमेण ज्ञेयम्।

### मकरराशिफलमाह—

मकरराशौ मकरांशे पुत्रलाभः, कुम्मे धनवृद्धिः, मीने कल्याणम्, वृश्चिके पशुभयम्, तुलायां धनलाभः, कन्यायां शत्रुभयम्, कर्के श्रीप्राप्तिः, सिंहे शत्रुभयम्, मिथुनेच विषबाधेति सर्वं मकराराशौ फल विचार्यम्।

### कुम्भांशफलमाह—

कुम्भराशेर्वृषांशे धनलाभः, मेषे नेत्रपीडा, मीने दीर्घयात्रा, कुम्भे धनवृद्धिः, मकरे सर्वसिद्धिः, धनुषि ज्ञानवृद्धिः, मेषे सौख्यहानिः, वृषे मरणम्, मिथुने च कल्याणमिति हवं कुम्भराशौ फल चिन्त्यम्।

### मीनांशफलमाह—

मीनराशौ कर्कांशे धनवृद्धिः, सिंहांशे राजसम्मानम्, कन्यायां धनलाभः, तुलायां वाणिज्यलाभः, वृश्चिके ज्वरपीडा, धनुषि ज्ञानसुखोदयः, मकरे स्त्रीविरोधः, कुम्भे जलभयम्, मीने सर्वसौभाग्यमिति च मीनराशौ क्रमेण फलं वाच्यम्।

### वैशिष्ट्यमाह—

क्रूरदशाकाले शान्तिविधानं क्रूरफलनाशार्थं विधेयम्।
अथ च काशीसंस्करणेऽत्र विशेषोऽपि दृश्यते।[1]

चक्रदशायां फलप्रकारोऽत्र विहितः। इदं चक्रदशाफलं चक्रदशाफलप्रकरणे लिखितम्। चक्रदशा च पृथक् रूपेणाप्युपलभ्यते। किमिदं तस्या फलमुत वा

१. बृ० पा० (काशी-सं०) ४६ अध्यायः, जातकपारिजातः, चौखम्वा संस्कृत सीरिज, बनारस, १७,४७-७५।

कालचक्रदशाफलमेवेति प्रश्ने जातकपारिजातमाश्रित्योत्तरमवगम्यते । तत्रापि चक्रदशा फलक्रमेण कालचक्रदशायामेव फलं दर्शितम् । टीकायां कालचक्रदशाफलमेव चक्रदशाफलमिति स्पष्टम् । अतश्चेदं फलमपि कालचक्रदशामधिकृत्यैवेति सुस्पष्टम् । फलञ्चेदं जन्मचक्रस्थद्वादशभावगतराशिचक्रमधिकृत्योपलभ्यते ।

## फलमाह—

*लग्नगतराशिमधिकृत्य* देहारोग्यसुखादिकं *वाच्यम् । यदि तत्र शुभराशि*श्चेत्तदा शुभमशुभराशिः स्यात्तदा चाशुभमिति प्रोक्तम् । उच्चराशिश्चेत्तदा राजसम्मानधनलाभादिकं वोध्यम् ।

## द्वितीयभावफलमाह—

द्वितीयभावगतराशिमधिकृत्य सुभोजनस्त्रीपुत्रधनविद्यावाक्पटुत्वसत्सङ्गादिकं सुखं वाचम् । अत्रापि शुभराशौ पूर्णफलमन्यथा मिश्रफलमिति ज्ञेयम् ।

## तृतीयभावफलमाह ।

*तृतीयभावराश्यनुरूपं* भ्रातृसुखशौर्यसुवर्णवस्त्रसम्मानप्राप्त्यादिकं वोध्यम् । शुभराशौ शुभफलमन्यथाशुभमिति ।

## चतुर्थभावफलमाह—

अत्रच बन्धुभूमिराज्यगृहारोग्यवस्त्रवाहनादिकं सुखं प्रोक्तम् । एवमेव पञ्चम - भावे स्त्रीपुत्रारोग्यराज्यमित्रसङ्गमविद्यायशोवृद्धिधैर्यपराक्रमोदयादिक वोध्यम् । *षष्टमभावे च चोराग्निनृपविषशस्त्राणां प्रमेहगुल्मपाण्डुरोगानाञ्च भयादिकं* विचार्यम् । सप्तमभावे स्त्रीपुत्रादिकसुखस्य विवाहकृषिगोधनवस्त्रादिकलाभस्य विचारो विधेयः । अष्टमभावाच्च स्थानभ्रंशवन्धुनाशदारिद्र्यदुःखादिकं चिन्त्यम् । नवमभावात्तु पुत्रकलत्रधनकृषिगृहसौख्यसत्कर्मधर्मवृद्धिसत्सङ्गादिकस्य फलं प्रोक्तम् । दशमभावाच्च राज्यलाभराजसम्मानस्त्रीपुत्रसौख्यकार्यसिद्धिसुखैश्वर्यादिकलाभस्य फलं वोध्यम् । एकादशभावे च स्त्रीपुत्रबन्धुसौख्यस्य, धनवस्त्रराजप्रसादादिकलाभस्य सत्सङ्गस्य च फलं वाच्यम् । द्वादशभावे तु शरीरपीडालस्यस्थानभ्रंशदारिद्र्यकर्मवैफल्यव्यर्थव्ययादिकस्य च विचारः कार्य इति ।

अत्र विशेषः—

पूर्वोक्तप्रकारेणात्र सर्वत्रशुभग्रहराशौ शुभं पूर्णञ्च फलंवाच्यम्। अशुभग्रहराशौ चाशुभं फलं ज्ञेयम्। मिश्रे मिश्रफलमिति वोध्यम्।

जातकपारिजाते चापि कालचक्रदशाफलनिरूपणं दशाफलाध्याये विस्तरेणोपलभ्यते।[1]

## (घ) सुदर्शनाख्यं चक्रम्।[2]

महर्षिपाराशरेणात्र ज्योतिषशास्त्रे सुगमफलज्ञानार्थमद्भुतं सुदर्शनं नाम चक्रं निगदितम्। आश्चर्यंकरञ्चास्य फलम्। इद प्रतीयते यत् पुरा यथा सर्वैः देवैरेकीभूयस्वतेजसा चास्य चक्रस्य निर्माणं विहितमसुरसेनानाशायेत्थमेव पराशरेणापि सर्वग्रहफलसारप्रदर्शनपुरःसरमिदं सर्वशक्तिमत्सुदर्शनं नाम चक्रं प्रोक्तम्। यथा पद्मपुराणोद्धरण शब्दकल्पद्रुमे।[3]

> अथ विष्णुमुखा देवा स्वतेजांसि ददुस्तथा।
> तेनाकरोन्महादेवः सहसा शस्त्रमुत्तमम्॥
> चक्रं सुदर्शनं नाम ज्वालामालातिभीषणम्।

सुदर्शनम् (शोभनं दर्शनमस्येति)।

तत्रैव सर्वरोगहरस्य सुदर्शनाख्यस्य चूर्णस्य प्रशंसायां भावप्रकाशोद्धरणम्।

> एतत् सुदर्शनं नाम चूर्णं दोषत्रयापहम्।[4]

नारदीयपञ्चरात्रे सुदर्शनाख्यचिह्नधारणविधौ श्रीहरिभक्तिविलासग्रन्थोद्धरणम्।[5]

> द्वादशारं तु षट्कोणं बलयत्रयसंयुतम्।
> हरेः सुदर्शनं तप्तं धारयेत्तद्विचक्षणः।

---

१. जातकपारिजातः, चौखम्बा संस्कृत सीरिज, बनारस, १७ अध्यायः।
२. बृ० पा० (मुम्बई-सं०) पू० भा० ५१।१४-२५
३. शब्दकल्पद्रुमः पञ्चमः काण्डः, पृ० ३६८, मोतीलाल बनारसीदास दिल्ली।
२. तत्रैव पृ० ३६६
५. तत्रैव पृ० ३६८

तथा च पराशरोऽप्यस्मिन् ग्रन्थे।

> विश्वचक्रं कालचक्रं दिव्यचक्रं सुदर्शनम्।
> विष्णो कराम्बुजावासमीडे तज्ज्ञानमद्भुतम्।
> सुदर्शनं द्वादशारं जन्मभेन्द्वर्कराशितः।[1]

अयं भावः—

यथासुदर्शनमस्त्रसर्वासुरनिपूदनमपि च सुदर्शनं नाम चूर्णं दोषत्रयोद्भूत-सर्वरोगविनाशकमित्यमिदमपि ज्यौतिषे सर्वफलकथने सारभूतम्।

यथा हि भक्तिशास्त्रेषु तस्य स्वरूपमपि द्वादशार षट्कोणं कथितं तथात्रापि द्वादशारं द्वादशलग्नरूपमेव प्रोक्तम्।

काशीसंस्करणे त्वस्य महिमाऽपि भूयानुक्तः।

**पराशर उवाच—**

> अथोच्यते मया विप्र रहस्यं ज्ञानमुत्तमम्।
> जगतामुपकाराय यत् प्रोक्तं ब्रह्मणा स्वयम्॥
> चक्रं सुदर्शनं नाम यद्वशात् प्रस्फुटं फलम्।
> नृणां तन्वादिभावानां ज्ञातुं शक्नोति दैववित्॥
> जन्मतो मृत्युपर्यन्तं वर्षमासदिनोद्भवम्।
> शुभं वाप्यशुभं सर्वं तच्छृणुष्वैकमानसः।[2]

अस्य लेखनविधिः। वृत्तत्रय द्वादशारं लेख्यं प्रथमे वृत्ते लग्नादारभ्य द्वादशभावा लेख्याः। मध्यमे वृत्ते चन्द्रादारभ्य द्वादशभावः लेख्याः। सर्वोपरि तृतीये वृत्ते सूर्यादारभ्य द्वादशभावा लेख्याः।

**फलनिरूपणप्रकारः—**

अत्र द्वादशेषु भावेषु लग्नादारभ्य द्वादशवर्षा ज्ञेयास्ततश्च त्रयोदशं वर्षं पुनर्लग्नादम्य चतुर्विंशवर्षान्तं ज्ञेयमेव पञ्चविंशादारभ्य षड्त्रिंशद्वर्षान्तं पुनर्लग्नादा-

---

१. वृ० पा० पू० भा० ५।१४, १५ (मुम्बई-सं०)
२. वृ० पा० (काशी-सं०) ७४।१-३।

रम्य द्वादभावान्तं ज्ञेयमेवं दशभिःपरिवर्तने विंशोत्तरशतमायुःपर्यन्तमेतस्मात्सुदर्शनचक्रात्फलज्ञानं कर्तुं शक्यते।

एवं द्वादशमासानामपि द्वादशभावेषु पूर्वोक्तप्रकारवज्ज्ञेयम्।

एवमेव प्रतिभावात्सार्द्धदिनद्वयसङ्ख्यया त्रिंशद्दिनानां ज्ञानं भवति। इत्थमेव पञ्चघटिकापञ्चपलक्रमेण प्रतिभावाद्द्वादशभावेषु घटीपलज्ञानं विद्यते।

अनेन विंशोत्तरीदशावद्दशाक्रमः स्पष्टो भवति। यत्र वर्षमासदिनघटीपलज्ञानं सुलभतयोपलभ्यते।

होराशास्त्रोक्तफलवदत्रापि यो यो भावः स्वस्वामियुतः शुभदृष्ट उच्चग्रहयुतो वा तस्य भावस्य वृद्धिवत्तस्मिन् वर्षे दिने मासे घट्यां पले च शुभफलप्राप्तिः।

यो भावो नीचग्रहेण पापेन दृष्टो युतो वा तस्य भावस्य हानिवत्तस्मिन् वर्षादिकेषु तत्प्रकारदुःखाप्तिः, क्लेशः, कष्टं, हानिर्वा बोध्या।

अत्र दृष्टिविचारोऽपि पूर्ववदेव ज्ञेयः। यत्र शुभग्रहाणां दृष्टेराधिक्यन्तत्र शुभफलस्याप्याधिक्यम्। यत्र पापग्रहाणां भूयसी दृष्टिस्तत्र भूयानेव कष्टसमागमः। ग्रहाणां बलाबलविचारोऽपि विधेयः। शुभबले शुभमशुभबलेऽशुभं मिश्रे मिश्रं फलमिति भावः।

यस्माद्भावात्केन्द्रत्रिकोणगाः शुभाः ग्रहास्तस्यापि वृद्धिः। यस्माद्भावाः केन्द्रत्रिकोणगाः पापास्तस्य भावस्य हानिः। अत्र राहोर्विशेषेण पापत्वं बोध्यम्। अर्थाद्यत्र राहुः स्थितोऽथ वा यस्य भावस्य केन्द्रत्रिकोणगः स्यात्तस्य भावस्य विशेषेण हानिर्भवति।

ग्रहाणां वर्गविचारोऽपि चात्रावगन्तव्यः। पापवर्गीया ग्रहा अशुभा शुभवर्गीयाश्च शुभा इत्यभिप्रायः।

यस्मिन् भावे ग्रहाभावस्तत्र दृष्टिवशात्तस्य भावस्य स्वामिवशाद्वा फलं ज्ञेयम्। अर्थाद्यदि भावो भावेशो वा शुभदृष्टः शुभयुतः शुभवर्गीयः उच्चस्थो वा तर्हि शुभमशुभञ्चान्यथा।

दिनघटीदशाप्रकारेण सूक्ष्मावलोकनेन मानवस्य रसभोजनस्वप्नादिचेष्टाज्ञानमपि भवितुमर्हति ।[1]

## (ड) समीक्षा—

### (अ) पूर्वपरम्परा ।

पराशरात्पूर्वं दशाफलकथने परम्परोपलभ्यते ।

यथा हि पुस्तकेऽस्मिन् ।

'राज्यप्रदा दशाप्राहुर्विद्वांसो दैवचिन्तकाः ।'[2]

अनेनेदं सिध्यति यद्दशाफलविचारे पराशरात्पूर्वमपि विद्वांसो दैवचिन्तका आसन् । अपि च

तस्य भुक्तिं शुभामाहुर्मुनयः कालचिन्तकाः ।[3]

अत्र कालचिन्तकानां दशाफलप्रवक्तॄणां मुनीनामप्युल्लेखः । दशाफलकथने सर्वेषां प्राचीनः क आसीदिति प्रश्ने भगवतः शङ्करस्य नामोल्लेखो दृश्यते ।

'वक्ष्यामीह महेश्वरस्य कृपया दायप्रकाशं शुभम् ।'[4]

अपि च ।

'पार्वत्यै कथितं पूर्वं कालचक्रं पिनाकिना ।'[5]

अनेनेदं ज्ञायते यद्योगिनीकालचक्रादिदशानां भगवान् शङ्कर एव स्वयं प्रवक्तेति ।

अस्य ग्रन्थस्योत्तरभागे पैण्ड्यनैसर्गिकायुपामानयनप्रकारः कथितः । तासामायुपामेवाष्टकवर्गस्य चानुरूप 'पैण्ड्याष्टकवर्गीय दशानामपि क्रमः ।'[6]

---

१. काशी-संस्करणे चात्र विशेषः ।

'पापो पि स्वोच्च राशिस्थो न भवत्यशुभप्रदः ।'

बृ० पा० ७४।६ (काशी-सं०)

२. बृ० पा० पू० भा० ३६।७ (मुम्बई-सं०)

३. तत्रैव पू० भा० ३७।२ ।

४. तत्रैव, पू० भा० ३६।१ ।

५. तत्रैव, पू० भा० ४६।१ ।

६. अच्युतानन्द झा, जैमिनिसूत्रम्, द्वितीयाध्यायस्य तृतीय-चतुर्थौ पादौ द्रष्टव्यौ, चौखम्बा संस्कृत सीरिज, प्रकाशित ।

भुङ्जते च क्रमात्सर्वे त्वन्तर्दायविधौ तथा ।[1]

एवञ्चोत्तरभागेऽपि दशान्तर्दशाक्रमो दृश्यते। अनेन दशायां गर्गस्यापि ग्रहणं भवति यतो यदनुक्तमत्र तद्गर्गहोरायां द्रष्टव्यमिति निर्देशात् ।[2]
जातकपारिजातेऽपि ।

दशानुसारेण फलं वदन्ति मुनीश्वरा जातशुभाशुभं यत् ।[3]

अत्र दशाफलकथने मुनीश्वराणां परम्परासीदिति वैद्यनाथेनापि स्वीकृतं विद्यते ।

*अत्र लग्नदशाया ग्रहणमस्ति ।*[4] नारदपुराणे सनन्दनेन नारदम्प्राति ज्योतिषशास्त्रं प्रोक्तम् । पराशरात्पूर्वं सनन्दनस्यापि परम्परा दृश्यते ।

## (इ) उत्तरवर्तिषु प्रभावः—

पराशरादुत्तरवर्तिभिराचार्यैर्विद्वद्भिश्च सर्वे प्रायो दशाफलनिरूपणमार्गोऽनुसृतः। महर्षिजेमिनिना तु विविधदशानां जैमिनिसूत्रे वर्णनं विहितम्। तासां सर्वासां मूलं बृहत्पाराशरे विद्यते। चरदशा, नवांशदशा, स्थिरदशा, शूलदशा, ब्रह्मदशा, केन्द्रदशा, कारककेन्द्रदशा, मण्डूकदशा, नक्षत्रदशा, योगार्धदशा, दृग्दशा, *त्रिकोणदशा लग्नादिद्वादशराशिदशानां वर्णनमुपलभ्यते कारककेन्द्रदशाशब्देन* कारककेन्द्रराशिदशाग्रहकेन्द्रदशयोर्ग्रहणं भवति। नक्षत्रदशया च विंशोत्तर्यष्टोत्तर्योर्ग्रहाणां ज्ञेयम् ।[5]
जैमिनिनापि—

---

१. तत्रैव, पू० भा० ३५।३०५ ।
२. तत्रैव, उ० भ० ११।४० ।
३. बृ० पा० उ० १२-४२ (मुम्बई-सं०)
४. कपिलेश्वर शास्त्री, जातक-पारिजातः, (१८।१), चौखम्बा संस्कृत सीरिज, बनारस ।
५. नारदमहापुराणम् 'कल्याण', संक्षिप्त नारदविष्णुपुराणांकम्, जनवरी १८५४ गीताप्रेस, गोरखपुर ।

**'सिद्धा उडुदाये।'**[1]

इति सूत्रेण नक्षत्रदशाया एव प्रामाण्यं स्वीकृतम्। तेन

**कलौ विंशोत्तरी स्मृतेति।**

प्रमाणेन विंशोत्तर्या एव ग्रहण भवति।

वराहमिहिरेण बृहज्जातके दशान्तर्दशानामकेऽष्टमाध्याये लग्नदशाया एव ग्रहणं कृतम्।[2] स्वाभाविकग्रहदशाऽपि गृहीता।[3] शेषमत्र नोपलभ्यते।

सारावल्यां कल्याणवर्मणाऽपि वराहमिहिरस्यैवानुकरणं विहितम्। ४१, ४२, ४३, ४४ तमा अध्याया मूलदशान्तर्दशादशारिष्टभङ्गनाम्ना अङ्किताः। अत्र दशाविचारे मणित्थसत्याचार्ययोर्मतयोर्निर्देशे सत्याचार्यस्य मतं स्वीकृतम्।[4]

जातकपारिजाते श्रीवैद्यनाथमहोदयेनान्तिमौ द्वौ अध्यायौ कालचक्रदशाफलनाम्नाङ्कितौ। तत्र प्रथमे सप्तदशाध्याये कालचक्रदशाया विशदोपन्यासो विहितः। यत्र पराशरस्यैवानुकरणं पूर्णरूपेण विद्यते। अष्टादशेऽध्याये विंशोत्तरीनिर्याणगुलिकशूलदशानां निर्देशो विद्यते[5] गुलिकदशा च पराशरभिन्ना यथा हि।

**गुलिकस्थितनक्षत्राद्दशा तस्य प्रकल्पिता।**

फलमपि—

**तद्युक्तभवनांशेशौ सहकारी च मृत्युदाः।**[6]

गुलिकग्रहस्याप्रकाशकस्तस्योल्लेखः पराशरे जैमिनिसूत्रे च विद्यते तस्य दशाक्रमस्तु जातक-पारिजाते एव दृश्यते।

---

१. अच्युतानन्द झा जैमिनिसूत्रम् २।४।१८। चौखम्बा संस्कृत सीरिज बनारस।

२. सीताराम झा, बृहज्जातकम् (८ तमो अध्याः), मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

३. तत्रैव ८।६।

४ सीताराम झा, सारावली ४१।४४, अध्यायाः, मास्टर खेलाड़ीलाल एण्ड सन्स, बनारस।

५. कपिलेश्वर शास्त्री, जातकपारिजातः (१७।१८, तमौ अध्यायौ), चौखम्बा सीरिज, बनारस।

६. तत्रैव १८।३७।

जातकभरणे आचार्यढुण्ढिराजेन ३०, ३१, ३२, ३३ तमा अध्यायाः सदसद्दशाविचारणाख्यादिदशाफलमहादशाफलान्तर्दशाफलकथननाम्नाङ्किताः । अत्र च ग्रहाणापरिपाकाद्यवस्थानुसारं विचारो विहितः।[1]

फलदीपिकायां मन्त्रेश्वरेणापि १६, २०, २१, २२ तमा अध्याया दशाफलनिरूपणदशापहारफलभुक्त्यन्तरान्तरलक्षणकालचक्रदशानाम्ना निरूपिताः।[2]

अत्र च तेन स्पष्टरूपेण पराशरनामोल्लेखपूर्वकं दशानिरूपणं विहितम्। यथा हि—

भक्त्या येन नवग्रहा बहुविधैराराधितास्ते चिरं ।
सन्तुष्टाः फलबोधहेतुमदिशन्सानुग्रहं निर्णयम् ।
ख्यातां तेन पराशरेण कथितां संगृह्य होरागमात् ।
सारं भूरिपरीक्षयातिफलितां वक्ष्ये महाख्यां दशाम् ।[3]

सर्वार्थचिन्तामणौ व्यङ्कटेशेनापि १२ तमेऽध्याये ग्रहाणामुच्चारोहावरोहनीचमूलत्रिकोणशत्रुराशिस्थितिवशात्, शुभाशुभदृष्टिवशाद्भावानां स्थितिवशात्, षड्बलवशाच्च ग्रहाणां दशाफलविचारो विहितः। १४, १५, १६ तमेषु अध्यायेष्वपि दशाफलकथनं दृश्यते।[4]

दशामहिमाप्यत्र तेन कथितः। यथाहि—

'दशानुरोधेन फलं वदन्ति मुनीश्वरा जातशुभाशुभं तत् ।
सारं समुद्धृत्य तदेव वक्ष्ये भेदं यथा विस्तरतो दशानाम् ॥'[5]

---

१. पं० वनमाली, जातकाभरणम्, (३०, ३१, ३२, ३३ तम अध्यायाः) किशनलाल, द्वारिका प्रसाद, बम्बईभूषण प्रेस, मथुरा।
२. मन्त्रेश्वरः, फलदीपिका (१६, २०, २१, २२ तमा अध्यायाः), के० एस० कृष्णमूर्ति, ६५ थर्डक्रास रोड, बासावांगुदी, बंगलौर।
३. तत्रैव, १६।१ ।
४. महीधर शर्मा, सर्वार्थचिन्तामणिः (१३, १४, १५, १६ तमा अध्यायाः) गङ्गाविष्णु श्रीकृष्णदास, श्रीवेंकटेश्वर स्टीम प्रेस बम्बई।
५. तत्रैव १३।१ ।

आचार्यपुञ्जराजेन शम्भुहोरा प्रकाशे १० तमोऽध्यायो दशान्तर्दशाफलनाम्नाङ्कितः। यत्र व्यङ्कटेशस्य छाया वर्त्तते । अत्राष्टकवर्गीयदशान्तर्दशाक्रमेण ग्रहाणां फलमपि लिखितम् ।[1]

कालिदासरचिते उत्तरकालामृतेऽपि षष्ठो दशाफलनाम्ना खण्डो दृश्यते।[2] अत्र च ग्रहाणामुच्चदीप्तावस्थाद्यनुसारं फलमङ्कितम् । विंशोत्तरीदशाक्रमोऽपि विद्यते ।[3]

भावार्थरत्नाकरे श्री रामानुजाचार्येण महादशाफलनाम्नैकादशस्तरङ्गोऽङ्कितः । अत्र च भावस्वामिग्रहानुसारं दशान्तर्दशानुरूपं विंशोत्तरीदशाफलमेव सङ्क्षेपेण चमत्कारपूर्ण लिखितम् ।[4]

मानसागर्यामपि पञ्चमोऽध्यायो दशानिरूपणात्मको विद्यते । अत्र च विंशोत्तरीदशाष्टोत्तरीदशासन्ध्यादशापाचकदशायोगिनीदशानां वर्णनमुपलभ्यते । दशानामन्तर्दशोपदशानामानयनप्रकारपुरःसरं फलं लिखितम् । अत्र च दशावाहनस्य विचारः फलञ्चाङ्कितं दृश्यते ।[5]

## (उ) वैशिष्ट्यम्—

अत्र ४२ संख्याका भेदा दशाया बृहत्पाराशरे एव दृश्यन्ते येषां सर्वेषां भेदानां पराशरात्परवर्तिषु ग्रन्थेषु चर्चा नोपलभ्यते । केषाञ्चिद्नानामुल्लेखो जैमिनिसूत्रे विद्यते इति पूर्वं लिखितमस्ति । फलितभागे दशाया एव महत्त्वमिति विज्ञाय सर्वाधिक्यमस्मिन् ग्रन्थे दशामाश्रित्यैव फलं लिखितम् । १७ सङ्ख्याका अध्यायाः केवलं दशाफलमाश्रित्य विद्यन्ते । विंशोत्तरीदशाया अन्तर्दशाप्रत्यन्तर-

---

१. महीधर शर्मा, 'शम्भुहोरा-प्रकाशः' (१० अध्यायः) गङ्गा विष्णु श्रीकृष्णदास, लक्ष्मीवेंकटेश्वर प्रेस, कल्याण, बम्बई ।

२. वी० सुब्रह्मण्यम् शास्त्री, उत्तरकालामृतम् (६ खण्डः), ५० पर्कंताम रोड, बासावांगुडी, बगलोर ।

३. तत्रैव, ६।३ ।

४. बी० वी० रमण, भावार्थरत्नाकरः, (११ तरंगः), रमण पब्लिकेशन्स, बंगलोर ।

५. अनूप शर्मा, मानसागरी, (५ अध्यायः), भार्गव पुस्तकालय, काशी ।

दशासूक्ष्मदशाभुक्तिदशाप्राणदशेति पञ्चभेदेन फलज्ञानार्थं सूक्ष्मत्वं प्रदर्शितम्। अतिविस्तरेण फलकथनं विद्यते। दशाया कुफलमाश्रित्य पृथक् पृथक् सर्वासां ग्रहदशानां कुफलदूरीकरणार्थं विविधशान्त्युपाया अपि प्रदर्शिताः, येषु गोदानमहिषीदानछागदानमृत्युञ्जयजपान्नदानरजतसुवर्णप्रतिमादानविष्णुसहस्रनामजपरुद्रजपब्राह्मणपूजाशिवसहस्रनामजपसुवर्णदाननागदानब्राह्मणभोजनदुर्गालक्ष्मीजपसूर्यप्रणामदुर्गापाठसूर्यपूजातिलहोमगुडघृतदध्नाक्ततण्डुलदानशान्तिहोमवस्त्रदानस्वर्णधेनुदानादिका उपायाः प्रदर्शिताः। अयमेवात्र महान् विशेषो यस्यान्यग्रन्थेषु चर्चा नोपलभ्यते।

अत एवास्य दशाफलज्ञानस्यास्मिन् ग्रन्थे महत्त्व दर्शयता यस्मै कस्मै एतज्ज्ञानस्य दातुं निषेध अप्युक्तः।

'इति ते कथिता विप्र दशाभेदा अनेकशः।
यस्मै कस्मै न दातव्यं ज्ञानमेतत्सुदुर्लभम्।'[1]

विलक्षणेयं पद्धतिर्यस्य प्रत्यक्षश्चमत्कारस्तु पाश्चात्यैरनुभूयते परञ्च वैज्ञानिकरहस्यमत्र किमिति ज्ञातुं न शक्यते यूरोपदेशीयज्योतिर्विदुषां शिरोमणिना राफेलमहोदयेन 'दी सायंस आफ फार नाल्वेज' इति पुस्तकेऽङ्कितम्। येयं दशापद्धतिः फलज्ञानर्थं भारतीयैराचार्यै प्रोक्ता सा त्वनुपमा। अस्या मूलं कैलडीयनेषु ग्रेशियनेषु चाथ वा योरपीयसाहित्ये नोपलभ्यते।[2]

विंशोत्तरी दशाविमर्शे ज्ञायते यत्पराशरसमयेऽपि कृत्तिकानक्षत्रमारभ्यैव नक्षत्रानां गणना क्रियते स्म। अथर्ववेदेऽन्यवैदिकग्रन्थेषु च कृत्तिकामारभ्यैवगणना दृश्यते इति प्रथमाध्याये मयाङ्कितम्। अनेन पराशरीयाया अस्या दशाया अतीव प्राचीनत्वमित्यप्यवगम्यते।

---

१. बृ० पा० पू० भा० ३५।३१२ (मुम्बई-स०)

२. वी० जी० रेले, डायरेक्शनल एस्ट्रोलोजी आफ हिन्दूज एज प्रोपोण्डेड इन विंशोत्तरीदशा (पृ० ४), डी० बी० तारापोरेवाला संस एण्ड कम्पनी, हारनबाई रोड, फोर्ट, बम्बई।

विंशोत्तरीदशायां सूर्यस्य ६ चन्द्रमा १० इत्यादि या वर्षसङ्ख्या प्रदत्त तस्य किं रहस्यमेतच्चाद्यावधि न केनापि प्रकटीकृतम्। एकराशौ ३० अंशा भवन्ति द्वादशराशिषु च ३६० अंशा दृश्यन्ते। अस्यां दशायां १२० वर्षाणां योगः। अस्य योगस्य त्रिगुणिते ३६० संख्या भवति। अनेन जन्मत्रये अस्या दशाया वारत्रयेण क्रमो दृश्यते। इदमेव रहस्यमस्य १२० वर्षाणामिति प्रतीयते। परञ्च प्रत्येक ग्रहस्य वर्षाणां सङ्ख्यायां किं रहस्यमिति तु न ज्ञातुं शक्यते।

## दशमोऽध्यायः

# अब्दचर्यादिवर्णनम्

## (क) विषयावतरणम्—

अब्दचर्यायाश्चर्चा केवलं मुम्बईसंस्करणे विद्यते । काशीसंस्करणेऽस्य नोल्लेखो दृश्यते । अत्र मुम्बईसंस्करणस्योत्तरभागेऽध्यायचतुष्टयमब्दचर्याविषये उपलभ्यते । यत्र चतुर्दशपञ्चदशषोडशसप्तदशसङ्ख्याका अध्यायाः सन्ति । चतुर्दशाध्यायस्याब्दचर्यावर्णनं नाम दृश्यते यत्राब्दचर्यास्वरूपस्य विशदं वर्णनं विहितम् । अत्र मुहूर्त्तलक्षणलग्नविचारत्रिंशन्नक्षत्रसङ्ज्ञाद्वात्रिंशद्विनाडीमुहूर्त्तसञ्ज्ञाकलांशनित्योदयक्रमदशवर्गानयनराहुकेतुगतिपित्राद्यरिष्टादिकस्य च चर्चा विस्तरेण दृश्यते ।

अत्रैव फलप्रसङ्गे स्त्रीजातकस्य वन्ध्यामृतावत्सादियोगानां परमहंसादि प्रव्रज्यायोगानाञ्चापि वर्णनमुपलभ्यते ।

षष्ठ्यंशनवांशफलस्य रश्मिवशेनाब्दहरकमोल्लेखपूर्वकं नवांशायुः शतायुर्दायादिकस्यानयनकारस्यापि चर्चा विद्यते । लक्ष्मीयोगादयः शुभयोगा अपि दरीदृश्यन्ते ।

पञ्चदशाध्यायोऽब्दचर्याफलवर्णननाम्नाङ्कितः । यत्र रश्मिसङ्ख्याफलं सूर्यादिग्रहाणां भावफलं दृष्टिफलमिष्टकष्टवशेन फलकथनं दशाविचारश्च दृश्यते ।

षोडशोऽध्यायो मासचर्या नाम्ना विद्यते । अत्र भावानां सन्ध्यादिविचारेण भावानां करणाङ्कसङ्ख्याविचारेण च फलकथनं दृश्यते ।

सप्तदशाध्यायो दिनचर्यादिफलवर्णनाध्यायनाम्ना दृश्यते ।

अत्र च केवलं स्थानवशाद्ग्रहफलानि निरूपितानि ।

## (अ) अब्दचर्यानिरूपणम्—[1]

अब्दचर्यामासचर्यादिनचर्यानामकप्रसङ्गत्रयेण फलकथने वैशिष्ट्यमाह। अस्य वृहत्पाराशरहोराशास्त्रस्योत्तरार्द्धे केचिदध्याया अब्दचर्यामासचर्या-दिनचर्यानामत्रयेणाङ्किताः सन्ति । एषु फलकथनार्थमुपयोगिवस्तुजातं निहितं विद्यते ।

## (इ) मुहूर्त्तलग्ननक्षत्रघटीयोगादिग्रहणक्रमः—

### मुहूर्त्त लक्षणम्—

घटिकद्वयस्यैकं मुहूर्त्तं कथ्यते । ते षष्टिघटिकात्मकस्याहोरात्रस्य तत्रा-दिनस्य पञ्चदशमुहूर्त्ता रात्रेश्च पञ्चदश मुहूर्त्ता उपलभ्यन्ते । अत्र च वर्षस्योत्त-रायणदक्षिणायनक्रमेण दिनमानस्य ह्रासवृद्धिवशान्मुहूर्त्तस्यापि घटिकाद्वये विघटिकाद्वयस्य ( विघटिकाशब्देनात्र पलस्य ग्रहणम् ) वृद्धिह्रासौ भवितु-मर्हतः ।

लग्नलक्षणम्—

यस्मिन् राशौ सूर्यस्तिष्ठति सूर्योदयकाले तस्य राशेरेव लग्नं भवति । पर-स्तात्तदेवलग्नमारभ्याहोरात्रे द्वादशलग्नानि भवन्ति ।

अहोरात्रस्य त्रिंशन्मुहूर्त्तानां नामानि निरूपयति—

दिनस्य पञ्चदशमुहूर्त्ताः सर्वजित्संज्ञका उक्ताः । एतेषां निम्नाङ्कितानि नक्षत्रनाम्नाख्यातानि नामानि क्रमात्सन्ति ।

आर्द्रा १, आश्लेषा २, अनुराधा ३, मघा ४, धनिष्ठा ५, उत्तराषाढा ६, सर्वजित् (अभिजित्) ७, रोहिणी ८, विशाखा ९, ज्येष्ठा १०, मूलम् ११, शतता-रका १२, भरणी १३, पूर्वाफाल्गुनी १४, विश्वजित् १५ ।

रात्रेश्च ये पञ्चदशमुहूर्त्ता सन्ति ते विश्वजित्सञ्ज्ञका उक्ताः तेषामपि निम्नाङ्कितनक्षत्रनाम्नाख्यातानि नामानि सन्ति । उत्तराभाद्रपदा १, रेवती २,

---

१. वृ० पा० उ० भा० १४ अध्यायः (मुम्बई-सं०)

अभिजित् ३, उत्तरा ४, कृत्तिका ५, रोहिणी ६. मूलम् ७, रोहिणी ८, मृगशीर्षम् ९, हस्तकम् १०, पुष्यः ११, श्रवणः १२, हस्तम् १३, चित्रा १४, स्वाती १५, इति ज्ञेयम्।

विघटिकाद्वयमुहूर्त्तास्तु द्वात्रिंशत्सङ्ख्यका उक्तास्तेषामपि क्रमान्निमाङ्कित-प्रकारेणनामानि ज्ञेयानि यथा हि भरणी १, हस्तः २, विश्वजित् (पूर्वाषाढा) ३, रोहिणी ४, दस्रः (अश्विनी) ५, मृगशीर्षम् ६, शर्वः (आर्द्रा) ८, पुष्यः ८, रुद्रभम् (आर्द्रा) ९, उत्तरा १०, विश्वजित् (पूर्वाषाढा) ११, श्रोणो (श्रवणम्) १२, चित्रा १३, पुष्य १४, वायुभम् (स्वाती) १५, अभिजित् १६, वसुभम् (धनिष्ठा) १७, पौष्णम् (रेवती) १८, कृत्तिका १९, पुनर्वसु २०, पूर्वा प्रोष्ठपद् (पूर्वाभाद्रपदा) २१, उत्तरा प्रोष्ठपद् (उत्तराभाद्रपदा) २२, शततारका २३, विश्वभम् (स्वाती) २४, ज्येष्ठा २५, सूर्यम् (हस्तम्) २६, मूलम् २७, भाग्यः (पूर्वाफाल्गुनी) २८, ज्येष्ठा २९, विशाखा ३०, शततारका ३२ इति ज्ञेयम्। एतेषां सर्वेषां विघटिका-मुहूर्त्तानां सर्वजित्सञ्ज्ञा ज्ञेया।

सम्प्रति षष्ठी नाडीसञ्ज्ञकानां मुहूर्त्तानां निरूपणं करोति। ये पूर्वमहोरा-त्रस्य त्रिंशन्मुहूर्त्ता घटीद्वयात्मका उक्तास्ते एव घटिकैकात्मकाः कलांशनाम्ना षष्टि-सङ्ख्याका मुहूर्त्ताः प्रोक्ताः सन्ति।

### राशिचक्रकलांशमुहूर्त्तलक्षणम्—

सूर्योदयादारम्भ षष्टिघटिकासु पञ्चघटिकात्मका द्वादश मुहूर्त्ताः क्रमात्मेषवृषमिथुनकर्कसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीनाख्या राशिनाम्ना प्रोच्यन्ते।

### (उ) नित्योदयलग्नज्ञानप्रकारः—[1]

अत्र नित्योदयलग्नक्रमे मेषादयो द्वादशराशय एव ज्ञेयाः। तत्र च प्रकार-त्रयं निर्दिष्टम्। सिंहराशिमारभ्य कर्कान्तम्। (सिंहराश्यारम्भनक्षत्रं मघा तदार-म्याश्लेषान्तम्) इत्येकः प्रकारः। धनूराश्यारम्य वृश्चिकान्तम् (धनूराश्यारम्भ

---

१. बृ० पा० उ० भा० १४।१३-४० (मुम्बई-सं०)।

नक्षत्रमूलादारम्भ ज्येष्ठान्तम्) इति द्वितीयः प्रकारः) मेषराशिमारम्य मीनान्तम् (मेषराश्यारम्भनक्षत्रमश्विनीमारम्य रेवतीपर्यन्तम्) इति तृतीयः प्रकारः। एवमत्र ज्ञेयं यस्मिन् प्रकारत्रये जन्मलग्नं भवेत्तस्य प्रकारस्य लग्नमारम्य क्रमादेते चन्द्रः १, बुधः २, शुक्रः ३, धूमः ४, अर्कः ५, परिवेषः ६, भौमः ७, कार्मुकः ८, गुरुः ९, पातः १०, शनिः ११, केतुः १२, एते ग्रहा द्वादशलग्नेषु स्थाप्याः। यथा हि—

कस्यचिजन्मवृश्चिकलग्ने सम्भूतम्। अत्र वृश्चिकलग्नं प्रथमे सिंहराश्यात्मके प्रकारे दृश्यते। अतः सिंहमारम्य कर्कान्तं द्वादश ग्रहाः स्थाप्याः। तथा हि चन्द्रः सिंहे, बुधः कन्यायां, शुक्रस्तुलायां, धूमो वृश्चिके अर्को धनुषि, परिवेषो मकरे, भौमः कुम्भे, कार्मुको मीने, गुरुर्मेषे, पातो वृषे, शनिर्मिथुने, केतुः कर्कटे इति ज्ञेयम्। अस्य नाम चात्र चक्रलिप्तांशकमिति ज्ञेयम्।

## अथ च नक्षत्रग्रहणक्रमाह—

अत्र च यदि पूर्वोक्ता द्वादशग्रहा नक्षत्रेषु स्थाप्या भवेयुस्तदा इमे ग्रहा व्युत्क्रमेण केतुमारम्य चन्द्रान्तं (केतु १, शनिः २, पातः ३, गुरु ४, इत्यादि) मेषराशिमारम्यार्थादश्विनीनक्षत्रमारम्योत्तराफाल्गुनीपर्यन्तं चित्रामारम्य पूर्वाभाद्रपदान्तमिति स्थाप्याः। एवमेवाग्रेऽप्यवधार्यम्। अस्य च नामात्र तारकांशकमिति ज्ञेयम्।

## अथ च तृतीयस्य घटिकांशकस्य प्रकारमाह—

चक्रलिप्तांशकं राशिविषये तारकांशकञ्च नक्षत्रविषये ज्ञेयमासीत्। अथ चेदं घटिकांशकन्तु घटिकाविषये ग्राह्यम्। अस्मिन् घटिकांशकेऽर्कमारम्य धूमान्ता द्वादश ग्रहाः स्थाप्याः। इदञ्च ग्रहस्थापन षष्टिघटिकासु सप्तविंशतिनक्षत्रवत्स्थाप्यमिति ज्ञायते।

अथ मेषादिद्वादशनित्योदयानां प्रत्यहं भोगकालमानं घटिकात्मक निरूप्यते।

मेषमीनयोः घटिकाः ३०, विघटिकाः २०, वृषकुम्भयोः घटिकाः ४, पलानि ०, मिथुनमकरयोर्घटिकाः ४, पलानि ४०, कर्कधनुषोर्घटिकाः ५, पलानि २०,

सिंहवृश्चिकयोर्घटिकाः ६, पलानि ०, कन्यातुलयोर्घटिकाः ६, पलानि ४०, क्रमात्कालमानं ज्ञेयम्।

अत्र प्रकारान्तरमाह । सूर्योदयकाललग्नादारम्य निम्नाङ्कितप्रकारेण द्वादशलग्नेषु भागत्रयं विधाय लग्नचतुष्टयेषु क्रमादेकद्वित्रिचतुर्घटिका क्रमेण लग्नमानं बोध्यम् । यथा हि ।

भागत्रयम् मेषादारम्य कर्कान्तम् । सिंहादारम्य वृश्चिकान्तम् । धनुष आरम्य मीनान्तम्। मानज्ञानप्रकारः। मेषे १ घटिके, वृषे २ घटिके मिथुने ३ घटिकाः, कर्कटे ४ घटिका । शेषेऽपि भागद्वये चैवं बोध्यम् ।

## (ऋ) दशवर्गफलकथनम्—

अत्र लग्ने पूर्ववद्दशवर्गानयन कर्तव्यम् । तत्फलकथनञ्च निम्नप्रकारेण ज्ञेयम् । पूर्वोक्तलग्नमानेषु दशवर्गस्वामिनस्तत्तल्लग्नमानेषु विभाज्याः ।

## अत्र चन्द्रराशिनवांशानयनफलमाह—

अत्र चन्द्रराशिनवांशका अपि विभाजनीयाः ।

एतेषां प्रयोजनमाह—

एतन्मतोक्तानां दशवर्गाणां चन्द्रनवांशनाञ्च प्रयोजनं नष्टद्रव्यविनिश्चये प्रश्नविचारे च ज्ञेयम् ।

पुनश्च दशवर्गादिषु फलान्याह—

उपरोक्तदशवर्गादिषु फलानि निरूपयन् पञ्चपञ्चादशदुत्तरगुणान् श्रीयोगान्निरूपयति ।

एतेषां योगानां नामानुरूपं फलं ज्ञेयम्—

एषामानयनप्रकारं ज्ञानप्रकारञ्च राशीनां विषमसमभेदं चरस्थिरद्विस्वभावानुरूपञ्च दर्शयति ।

एते योगा विषमराशिषु क्रमात्समराशिषु च व्युत्क्रमेण (वामत इति) ज्ञेयाः । चरराशिष्वपि क्रमेणैव बोध्याः । स्थिरराशिषु च व्युत्क्रमेणेति ज्ञेयम् । द्विस्वभावराशिषु तु क्रमेण व्युत्क्रमेणोभयं बोध्याः । तत्रायं क्रमो

राश्यारम्भे त्रिंशद्गुणा ग्रारम्भतः (क्रमेण) राश्यन्ते विलोमतः (व्युत्क्रमेण) एवमग्रेऽपि वोध्यम् ।

## योगानाह–

श्रीमान् (१), रिक्तः (२), मूर्खः (३), कुशलः (४), वञ्चनः (५), पटुः (६), स्त्रीसक्तः (७), वेदवित् (८), धीरः (९), मन्दाग्निः (१०), तीव्ररोषणः (ग्रतिकोपी) (११), मूलरोगी (१२), पिशुनः (१३), सदाऽटनपरः (१४), शुचिः (१५), सेवाकरः (१६), सुभाषी (१७), धनवान् (१८), लोभसंयुतः (१९), विद्यया प्रख्यातः (२०), भीरुः (२१), बुद्ध्या श्रीमान, सुशीलकः (२३), परदाररतः (२४), श्रीमान् (२५), सुशीलः (२६), वलवान् (२७), गुणी (२८), ग्रध्वन्यः (मार्गस्थः) (२९), निगमव्यग्रः (वेदाभ्यासरतः) (३०), पातकी(३१), तपोयुक्तः(३२), परदाररतः (३३), वेश्यासक्तः (३४), ग्रसत्फलवासनः (मिथ्या फलाकांक्षी) (३५), सिंहासनस्थः (३६), रिक्तः (निरुद्योगी) (३७), जटिलः (जटाधारी) (३८), कुलपांसनः (३९), योगी (४०), वृद्धः (४१), संन्यासी (४२), सेनानी (४३), बुद्धिमान् (४४), सुखी (४५), कुष्ठी (४६), भूतकरः (४७), श्रीमान् (४८), एकपुत्रसमन्वितः (४९), शास्त्रज्ञः (५०), दासकृत्यः (५१), चण्डरोपसमन्वितः (५२), स्त्रीसक्तः (५३), पददारोक्तः (५४), भृत्यः (५५), पटुः (५६), ग्ररोगवान् (५७), कुरूपः (५८), कुशलः (५९), जितारिः (६०), पुत्रवर्जितः (६१), शूरः (६२), वीरः (६३), चण्डः (६४) कुशलः (६५), कुक्षिरोगवान् (६६), ग्रामणी (६७), विटपः (६८), धूर्त्तः (६९), सतीपतिः (७०), ग्ररिन्दमः (७१), वन्ध्यापतिः (७२), सुरापी (७३), रिक्तसाध्यपतिः (७४), सुखी (७५), विजयी (७६), युद्धभीरुः (७७), चोरः (७८), ग्रमर्पी (७९), धनार्जकः (८०), धनार्जनायसततमकृत्यशतकारकः (८१), वृपलीपतिः (८२), इन्द्रः (८३), सेनानीः (८४), सत्यवाक् (८५), शुचिः (८६), शिरोरोगी (८७), कुष्ठी (८८), मेही (मेहरोगी) (८९), पिशुनः (९०), सुखी (९१), जलवद्रोगसहितः (९२), कृतज्ञः (९३), निर्घृणः (९४), घृणी (९५), विवादशीलः (९६), मुमुक्षः (९७), क्रोधनः (९८), कामुकः (९९), पटुः (१००), चलचित्तः (१०१), धनी (१०२), वाग्मी (१०३), विद्यार्जनपरः (१०४), सुखी (१०५), ग्रपुत्रः (१०६), कृषिकृद्वीरः (१०७), परदाररतः (१०८), शुचिः

(१०९), विद्याविहिनः (११०), मूर्खः (१११), बुद्धिमान् (११२), शास्त्रपारगः (११३), सदाभीरुः (११४), जडः (११५), वाग्मी (११६), कृत्येषु कुशलः (११७), सुखी (११८), नीतिज्ञः (११९), लेखकः (१२०), नीचजातिकृत्यरतः (१२१), पटुः (१२२), प्रेष्यः (१२३), गोमयविक्रेता (१२४), वदान्यः (१२५), धनवञ्चकः (१२६), सेनानीः (१२७), क्षेत्रवान् (१२८), वीरः (१२९), लेखवृत्त्या च जीवकः (१३०), मूर्खः (१३१), जितेन्द्रियः (१३२), वाग्मी (१३३), सदाकृत्यपरः (१३४), सुखी (१३५), अन्नदाता (१३६), मिष्टाशी (१३७), शिवभक्तः (१३८), जितेन्द्रियः (१३९), कुब्जः (१४०), वक्रशरीरः (१४१), जात्यन्धः (१४२), वधिरः (१४३), शठः (१४४), अमर्षी (१४५), नर्तकः (१४६), क्रुद्धः (१४७), दुर्जनः (१४८), वेदपारगः (१४९), वक्ता (१५०), गायकः (१५१), श्रीमान् (१५२), सर्वदा जनार्जकः (१५३), तालज्ञः (१५४), विद्यया युक्तः (१५५)।

### (लृ) राहुकेतुगतिज्ञानप्रयोजनम्—[1]

राहुः सदा मेषराशितो व्युत्क्रमेण (मेषमीनकुम्भादिचारत इत्यर्थः) गच्छति केतुश्च क्रमेण (मेषवृषमिथुनादिविति भावः) चरति।

**अस्यप्रयोजनमाह—**

ऋक्षस्य (नक्षत्रस्य राशेर्वा) राहुकेत्वोः प्रवेशसन्ध्यन्तरे यदि कश्चित्प्रष्टा प्रश्नं कुरुते। तदा तस्य निश्चयेन मरणं भवतीति ज्ञेयम्। एवञ्च राहुकेतुसंयुक्ते राशेश्च सन्धिकाले यदि कश्चित्प्रश्नं विधत्ते तस्यापि मरणं बोधव्यम्। इत्थमेव शेषत्रयाणां धूमकार्मुकपरिवेषाणामप्रकाशग्रहाणामुदयराशौ यदि कश्चित्प्रश्नं विधत्ते स व्याधिपीडितो भवति। यदि तस्य मरणं न स्यात्तदा स दुर्बलो बुद्धिहीनश्च भवतीति भावः।

### (ख) अब्दचर्यानिरूपणे विविधयोगाः[2]—

#### (१) सामान्ययोगाः।

---

१. बृ० पा० उ० भा० १४।४२,४३।
२. तत्रैव उ० भा० १४।४४-७५।

## (अ) पित्राद्यरिष्टयोगकथनम्—

षोडशांशराशितो नक्षत्रमतेन चादिष्टे प्राप्ते सति, पित्रादीनां पुत्रस्यापि षोडशांशनक्षत्रांशशुभाशुभानुरूपं शुभाशुभं चिन्तनीयम्। तत्प्रकारमाह यदि भावाः पापग्रहैः शत्रुग्रहैर्वा युता दृष्टा वा भवेयुस्तदा शुभं वाच्यम्। शुभग्रहैः मित्रग्रहैर्वा दृष्टा युताश्च भावाः शुभफलप्रदा इति शेषः।

अत्रांशानां सङ्ख्या निम्नप्रकारेण ज्ञेया।

१, १, ३, ४, ५, ६, ७, ८, ६, १०, १, १२, १, १६, २१, १४, १६, २७, १२, १६, २४, ५, ८, ८, ५, ५, ३३, ३२, २४, ७, २०, ३०, ४०, ७६, ६७, ६०, १००, २१, २४, ३२, २४, १०।

एवमेषां योगो ६०० नवशतमित्युक्तस्ति (अत्र च सङ्ख्यया ८७३ इति भवति मूलञ्चमृग्यम्) एते ६०० योगा अनुलोमविलोमक्रमेण ज्ञेया। तत्रानुक्रमोक्तांशसङ्ख्या लक्ष्मीयोगफलप्रदा सौम्यग्रहयोगे कथिता सैव पापयोगे च लक्ष्मीयोगनाशकरेति बोध्या। इयं संख्या पूर्वोक्तचक्रत्रये राशिचक्रे नक्षत्रचक्रे दिवसचक्रे च विलोमतो ज्ञेया।

अथ च सुगतिदुर्गतिप्रदानामशांनां सङ्ख्यामाह।

यदि च भावा शुभै मित्रैर्वा ग्रहैर्दृष्टा युता वा स्युस्तदा चैमे योगा राशेः पूर्वार्द्धे ज्ञेयाः (क्रमेण) एते च सुगतिप्रदा बोध्याः। परार्द्धे च विलोमक्रमेण विज्ञाता केवलं दुर्गतिप्रदा भवन्ति। योगानाह २, ३, ५, ६, ७, ८, ६, १०, ७, ३०, १०, २०, ६०, १२, २१, २४, २१, २७, १२, ३, २०, २६, १००, २०, ३०, ४०, १०, १३, १००, ६०, १००, २४, ४, ४० एत सङ्ख्या का योगाः प्रोक्ताः। राशेः पूर्वार्द्धे परार्द्धे चेति।

### अथ च राशिचक्रनक्षत्रचक्रत्रययमाश्रित्य योगानाह।

राशिचक्रनक्षत्रचक्रदिवसचक्रत्रयस्य प्रथमा मध्यमा चान्त्या सङ्ख्या ग्राह्या। यदि २७, ७०, १००, ६०, २००, ६, ५०, २०, ६६, ८०, ६०, २०, १००, ६०, २००, सङ्ख्या भवेत्तदा कुब्जो भवति।

४, ८, १०, २, ७, ३ एतत्सङ्ख्याकेषु षष्ट्यंशेषु सूर्ये सति चोत्पन्ना कन्या वन्ध्या ज्ञेया ।

३, ६, ६, ३, ०, १२ १४, २४, ३२, ३३ एतेऽङ्का क्रमात् ६, १०, २७, २४, १२, १२, ४६, ३, ५, ५०, एभिरङ्कैर्गुणीकार्या ।

लब्धाङ्कसङ्ख्याके प्रषष्ठ्यंशे जाता कन्या वन्ध्या पूजिता भवतीति टीकाकारः । मूलपाठे तु वन्ध्येति लिखितमुपलभ्यते मूलपाठ एवोचित ।[1]

## मृतसुतायोगमाह—

३, ४, ७, ६, १३, १४, २०, २६, २४, २, ५०, १००, एतेऽङ्का पूर्वाङ्कयुता कार्तास्तत्र सूर्ये सति जाता कन्या मृतसुता वोध्या ।

## प्रकारान्तरमाह—

षोडशांशे सूर्ये सति पुत्राणा मध्ये केचिज्जाता अपि पुत्रा मृता वोध्या ।

## सन्यसियोगमाह—

१२, २४, ३३, ७२ ६ १६०, १०००, १८००, एतत्सङ्ख्याके दशपञ्चदशांशके जातो मनुष्य सन्यासी ज्ञेय ।

## (उ) परमहंसादयो योगाः[3]—

यस्मिन् राशौ गुरूदय शुक्रोदयो वा भवेत्तस्मिन् राशौ जातो नर परम हंसो भवति । तौ गुरुशुक्रौ यदि धूमादिकाप्रकाशकग्रहयुतौ शत्रुराशिगतौ च स्याताअन्तदा भ्रष्ट परमहंसको भवति (अत्र भ्रष्टेन परमहंसधर्माद्भ्रष्टो नाम्ना च केवल परमहंसक इति भाव ) । अत्र गुरुशुक्रवद्वुद्धश्चेत्तदोत्पन्नो नरस्त्रिदण्डी, सन्यासी, बहूदको वा भवति । सूर्यश्चेत्तदा शिवभक्त प्रोक्त । भौमश्चेत्तदा वस्त्रहीनो श्रमण शोलो ज्ञेय । शनो राहु केतुर्वा स्यात्तदा बौद्धो वाग्मी च भवति (अत्र बौद्ध शब्देन बौद्धधर्मावलम्बी सौगत इति टीकाकार') ।[2]

---

१. वृ० पा०, उ० भा० १४।७८ ।

२ तत्रैव, उ० भा० १४।८२ ८६ ।

३ वृ० पा० ४।१२ उ० भा० १४।८४ ।

धूमग्रहश्चेत्तदा कापालिकः प्रोक्तः। चापः कालः परिवेषो वा स्यात्तदा गूढपापः पाखण्डी कुलमार्गगतश्च जायते।

## योगान्तराण्याह—

षष्ठ्यंशे, नक्षत्रमन्थ्यंशे, आश्लेषांशे, रेवत्यंशे, ज्येष्ठांशे, त्रिशांशे, कालहोरांशे, नवांशे, राश्यन्तांशे, नक्षत्रसन्धौ, मकरकर्कवृश्चिकसिंहमेषमीनतुलाख्यानां राशीनां प्रथमांशे वा जातो नरः संन्यासी भवति।

६, ५, २, २४, ३२ एष्वंशेषु द्रेष्काणार्धहोरायां २१, २० अंशेषु च जातो नरः संन्यासी प्रोक्तः।

अथवा सर्वत्र पूर्वोक्तेषु चांशेषु चैकयुतेषु जातो नरः संन्यासी ज्ञेयः।

## सप्तमभावे ग्रहानुरूपं स्त्रीलक्षणमाह—

सप्तमभावे पापग्रहेणाप्रकाशकग्रहेण वा युते सति चाशुभं भवति। तच्च क्रमेणैवं बोध्यम्। सप्तमभावे सूर्ये सति वन्ध्या, क्षीणचन्द्रे सति व्यभिचारिणी, भौमे सति स्त्रीनाशः, शनौ सति दुर्भगा, राहौ सति पररता, स्त्री भवतीति पापग्रहाणां फलं ज्ञेयम्।

सप्तमे भावे धूमे कार्मुके वा सति विवाहाभावः, परिवेषे सति दुःशीला, केतौ सति वन्ध्याऽसती च। पाते सति गर्भस्रावयुता नारी भवती चाप्रकाशकग्रहाणां फलमिति।

## सप्तमे शुभग्रहाणां फलम्—

सप्तमे पूर्णचन्द्रे सति सुशीला स्त्रीप्रसूता च ज्ञेया।

बुधे चापुत्रा, गुरौ सुपुत्रिणी, शुक्रे सौभाग्यशालिनी श्रीमती पुत्रिणी भार्या भवतीति शुभग्रहाणां फलम्।

## अथ दशमभावस्य शुभाशुभफलमाह—

सप्तमभाववद्दशमभावस्यापि शुभाशुभग्रहयुतिवशाच्छुभाशुभं फल बोध्यम्। शुभग्रहयोगे शुभकर्मरतोऽशुभग्रहयोगेऽशुभकर्मरतो भवति। मिश्रग्रहयोगे च मिश्रकर्मरत इति ज्ञेयम्। ५०, ३३, २५, १६, ७, ८, ८, ६, ७ एष्वंशेषु

घैकावसानकंस्तथा एकसङ्ख्यया च युतेषु पापादिकयोगेन पापपुण्यमिश्रं कर्मफलं ज्ञेयम् । अर्थात्पापयोगे पापकर्म पुण्ययोगे पुण्यकर्म मिश्रे मिश्रमिति भावः ।

**पापकर्मलक्षणमाह—**

वर्णाश्रमाचारहीनत्वं परदारलम्पटत्वं परक्षेत्रापहरणं परसर्वस्वविनाशनं परोत्कर्षनाशनं विषाग्निदानं ब्राह्मणानां धनापहरणञ्चेति पातककर्माणि ज्ञेयानि ।

**ग्रहानुसारं कर्मफलमाह—**

सूर्ये सति मारककर्मकृत्, चन्द्रे सति प्रख्यातकर्मकृत् (ज्ञानादिकं पुण्यकर्मेति भावः) भौमे सति दयारतस्तेजस्वो; विजितेन्द्रिय, आचारहीनश्च नरो भवतीति ज्ञेयम् ।

गुरौ सति चेष्टापूर्तकर्मकृत् (यज्ञवापीकूपारामादिकृत्) शुक्रे सति दाता, शनौ च कृतदारशीलश्च भवतीति बोध्यम् ।

**(ऋ) आजीविकाज्ञानयोगाः[1] —**

मेषादिराश्यानुसारे जातकस्य कर्मनिश्चयः ।

मेषे जातो गम्यागमनप्रियोऽभक्ष्यभक्षकश्च भवति । एवमेव वृषे सुशीलो देवमन्दिरधर्माधिकारी च, मिथुने विरक्तोऽतिदरिद्रश्च, कर्के तीव्रपापकृत् परधनापहारी पूर्वकर्मकृच्च (वापीकूपतडागरामादिकर्मपूर्तकर्मेति), सिंहे देवमन्दिरविध्वंसकृत्, कन्यायां धर्मात्मा सुकृत्यश्च, तुलायां धनदाता पूर्तकर्मकृच्च, वृश्चिके परधनापहरणकर्ता परदाररतश्च, धनुषि धनदाता पूर्तकर्मकरश्च, मकरेऽपि परधनहर्त्ता परदाररतश्च, कुम्भे कृतज्ञो यज्ञकर्ता च, कुम्भे मीने पूर्तादिकर्मकरो बहुयाजकश्च ज्ञेयः । इति द्वादशराशीनां फलम् ।

**सूर्यादिग्रहाणां कालांशवशात्फलमाह—**

नर्तको, गायको, वन्दी, शिल्पी, याचको, गायको, नर्तको, भारवाहको,

---

१. बृ० पा० उ० भ० १४।६५-१२० (मुम्बई-सं०)

नमःशील:, प्रेष्यो, भारको, बन्दी याचको, धातुवादको, वेदाध्यायी, स्मृतिज्ञ:, शिवदीक्षारत:, शिल्पलेखनकर्ता, मीमांसान्यायतर्कशास्त्रज्ञ:, पञ्चरात्रार्थशास्त्रवेत्ता, इतिहासपुराणज्ञ, आयुधकर्ता, आयुर्वेदज्ञश्च क्रमात्सूर्याच्छनिपर्यन्तं, कालांशानुसारं जातको भवतीति भावः ।

## षष्ट्यंशानुसारमाजीवकानिर्देशः—

विषमराशिषु च क्रमेण समराशिषु च व्युत्क्रमेण प्रत्येक षष्ठ्यंशेषु निम्नाङ्कितप्रकारेण जीविकायुतो जातको भवति ।

अध्यापकः (१), सेवकः (२), शास्त्रपाठकः (३), अश्वसादी (४), हस्तिसादी (५), लिपिकः (६), वाजिशालाधिकारी (७), नट्यः (८), देशिकः (अध्यापकः) (९), याज्ञिकः (१०), गुरुः (११), दाता (१२), तृणकः (१३), ग्रामणी (१४), व्यसनाधिपः (१५), आरायकरणोद्युक्तः (१६), पुष्पविक्रमरतः (१७), राजकार्यरतः (१८), सेनालतापुष्पफलविक्रयी (१९), नृत्यगीतकुशलः (२०), ताम्बूलफलविक्रयी, (२१), निषिद्धविक्रमी (२२), ग्रामाणामधिकारकृत् (२३), बन्दी (२४), देशिकः (२५), प्राज्ञः (२६), धूपकः (२७), औषधिविक्रेताः (२८), कायकरणोद्युक्तः (शरीरसज्जाकरः), (२९), मरकः (३०), भाण्डविक्रयी (३१), कृषिकृत् (३२), वणिक् (३३), धातुचर्मकारी (३४), कर्पकः (३५), शास्त्राधिकारी (३६), विज्ञानी (३७), पुस्तकः ( अत्र पुस्तक संग्रहीति हिन्दी टीका ) (३८), रजकः (३९), वणिक् (४०), वेदवेदाङ्गवेत्ता (४१), शास्त्रज्ञः (४२), वन्दिपाठकः (४३), ग्रामणी (४४), अधिकारी (४५), गणकः (४६), दण्डकारकः (४७), मारकः (४८), इन्धनाहारी (४९), फलमूलादिविक्रयी (५०), शान्यकृत् (५१), स्वर्णकारी (५२), कृषिकृत् (५३), मांसविक्रेता (५४), याजकः (५५), अध्यापकः (५६), अध्यक्षः (५७), प्रतिग्रहपरः (५८), फली (५९), फलाभावः (६०) ।

## (लृ) देवभक्तिज्ञानयोगाः[1]

अथ च षष्ठ्यंशानामंशद्वयेन देवभक्तिमाह ।

अत्र च षष्ठ्यंशे षष्ठिसङ्ख्याका अंशाः प्रोक्ताः सन्ति तत्रांशद्वयक्रमेण

१. वृ० पा० उ० भा० १४।११८-१२० (मुम्बई-सं०)

त्रिंशत्सङ्ख्यानुसारं जातकस्य पृथक् पृथक् फलानुरूपं पृथक् पृथक् देवस्य भक्तिं वितनुते यथाहि ।

सूर्ये (१), शिवे (२), हरौ (३), विष्णौ (४), ईश्वरे (५), दुर्गायां (६), गणपतौ (७), चण्डिकायां (८), चण्डौ (९), ईशे (१०), चन्द्रे (११), विष्णौ (१२), ईशे (१३), अग्नौ (१४), त्रिपुरायां (१५), इन्दिरायां (१६), विष्णौ (१७), हरौ (१८), शंकरे (१९), शम्भौ (२०), क्षेत्रेशे (२१), गरुडे (२२), स्कन्दे (२३), शास्तरि (२४), ब्रह्मणि (२५), ईश्वरे (२६), विपापहरणोद्युक्ते (२७), जिने (२८), बुद्धे (२९), फलाभावः (३०) ।

एषु चांशद्वयानुसारं षष्ठ्यंशेषु जातस्य नरस्य भक्तिर्वाच्या ।

## (२) मरणज्ञानप्रकारः[1] —

### (अ) मरणयोगाः—

### सूर्यादिचतुर्दशग्रहांशानुसारं मरणयोगमाह—

जन्मराशौ च क्रमात्सूर्ये सति ज्वरेण, चन्द्रे श्लेष्मणा, भौमे चातिसारेण, गुरौ रुधिररोगेण, शुक्रे जठरव्याधिना, शनौ मूलव्याधिना, राहौ प्रमेहेन, केतौ सङ्ग्रहणीरोगेण, धूमे पिटिकारोगण, इन्द्रचापे चाग्निना, पाते शस्त्रेण, परिवेषे दाहेन, काले ज्वरेण विषेन च जातकस्य मरणं भवति ।

प्रकारान्तेण जन्मलग्नस्थसूर्यादिनवग्रहवशान्मरणयोगमाह—

जन्मलग्ने सूर्ये सति पित्तेन, चन्द्रे वातेन, भौमे श्लेष्मणा, बुधे पित्तेन, गुरौ वातेन, शुक्रे कफेन, शनौ श्लेष्मणा, राहौ पित्तेन, केतौ वातेनेति क्रमाज्जातकस्य मरणं जायते ।

### अथ च नवांशानुसारं मरणयोगमाह ।

मेषादिराशिषु नवांशा नवसङ्ख्याका भवन्ति तेषां क्रमेण प्रथमे सति ज्वरेण, द्वितीये सन्निपातेन, तृतीये जठररोगेण, चतुर्थेचान्त्ररोगेण, पञ्चमे प्रमेह-

---

१. बृ० पा० १४।१२१-१३६ (मुम्बई-सं०)

रोगेण, षष्ठे जलेन, सप्तमेऽग्निना, अष्टमे ज्वरेण, नवमे सन्निपातेन, मरणं भवतीति फलं ज्ञेयम्।

## द्वादशराश्यनुसारं मरणयोगमाह—

मेषे गुल्मेन, जठररोगेन ज्वरेण च, वृषे विषेण, मिथुनेऽग्निजलाभ्यां, कर्के शास्त्रादिपातेन, सिंहे गुदकीलभगंदररोगेण, कन्यायां रक्तातिसारेण, जठररोगेण ज्वरेण च, तुलायां प्रमेहेण गुल्मेन च, वृश्चिके कुष्ठेनातिसारेण च, धनुषि पिटिकादिभिरश्मरीरोगेन च, मकरे शूलेनवज्रपातोत्पन्नरुधिररोगेण, कुम्भे पित्तसमावृत्तेन, मीने शीतज्वरप्रभृतिना च जातकस्य मरणमिति ज्ञेयम्।

## अथ च कालादिचतुर्दशग्रहांशानुसारं मरणयोगमाह—

अत्र मूले पाठकालादिख्यन्तखगेति तेनेदं ज्ञायते यत्कालग्रहमारभ्य व्युत्क्रमेण चतुर्दश ग्रहाः सूर्यपर्यन्तं बोध्या ते चैवम्।

कालः (१), परिवेषः (२), पातः (३), इन्द्रचापः (४), धूमः (५), केतुः (६), राहुः (७), शनिः (८), शुक्रः (९), गुरुः (१०), बुधः (११), भौमः (१२), चन्द्रः (१३), सूर्यः (१४)।

अत्र चैषां क्रमेण सप्तग्रहांशेषु च क्रमेण।

दुर्गपातेन (१), पतनेन (२), ज्वरेण (३), सन्निपातेन (४), वृषभेण (५), पातेन (६), प्राणिनिमित्तेन (७), (अत्राग्रे शेषसप्तग्रहांशेषु च व्युत्क्रमेण) प्राणिनिमित्तेन (८), पातेन (९), वृषभेण (१०), सन्निपातेन (११), ज्वरेण (१२), पतनेन (१३), दुर्गपातेन (१४), क्रमेण पूर्वोक्तचतुर्दशग्रहांशेषु मरणं जायते इति बोध्यम्।

## (इ) आयुर्दायविचारः—

रश्मिवशेनाब्दानयनेऽब्दहरानाह।<br>
चतुर्थरश्मिमारभ्य सप्तरश्मिपर्यन्त ५० अब्दा ज्ञेयाः।<br>
३, १२, वर्षद्वयं हारकञ्च ज्ञेयम्।<br>
एवमेव ८ रश्मितः ६० वर्षाणि ५, ८ वर्षद्वयञ्च हारकम्।

१० रश्मितः ५५ अब्दाः ३, ६ वर्षद्वयं हारकम्।

११ रश्मितः ६८ अब्दाः ७७ वर्षाणि च हारकानि ज्ञेयानि।

१३ रश्मितः ४६ अब्दाः ७२ वर्षाणि हारकानि।

१४ रश्मितः ७५ अब्दाः ५४, ६ अब्दा हारका इति।

१५ रश्मितः ७५ अब्दाः १०, ११ अब्दद्वयं हारकम्।

१६ रश्मितः ८० अब्दाः ७ वर्षं हारकम्।

एवमेव १७, १८, १६, २०, २१, २२,, २३, २४, २५, २६, २७, २८, २६, ३०, सङ्ख्याकेभ्यो रश्मिभ्यो क्रमादब्दाः ७०, ५०, ४० ७, ७४, ७४, ६०, ७८, ५८, ७५, ७७, ८१, ८५, ४० सङ्ख्याका ज्ञेयाः तथा च ६, ६, ६, ५, ६, ७, ६, ६, २, ११, १०, ६, ६, १२ सङ्ख्याका हारकाङ्का बोध्या।

## अथांशायुषि हारकानाह—

११, १२, १४, १३, १६, ७, ५६, १२, १०, ५, ५४, ६४ सङ्ख्याका एते अंशहाराङ्काः कथिताः।

## अथ नवांशायुर्दायाङ्कानाह—

५, ४, ६, ६, १००, १०, ११, २०, २१ एतत्सङ्ख्याङ्का क्रमशो नवांशायुर्दाये हाराङ्का ज्ञेयाः।

## अथ शतायुर्दायाङ्कानाह—

६, १२, ११, १०, १२०, एतसङ्ख्याङ्काः शतायुर्दाये हाराङ्का बोध्याः।

अत्र मतान्तरमाह—

केषाञ्चिन्मतेऽत्र हारशतायुष्ययोर्योगं कृत्वा तदर्धं विशेषाब्दा प्रोक्ताः।

अथ रश्मिफलं निरूपयति—

दशरश्मिपर्यन्तञ्चेत्तदा कृच्छ्रेण कुटुम्बपालको भवति नरः। दशरश्मियोगश्चेत्तदा पुत्रबाहुल्यं ज्ञेयम्। एकादशरश्मौ पुत्रा विद्वांसः स्युः परन्ते निर्धनाः सन्तः भूमिपर्यटनपरा भवन्ति। द्वादशरश्मौ निर्धना कुलपांसनाश्च भवन्ति। त्रयोदशरश्मिमारभ्य विंशतिपर्यन्तं स्वशरीररक्षणार्थं द्रव्यार्जनपरा दासाश्च भवन्ति। केचिच्चात्र बाल्ये एव जाता मृता भवन्ति।

## (३) विशिष्टयोगाः—

### (अ) दरिद्रयोगाः ।

अथ च यदि केन्द्रत्रिकोणगा अशुभग्रहा स्युस्तथा तृतीयैकादशष्टाष्टमगाश्च शुभग्रहा भवेयुरथवा द्वितीयचतुर्थसप्तमगा मङ्गलक्षीणचन्द्रशनयो भवेयुरथवा वैपरीत्ये द्वितीयादिस्थानेषु शत्रुवर्गगा ग्रहास्युरथवा सूर्यभौमशनिराहुक्षीण-चन्द्राश्च भवेयुस्तदा दरिद्रयोगा ज्ञेयाः षष्ठामष्टमद्वादशभावसम्बन्धे तु गुणवान् दरिद्रो भवति।

यदि १, २, ६, १०, ११, ४, ५, ७, ३ एषु स्थानेषु शत्रुदृष्ट एकग्रहश्चेत्तदा-द्यावस्थायां, यदि ग्रहद्वयं स्यात्तदा मध्यायुषि ग्रहत्रयं स्यात्तदान्त्यायुषि दरिद्रयोगो भवति। एवमत्र क्रमेण नव दरिद्रयोगा बोध्याः।

अथ योगान्तरमाह—

कर्कमारभ्य राशिचतुष्टयान्तं (कर्कतस्तुलान्तमिति भावः) यदि पापग्रहाः शत्रुदृष्टाः स्युस्तदा मध्यायुषि फलप्रदाः। (अत्र शुभग्रह इति मूले पाठ शत्रुग्रह इति बोध्यमेतच्च संस्कृतटीकायां स्पष्टम्)[1] वृश्चिकमारभ्य राशिचतुष्टयान्तं स्युस्तदा चान्त्यायुषि फलं ज्ञेयम्। मीनमारभ्य राशिचतुष्टयान्तं भवेयुस्तदा प्रथमायुषि फलं बोध्यम्।

### अष्टवर्गेषु न्यूनाक्षमधिकृत्य फलमाह—

यद्यष्टवर्गेषु न्यूना अक्षा भवेयुस्तदा चतुर्थभावादष्टमभावाद्द्वादशभावा-त्पञ्चभावान्नवमभावाल्लग्नाच्च पूर्वोक्तप्रकारेण शत्रुदृष्टपापग्रहयोगे सति चाशु-भफलं ज्ञेयम्।

## (इ) शुभयोगाः—

केन्द्रेषु (१।४।७।१०) त्रिकोणयोश्च (५।६) शुभग्रहयोगे सति चोपचयस्था-नेषु (३।६।११) पापग्रहयोगे द्वितीयस्थाने चापि शुभग्रहयुतेऽन्यद्वितीयस्थानव्यतिरि-

---

१. बृ० पा० उ० भा० १४।१४५-१४६।

क्तेषु पापग्रहयोगे तथेष्टबलाधिक्ये ग्रहैकस्य द्वयस्य त्रयस्य वोच्चमूलत्रिकोणस्वातिमित्रामित्रान्यतमे स्थाने चोच्चनवांशे वा स्थिते सति लक्ष्मीयोगो बोध्यः।

## योगान्तरमाह—

दरिद्रयोगोक्ता ग्रक्षांशास्तेषां शुभग्रहाः षष्ठाष्टमद्वादशस्थानव्यतिरेकेण स्थिता स्युस्तथा चोच्चत्रिकोणस्थ एको ग्रहो ग्रहद्वयं त्रयं चतुष्टयं वाऽतिमित्रस्थानगतं भवेदथ वा ग्रहाणां पञ्चकं षट्कं सप्तकं वा मित्रस्थानगतं स्यात्तदाऽपि लक्ष्मीयोगो ज्ञेयः।

## योगान्तरमाह—

चन्द्राद्द्वितीये द्वादशे च शुभग्रहाः स्युर्लग्नाच्च सप्तमस्थे चन्द्रे लग्नस्थे गुरौ द्वितीयस्थे बुधे द्वादशस्थे च शुक्रेऽपि लक्ष्मीयोगः कथितः। परञ्चात्र भावबलदृग्बलकष्टेष्टबलानां तारतम्यानुसारं लक्ष्मीयोगस्य बलाबलं बोध्यमिति चात्र विशेषो ज्ञेयः।

## अत्रान्यद्वैशिष्ट्यमाह—

आयुर्दायस्य द्वादशभावानां वर्गाणां द्वादशभावेशानां रश्म्यंशानाञ्च शुभाशुभफलं विचार्य वर्षचर्यायाः फलं वाच्यम्—

रश्म्यंशानां शुभाशुभफलतारतम्येन च मासचर्यायाः फलं बोध्यम्।

अष्टकवर्गतारतम्येन च दिनचर्यायाः शुभाशुभं फलं वाच्यमिति।

## अथ बलाबलयोगानयनप्रकारमाह—

भावदृष्ट्यो भावविचारकारकस्य मुख्यत्वम्।

बलाबलविचारे बोधकस्य प्राधान्यम्।

कष्टेष्टबलविचारे रश्मिविचारे च पाचकस्य मूर्धन्यम्।

अन्तर्दायविचारे सर्वभावानां वेधकस्य मुख्यत्वम्।

दशानामन्तर्दायविचारे बोधककारकस्य च प्राधान्यम्।

भावस्वभावविचारे पाचकस्य मूर्धन्यम्।

## (ग) अब्दचर्यायां षड्बलनिरूपणम् ।[1]

### (अ) रश्मिफलम् ।

अत्र रश्मीनामप्यंशानुसारं फलस्य वर्णनमुपलभ्यते ।

रश्मिवर्णनप्रकरणे रश्मिस्पष्टः कथितोऽत्र च रश्म्यंशानां विचारो विधीयते ।

षष्ठरश्मेः प्रथमांशे जन्मनि सति तस्य पिता निर्धनो भवति ।

द्वितीयांशे तु पितुः मरणं प्रोक्तम् । तृतीयांशे दारिद्र्यं, चतुर्थांशे दारिद्र्यं रोगग्रस्तता च, पञ्चमांशेऽतिपीड़ा, षष्ठांशे नवमांशे दशमांशे सप्तमांशे च दारिद्र्यं रोगादिक जीवने संशयश्च भवति ।

एकादशरश्मेः प्रथमांशे जन्मनि सति पित्रा लालन पोषणञ्च प्रोक्तम् । द्वितीयांशे पुंश्चलीभार्यायोगः । तृतीयांशे निर्धनताऽथवा दौर्भाग्यं मृतपुत्रता च, चतुर्थांशे च स्त्रीजितो भवति । पञ्चमांशेऽल्पप्रजत्वं षष्ठांशे नैरोग्यं श्रीयोगो धनप्राप्तिश्च सप्तमांशे दुःखितो निर्धनश्च जायते ।

द्वादशरश्मेः प्रथमांशे नैव तस्य शुभाशुभं भवति फलाभाव इत्यर्थः । द्वितीयांशे बलवान् मूर्खश्चौरश्च, तृतीयांशे चतुर्थांशे च वेश्यापतिः शत्रुहन्ता च कथितः । राजपुरुषेण चास्य मृत्युस्तथा स्त्रीधनपुत्रहीनश्च भवति ।

चतुर्दशरश्मेः प्रथमांशे विद्वान् भवति द्वितीयांशे मातापितृभ्यां लालितः सुखी च जायते तृतीयांशे क्लेशभाक् क्वापि शत्रुजितथा मातापितृभ्यां हीन एव किञ्चिद्धनार्जको भवति देशाद्देशमटति च । चतुर्थांशे धनतत्परः सुखी, ख्यातः, शान्तबुद्धिः शत्रुजिच्च जायते । पञ्चमांशे धनवान्, क्षेत्रवान्, विद्ययार्जितपोषकः, सतीभार्यायुतः, षष्ठांशे दुःखभाग्, धनवांश्च भवति ।

पञ्चदशरश्मिफलं चतुर्दशरश्मिफलवत्पञ्चांशपर्यन्तं ज्ञेयम् । षष्ठांशे बुद्धिमान् धनवांश्च प्रोक्तः ।

षोडशरश्मेः सप्तदशरश्मेश्च प्रथमांशेऽत्तीवधनवान् कथितः । द्वितीयांशे

---

१. वृ० पा० उ० भा० १५ तमोऽध्यायः (मुम्बई-सं०)

स्वबन्धुभ्योऽधिकः प्रतापी, तृतीयांशे विद्वान् धनवान् पुत्रवांश्च प्रोक्तः। चतुर्थांशे स्वजनपालको भवति। पञ्चमांशे षष्ठांशे चेष्टापूर्त्तयज्ञयागादिकरो वापीकूपाराम-देवालयनिर्माता च प्रोच्यते।

अष्टादशरश्मेरेकोनविंशरश्मेश्च फलं सप्तदशरश्मिफलवज्ज्ञेयम्। विंशति-रश्मौ लब्धस्थानतत्परो दाता बहुपुत्रश्च भवति। एकविंशतिरश्मेः प्रथमांशे च द्वितीयांशे धनी प्रोक्तः। तृतीयांशे दानेन धर्मेण च ख्यातो यज्ञकृद्वाहनादियुतो बहुधनवान् सुखी च जायते।

चतुर्थांशेऽग्निमान्द्येन रोगी धनी सुखी च प्रोक्तः। पञ्चमांशे देशे विदेशे च विद्वान् षष्ठांशे दन्तुरो भवति। सप्तमांशे धनहानिः कथिता राजनिमित्तेन मृत्युश्चापि भवति।

अष्टमांशे दरिद्राणां पोषकः कथितः।

द्वाविंशरश्मेः प्रथमांशे पितृधनपोषको भवति। द्वितीयांशे निर्धनः किंचित्कृ-षिकरः सुखी च प्रोक्तः। तृतीयांशे राजकार्येण धनार्जनपरो भवति। चतुर्थांशे-पञ्चमांशे च प्रभुः परनामधारी च कथितः। षष्ठांशे कार्यहानिः सर्वव्ययश्च प्रोक्तः। सप्तमे रोगी धनी च कथितः।

त्रयोविंशतिरश्मेः प्रथमांशे पितृलालितो द्वितीयांशे सुखी तृतीयांशे मूर्खकृत्येन पराभूतश्चतुर्थांशे चौरः पञ्चमांशे व्याधिग्रस्तः षष्ठांशे दरिद्रो व्याधि-पीडितश्च भवति।

चतुर्विंशरश्मेः प्रथमांशे च लक्ष्मीसम्पन्नः पितृपालितः स्वजातिगुणा-न्वितः सुखी विद्वांश्च प्रोक्तः। तृतीयांशे स्वतन्त्रः सर्वसम्मतश्च कथितः। चतुर्थांशे गृहस्त्रीमित्रपुत्रादिभिर्वृतः पञ्चमांशे रोगी षष्ठांशे च बहुव्ययरतोभवति।

पञ्चविंशरश्मेः षष्ठांशे निष्फलः सन् जीवति।

षड्विंशरश्मेः प्रथमांशे दरिद्रसुतोऽपि पितृकार्यवृद्धिकरो द्वितीयांशे पितृगृहं परित्यज्यान्यत्र स्वयोग्यकर्मणा देहपुष्टिकरो भवति। तृतीयांशे धनी कृत्यविच्च भवति। चतुर्थांशेऽतिधनवान् सप्तमांशे स्वदेहपोषणरतोऽष्टमांशे भूमि-दारादिवृद्ध्या जीवन् नवमांशे व्यथाव्याधिग्रस्तो दशमांशे निर्धनः स्त्रीपुत्रादिहीन-नश्च प्रोच्यते।

सप्तविंशतिरश्मेरष्टाविंशतिरश्मेश्च पूर्ववत्फलं ज्ञेयम् ।

एकोनत्रिंशरश्मेः प्रथमांशे सुखी द्वितीयांशे राजसेवी तृतीयांशे कार्याकार्यज्ञश्चतुर्थांशेऽधिपतिः पञ्चमांशे बहुबन्धुयुतः षष्ठांशे लक्ष्मीवान सप्तमांशे मानवाहनयुतोऽष्टमांशे देशाधिपतिर्नवमांशे ग्रामाधिपश्च क्रमादुच्यते । त्रिंशरश्मि फलमप्येवमेव ज्ञेयम् ।

एकत्रिंशरश्मेः पञ्चमांशे सेनापतिर्नीतिमान् शूरश्च प्रोक्तः । षष्ठांशे युद्धविजयी सप्तमांशे रोगग्रस्तोऽष्टमांशे स्वल्पलाभवान् नवमांशे बहुलाभवांश्च भवति ।

द्वात्रिंशरश्मेरपि फलं पूर्ववद्बोध्यम् ।

त्रयस्त्रिंशरश्मेः षष्ठांशे तृतीयांशे च राजानो भवन्ति ।

चतुस्त्रिंशरश्मेश्चतुर्थांशे पराजयस्तृतीयांशे पञ्चमांशे षष्ठांशे च विजयोऽष्टमांशे नवमांशे च वृद्धिर्भवति ।

चतुस्त्रिंशरश्मिमारभ्य चत्वारिंशद्रश्मिपर्यन्तं तासां प्रथमांशे द्वितीयांशे तृतीयांशे चतुर्थांशे च राजा भवति । सप्तमांशे युद्धमष्टमांशे नवमांशे च व्याधिः दशमांशे पराजयश्च कथितः ।

शेषांशेषु सर्वसम्पत्तिरिति ज्ञेया ।

अत्रविशेषोऽपि दृश्यते । यच्चतुस्त्रिंशद्रश्म्यनन्तरं रश्मिषु सत्सु चक्रवर्ती भवति । अथ च पञ्चमांशे च विजयी प्रोक्तः ।

एवमुक्तसङ्ख्याया तुल्या अंशा नैव चेत्तत्र विपरीत फलं ज्ञेयम् । तथा च, विंशतिरश्मिपर्यन्तमुक्तवत्तुल्यराशिमरहितये व्याधिर्ज्ञेया । अपि चात्र परं अंशा यद्यपि नोक्तास्तथापि तेषु स्वाधिकार फल भजन्तीति बोध्यम् ।

## (इ) सूर्यादिग्रहाणां षड्बलानुरूपं पृथक् पृथक् फलकथनम्—

अथ च सूर्यादिग्रहाणां षड्बलैक्यबलं प्रदर्शयन् पूर्वं स्थानवशात्फलमाह ।

### सूर्यस्य स्थानवशाद्भावफलम्—

द्वादशभावेषु क्रमेण सूर्यस्य फलं निम्नाङ्कित प्रकारेण ज्ञेयम् ।

प्रथमे शिरार्तिबन्धुविरोधश्च, द्वितीये धनहानिस्तृतीये मित्रवृद्धिर्धनला-

भश्च, चतुर्थे सौख्यं शत्रुसमागमश्च, पञ्चमे पुत्रलाभो बुद्धिवृद्धिश्च, षष्ठे धनप्राप्तिर्जयस्य, सप्तमे स्त्रीविरोधोऽष्टमे व्याधिर्हानिश्च, नवमे मित्रवन्धनं भाग्यहानिश्च, दशमे धनलाभः सौख्यञ्चैकादश धनवृद्धिर्मित्रसमागमश्च, द्वादशे धनहानिर्व्ययः कुक्षिरोगश्च क्रमादज्ञेयमिति भावः ।

### चन्द्रफलम्—

प्रथमे कलहो, द्वितीये धनप्राप्तिस्तृतीये भ्रातृलाभो धनवस्त्रादिसङ्ग्रहश्च, चतुर्थे धनवस्त्रवाहनादियुतिः, पञ्चमे पुत्रादिप्राप्तिः, षष्ठे रोगः कुमतिश्च सप्तमे विद्याधनभूमिसुखप्राप्तिः, अष्टमे मृत्युदुःखकुक्षिरोगश्च नवमे स्त्रीस्वर्णदासादिलाभो दशमे सुचरित्रं गुणधनप्राप्तिः, एकादशेऽपि पूर्वोक्तफलं द्वादशे धनव्यय इति क्रमेण द्वादशभावनां फलं ज्ञेयम् ।

### भौमफलम्—

प्रथमे चञ्चलत्वात् क्षतव्याधिः, द्वितीये धननाशस्तृतीये भ्रातृमरणं धनलाभः सुखं यशश्च, चतुर्थे वन्धुमरणं शत्रुवृद्धिर्धनव्ययश्च, पञ्चमे पितृहानिर्धनागमः पुत्रलाभो यशश्च, षष्ठे शत्रुसमृद्धिर्जयो वन्धुसमागमो धनवृद्धिश्च, सप्तमे दारमरणं नीचस्त्रीसङ्गमश्चाष्टमे धननाशः पराभवो नवमे पापरुचिर्धनव्ययश्च दशमे धनलाभः कुकर्म चैकादशे धनं सुखं वस्त्रसुवर्णभूम्यादिसङ्ग्रहश्च, द्वादशे नेत्ररोगो भ्रातृनाशश्च क्रमाद्द्वादशभावेषु भौमः फलं विधत्ते इति ज्ञेयम् ।

### बुधफलम्—

बुधः षष्ठे शत्रुवृद्धि युद्धे पराजयञ्च कुरुते । अष्टमे वन्धनं वन्धुनाशञ्च विधत्ते । द्वादशे धननाशश्च प्रोक्तः । शेषेषु भावेषु तत्तद्भाववृद्धि विदधाति । यथा प्रथमे शरीरसौख्यं, द्वितोये धनवृद्धिस्तृतीये भ्रातृसौख्यं, चतुर्थे मातृसौख्यं, पञ्चमे पुत्रसौख्य, सप्तमे स्त्रोसौख्यं, नवमे धर्मवृद्धिर्दशमे पितृसौख्यमेकादशे धनलाभं क्रमात्कुरुते बुध इति भावः ।

### गुरुशुक्रयोश्च फलं तुल्यम् । तदाह—

गुरुशुक्रौ तृतीये शत्रुवृद्धि धनक्षयञ्च कुरुतः । षष्ठे पराजयं व्याधिञ्च कुरुतः । अष्टमे वन्धनं द्वादशे चोरैर्धनापहरणञ्च कुरुत इति भावः ।

शेषेषु भावेषु प्रथमद्वितीयचतुर्थपञ्चमसप्तमनवमशमैकादशेषु पूर्ववत्तत्-ऩ्द्भाववृद्धिं कुरुत इति बोध्यम्।

**शनिफलम्—**

शनेस्तु फलं सूर्यवद्भौमवच्च ज्ञेयमिति। सूर्यभौमौ पापौ शनिरपि पापोऽत एतेषां फलं तुल्यमिति भावः।

**अत्र फलज्ञाने विशेषमाह—**

यदि ग्रहा उच्चनोचस्थास्तदा तेषां फलेऽपि वृद्धिह्रासौ निम्नाङ्कितप्रकारेण भवत इति भावः।

मित्रस्थो ग्रहः पादमात्रमधिमित्रस्तृतीयांशं स्वस्थस्त्रिकोणस्थश्च पादोन-मुच्चस्थः पूर्णं फलं विधत्ते इति ज्ञेयम्। अन्यथा वैपरीत्यम्। अर्थाद्यदि नीचस्थस्तदा त्रिगुणहीनमधिशत्रुस्थो द्विगुणहीनः शत्रुस्थोऽर्धहीनं फलं ग्रहाः कुर्वन्तीति शेषः।

अथ च सूर्यादिग्रहाणां पृथक्त्वेन शुभाशुभमित्रशत्रुग्रहाणां दृष्टिवशात्फलं निरूपयति।

**तत्रादौ सूर्यस्य फलमाह—**

सूर्योऽत्र शुभग्रहदृष्टश्चेत्तदा राजसेवां धनप्राप्तिञ्च विधत्ते।

शत्रुग्रहदृष्टश्चेत्तदा कलहं दुःखं नेत्ररोगञ्च करोति।

मित्रदृष्टश्च जयं बन्धुलाभञ्च विधत्ते। पापैः दृष्टश्च रोगकर इति भावः।

**चन्द्रफलम्—**

पापदृष्टश्चन्द्रः शिरार्त्ति नेत्ररुजं पीडां धननाशञ्च करोति। शत्रुदृष्टश्च पापकर्मप्रवृत्तिकरो धननाशं भ्रमणञ्च विदधाति। शुभदृष्टश्चारोग्यं सौख्यं धन-मित्रक्षेत्रदेशादिलाभं वितनुते।

**भौमफलम्—**

भौमश्च पापदृष्टश्चेत्तदा भूमिधनधान्यादिनाशकरः शत्रुदृष्टौ तु बन्धनं

रोगं युद्धे प्रवासञ्च विधत्ते। शुभदृष्टौ विजयपराक्रमदेशभूमिमित्रादिसुखकरः प्रोक्तः। मित्रदृष्टश्चेत्तदा धनप्राप्तिं करोति।

**बुधफलम्—**

बुधश्चात्र मित्रशुभदृष्टो लिपिज्ञानं विद्यालाभं कौशलञ्च करोति।
मित्रदृष्टश्चेत्तदा वस्त्रालङ्काररत्नादिलाभकरः प्रोक्तः।
शत्रुदृष्टौ तु दुर्बुद्धिमतिसाररोगं सदोद्यमञ्च विधत्ते।
पापदृष्टस्तु महाविवादं कुक्षौ शूलरोगञ्च वितनुते।

**गुरुफलम्—**

गुरुः शुभदृष्टश्चेत्तदा धर्मकार्योद्यमं सुखं जयं धनप्राप्तिञ्च वितनुते। मित्रदृष्टस्तु स्त्रीभूमिक्षेत्रादिसङ्ग्रहकरः कथितः। शत्रुदृष्टश्चेत्तदा कुष्ठरोगं त्वग्दोषं कलहं युद्धञ्च करोति। पापदृष्टश्च पराजयं केदारादिवियोगञ्च विधत्ते।

**शुक्रफलम्—**

शुक्रोऽपि शुभदृष्टश्चेत्तदा सुखं स्त्रीलाभं रत्नादिप्राप्तिञ्च करोति। मित्रदृष्टौ चापं पट्टबन्धादिदेशलाभमिष्टप्राप्तिञ्च विधत्ते। पापदृष्टश्च पराजयं स्त्रीवियोग धननाशञ्च वितुनुते। शत्रुदृष्टौ तु कष्टसाध्यरोगानां मूत्रकृच्छ्रादिकानां मूत्रकृच्छ्रादिकानाञ्चकरः प्रोक्तः।

**शनिफलम्—**

पापदृष्टश्चापं शनिःकुक्षिरोगबन्धनादिकरः कथितः शत्रुदृष्टश्च शत्रुबाधां पराभवं रोगादिकञ्च करोति। शुभदृष्टश्चारोग्यकरः प्रोक्तः। मित्रदृष्टौ तु बन्धुसमागम करः प्रोच्यते।

अथ च सम्प्रति स्थानादिबलेन सूर्यादिग्रहाणां फलं निरूप्यते। स्थानबलेन पूर्णे सूर्ये स्वदेशे विद्यया बली भवति, चन्द्रे च प्रभुत्वेन बली, भौमे च ग्रामे मुख्यत्वेन बली, बुधे च श्रौतविद्यया लेखनकर्मणा बुद्धिबलेन च बली जायते इति ज्ञेयम्। एवमेव गुरौ स्थानबले पूर्णे स्वदेशराजः कृत्येन बली कथितः शुक्रे च स्वदेशमुख्यः स्त्रीणामाधिपत्येन बली प्रोक्तः। शनौ च भृत्यदासानां मुख्यः शरीरेण बली प्रोच्यते।

अन्यथा स्थानवलहीने ग्रहे तु पीड़ायुक्तो दासो भवति। अत्रापि न्यूनाधिक-वलवशान्न्यूनाधिकफलमनुसंधेयम्।

## दिग्बलमधिकृत्व सूर्यादिग्रहाणां फलम्—

सूर्ये दिग्वलाधिक्ये वाणिज्येन धनप्राप्तिर्धनवृद्धिर्यशश्च भवति, चन्द्रे च राजसेवया धनवृद्धिर्भौमे च सेवया वेदाभ्यासेन च ख्यातो भवति। बुद्धिकीर्तियश-स्यादियुतो भवति। गुरौ धनप्राप्तिर्यशोवृद्धिश्च कथिता। शुके च दानेन यशस्वी कीर्तिमांश्च जायते। शनौ च दासाधिक्येन शूरत्वेन च धनागमो निगदितः।

## अथ कालबलाधिक्येनायनबलाधिक्येन च ग्रहाणां फलमाह—

सूर्यमङ्गलशनीनां कालयनवलाधिक्यवले सति मन्त्रोपदेशेन पाखण्डकर्मणा दायस्यत्वेन च जीवति।

कृष्णपक्षीयचन्द्रस्यायनवलाधिक्ये कृषिकर्मणा विद्यया च जीवति गुरुशुक्र-बुधशुक्लपक्षीयचन्द्राणाञ्चयनाधिक्यवले विद्यया धनेन च जीवति।

## चेष्टावलाधिक्ये फलमाह—

सूर्यादिग्रहाणां चेष्टाधिक्यवले नानाविधिप्रकारेण धनप्राप्तिः प्रोक्ता। रश्म्यनुसारं गुरुबुधशुक्राणां फले वैशिष्ट्यम्। गुरुबुधशुक्राश्च वलिष्ठाश्चेत्तदा रश्म्योक्तं सर्वं फल कुर्वन्ति। न्यूनाधिक्ये वले चानुपातेनैषां फलमूह्यमिति भावः।

सूर्यादि ग्रहाणामिष्टवलाधिक्यवशात्फलं वितनुते—

पूर्णचन्द्रगुरुशुक्रबुधेषु सौम्येषु ग्रहेषु चेष्टावलाधिक्यवत्सु सत्सु मनुष्यो श्रीमान्, सुशीलो, गुणवान्, धर्मात्मा, दाता, सुखी, सत्यवादश्च भवति। पापेषु शनिभौम-क्षीणचन्द्रसूर्येषु कष्टवलाधिक्यवत्सु सत्सु ग्रहेषु मनुष्यः पापरतः शत्रुभिः परा-जितश्च कथितः।

## अत्र फलान्तरमाह—

पापग्रहेषु वलाधिक्यवत्सु मनुष्यो ज्वराक्रान्तो दुश्चेष्टः पातकी च भवति। शत्रुग्रहेषु वलवत्सु तु सदा रोगी बन्धुमित्ररहितः कथितः।

सर्वद्वेषिणो ग्रहस्य बलाधिक्ये फलाभावः। अर्थाद् ग्रहो निष्फलो भवतीति भावः।

स्वोच्चमूलत्रिकोण स्वक्षेत्रमित्राधिमित्रसमस्थानस्था एवं स्वकीयदशवर्गस्थाश्च ग्रहाः स्त्रीपुत्रधनक्षेत्रादिवृद्धिकरा भवन्ति । एवं मित्रादिवर्गस्था अपि पूर्वोक्तधनधान्यादिवृद्धिकरा एव ज्ञेयम्।

## ग्रहाणामुच्चादिवर्गस्थितिवशाद्दशाफलमाह—

चन्द्रस्यात्र विशेषः। चन्द्रस्यादौ दशारम्भकाले व्याधिर्दुर्गतिश्च कथिता। स्वोच्चादिसंस्थितानां ग्रहाणां दशा प्रारम्भकाले शुभदा प्रोक्ता। अन्यथा (नीचादिसंस्थितानामिति भावः) प्रारम्भकालेऽशुभफलदा कथिता।

केन्द्रधूमस्थानस्थितानां ग्रहाणां दशायां सदा शुभं फलं प्रोक्तम्। अर्थादेषां ग्रहाणां दशारम्भकाले मध्येऽन्ते च शुभमेव भवतीति भावः।

## द्रव्यगुणस्वभावकर्मानुसारं ग्रहाणां फलमाह—

ये द्रव्यगुणकर्मस्वभावादयः प्रकृतयो ग्रहाणां प्रोक्तास्तेषां फलमपि तत्तद्ग्रहदशायां तत्तद्द्रव्यगुणकर्मस्वभावानुसारं फलं बोध्यम्।

भावदृष्टिबलषड्बलैक्यबलेष्टकष्टबलादिबलानुसार फलमपि तत्तद्ग्रहाणां तत्तद्बलानुसारं फलं तेषा दशाकाले ज्ञेयम्।

नैसर्गिकबलेषु चानुक्रमेण बलविचारे बलाबलतारतम्यमाह—

प्रथमं निसर्गबलं मुख्यं विद्यते। ततोऽधिकं दृष्टिबलम्। ततोऽधिकं भावबलम्। ततोऽधिकमिष्टानिष्टबलम्। ततोऽधिकं चेष्टाबलम्। ततोऽधिकं स्थानबलम्। ततोऽधिकं कालबलम्। ततोऽधिकमयनबलं ज्ञेयमेवं बलानां विचारे चानुक्रमेण निसर्गादिबलानां तारतम्येन मुख्यत्वं बोध्यम्।

## (घ) अब्दचर्याप्रसङ्गे मासादिचर्या[१] —

### (अ) मासचर्याफलम्—

तत्रादौ संध्यादिविचारेण भावगतं ग्रहाणां फलमाह।

---

१. बृ० पा० उ० भा० १६ तमोऽध्यायः (मुम्बई-सं०)

यत्र कुत्रापि भावस्थो ग्रहो यदि भावस्पष्टांशानुरूपमंशादिकं धारयति तदा स ग्रहस्तद्भावपूर्णफलं ददाति। ये च भावानां सन्धिस्था ग्रहास्तेषां फलाभावः। एवं भावमध्यवर्तमानानां ग्रहाणां तेषां भावानाञ्चांशानुरूपं त्रैराशिकानुपाते फलं विचार्यम्।

अथ ग्रहाणामंशादिके भावांशादिकन्यूने सति वैशिष्ट्यम्।

यदि भावांशादिकाद्ग्रहस्यांशादिकं न्यूनन्तदा तदंशादिकं चतुर्भिगुणयेत्। लब्धञ्च भावफलं ज्ञेयम्। अन्यथा ग्रहस्यांदिकाद्भावांशादिकस्याधिक्ये सति तदा ग्रहांशादिकभावसन्धिस्पष्टांशादिके विशोधयेत् लब्धं भावफलं बोध्यम्।

### ग्रहयोगेन भावलक्षणमाह—

सूर्ययुक्तो भाव ऊर्ध्वमुखो ज्ञेयः। ग्रहरहितश्च भावोऽधोमुखाख्यः प्रोक्तः। चन्द्रादिशेषग्रहैर्युक्तस्तु तिर्यङ्मुखनाम्ना प्रोच्यते।

अथैषां तिर्यङ्मुखादीनां भावानां फलकथनप्रकारमाह।

शुभाशुभफलकथनोपयोगिनः भावस्थानाङ्काः कथ्यन्ते—

प्रथमभावस्य २५, द्वितीयस्य २२, तृतीयस्य २१, चतुर्थस्य २६, पञ्चमस्य २१, षष्ठस्य ३४, सप्तमस्य १९, अष्टमस्य २६, नवमस्य २९, दशमस्य ३६, एकादशस्य ५४, द्वादशस्य १६, स्थानाङ्काः क्रमाद्द्वादशभावानां प्रोक्ताः।

### करणाङ्कानाह—

स्थानाङ्कवत्क्रमाद्द्वादशभावानां करणाङ्का अपि ज्ञेयाः। ते च प्रथमस्य ३१, द्वितीयस्य ३३, तृतीयस्य २७, चतुर्थस्य ३०, पञ्चमस्य ३१ षष्ठस्य २२, सप्तमस्य ३७, अष्टमस्य ३०, नवमस्य २७, दशमस्य २०, एकादशस्य २१, द्वादशस्य ४० चानुक्रमेण बोध्याः।

### स्थानाङ्ककरणाङ्कानां फलमाह—

विषमराशिषु (मेषमिथुनसिंहतुलाधनुःकुम्भाख्येषु)

स्थानाङ्का अपि विषमाः शुभप्रदाः समराशिषु (वृषकर्ककन्यावृश्चिकमकरमीनेषु) समाः स्थानाङ्का अशुभफलप्रदाः। एवञ्च करणाङ्कानामपि फलं ज्ञेयम्। अर्थाद्विषमराशिषु विषमाः शुभाः समराशिषु समा अशुभा इति भावः।

## करणाङ्कानां फले विशेषः—

विषमराशिषु दशसङ्ख्यापर्यन्तं करणाङ्का व्याधिनाशकराः प्रोक्ताः समराशिषु चवैपरीत्यं हानिकरा इति भावः। दशसङ्ख्यात ऊर्ध्वं पञ्चसङ्ख्यान्तं (पञ्चदशसङ्ख्या पर्यन्तमिति) व्याधिकरा ज्ञेयाः। समराशिषु पञ्चदशसङ्ख्यात ऊर्ध्वं पञ्चविंशतिसङ्ख्यान्तं व्याधिकरा विषमराशिषु च हानिप्रदा अर्थादुभय-थाशुभफलकरा इति भावः। अथ पञ्चमदशसङ्ख्यामारम्य यावद्दशकमर्थात्पञ्च-विंशतिसङ्ख्यापर्यन्तं पूर्ववद्विषमराशिषु व्याधियोगस्तथा समराशिषु हानिर्ज्ञेया।

विषमराशिषु षड्विंशतिसङ्ख्याके स्थानाङ्के करणाङ्के च शिरोरोगः सप्तविंशतौ नेत्ररोगोऽष्टाविंशतौ रक्तविकार एकोनत्रिंशत्तमे कामलारोग त्रिंशत्तमे ज्वर एकत्रिंशत्तमे सङ्ग्रहणीरोगो द्वात्रिंशत्तमे शीतरोगस्त्रयोत्रिंशत्तमे प्रमेहरोग-श्चतुस्त्रिंशे प्लीहरोगः पञ्चत्रिंशे गुल्मलतारोगश्च क्रमाद्ज्ञेयम्।

समराशिषु षड्त्रिंशे स्थानकरणसङ्ख्याके रत्नवृद्धिः सप्तत्रिंशे धान्यवृद्धि-रष्टत्रिंशे सुवर्णवृद्धिरेकोनचत्वारिंशे गोपशुवृद्धिश्चत्वारिंशे क्षेत्रभूमिवृद्धिरेकचत्वा-रिंशे राजकृद्वृद्धिर्द्विचत्वारिंशे दासकृद्वृद्धिश्चतुश्चत्वारिंशे चोष्ट्रादिकवृद्धिः पञ्चचत्वारिंशे च गजाश्ववृद्धिः क्रमादत्र स्थानकरणसङ्ख्यसु बोध्या।

## अत्र फलकथने विशेषविधिमाह—

अत्र स्थानकरणसङ्ख्यादिकस्य यत्फलं प्रोक्तन्तत्रेदं विशेषेणावधेयम्। यदिदं फलं देशजातिकालानुरूपं तारतम्येण बोध्यम्।

## पुनश्चात्र फलविचारे विशेषमाह—

यत्पूर्वं स्वोच्चत्रिकोणादिस्थानस्थानां कलांशादिस्थानाञ्च ग्रहाणां फलं भाग्याध्योक्तफलञ्च प्रोक्तं तदपि सर्वं मासचर्यानुसारं संयोज्य विचार्यमिति विशेषेण ज्ञेयम्।

## (इ) दिनचर्याफलम्[1] —

यदि च सूर्यचन्द्रगुरुशुक्राः क्रमादन्ये मङ्गलबुधशनयश्च यदि निसर्गबलानु-

---

१. बृ॰ पा॰ उ॰ भा॰ सप्तदशोऽध्यायः (मुम्बई-सं॰)

सारं चत्वारो ग्रहा एकदैव स्थानप्रदा भवन्ति तदा धनप्राप्तिर्भवति। यदि पञ्च स्थानदाः स्युस्तदा पूज्यता कथिता। आरोग्यं वस्त्रलाभश्चापि ज्ञेयम्। षट्सु स्थानप्रदेषु ग्रहेषु तु पट्टाभिषेको भवति। सप्तसु स्थानदेषु सत्सु च राज्यलाभो जायते।

एवञ्च चतुर्षु ग्रहेषु करणप्रदेषु सत्सु धनहानिः कथिता। पञ्चसु च व्याधिः षट्सु विपदादिकं सप्तसु च मरणं प्रोक्तम्। करणाभावे मृत्युः कथितः। करणाभावे यदि वामतोऽन्यो ग्रहस्तिष्ठेत्तदा न मृत्युरिति ज्ञेयम्।

### अत्र चन्द्रस्य विशेषमाह—

यदि चन्द्रस्योच्चांशादधिका ग्रहाः स्युस्तदा तेऽपि स्थानदा ज्ञेयाः (अत्र चन्द्रस्य वृषराशौ चांशत्रयपर्यन्तमुच्चत्वं प्रोक्तमतोऽशत्रयाधिकत्वमत्र ग्राह्य-मिति)। अन्येऽपि शुभसञ्ज्ञका ग्रहाः सर्वे शुभफलदाः अत्र क्रमाद्राशीनां फलं बोध्यम्।

### (ड) समीक्षा—

#### (अ) पूर्वपरम्परा।

पूर्वपरम्परायामब्दचर्यावर्णनस्य गर्गहोराशास्त्रे एवोल्लेखो भवेदिति च यद-त्रानुक्तं तच्च गर्गहोराशास्त्रे द्रष्टव्यमिति वचनात्।[1] अत्र वर्णितस्त्रीजातकस्य प्रव्रज्यायोगानाञ्च चर्चा नारदमहापुराणे दृश्यते।[2]

अन्यत्राब्दचर्यायाः चर्चा नास्ति।

*नारदपुराणे होराशास्त्रस्य यल्लक्षणमुक्तन्तत्राप्यब्दचर्याप्रसङ्गाभावः।*[3]

काशीसंस्करणेऽपि केवलं स्त्रीजातकनाम्ना प्रव्रज्यायोगनाम्ना द्वौ अध्यायौ दृश्येते परमब्दचर्यावर्णनं न विद्यते।[4]

---

१. बृ० पा० उ० भा० १२।१४ (मुम्बई-सं०)
२. नारदमहापुराणम्, १।२।५५।२६६-३०५, ३१०-३१३, कल्याण, नारदपुराणांक, जनवरी १९५४, गीता प्रेस, गोरखपुर।
३. तत्रैव, १।२।५४।४-७।
४. बृ० पा० ७६, ८० अध्याय (काशी-सं०)

## (इ) उत्तरवर्त्तिषु प्रभावः—

अस्याब्दचर्यायाः पराशरात्परवर्त्तिभिराचार्यैरपि चर्चा न विहिता।

वराहमिहिरेण बृहज्जातके स्त्रीजातकनाम्ना प्रवज्यायोगनाम्ना च द्वौ अध्यायौ लिखितौ।[1]

सारावल्यामपि कल्याणवर्मणा केवलं स्त्रीजातकनाम्ना षट्चत्वारिंशोऽध्यायो लिखितः।[2]

जातकपारिजाते स्त्रीजातकनाम्ना षोडशोऽध्यायः, फलदीपिकायां मन्त्रेश्वरेण च सप्तविंशोऽध्यायः प्रव्रज्यायोगनाम्ना एकादशोऽध्यायश्च स्त्रीजातकनाम्ना लिखितौ।[3]

सर्वार्थचिन्तामणौ शम्भुहोराप्रकाशे उत्तरकालामृते, जातकादेशमार्गे दैवज्ञाभरणे, मानसागर्याञ्च चर्चा न दृश्यते।

होरासारे केवल पञ्चविंशोऽध्यायः स्त्रीजातकनाम्ना दृश्यते।[4]

## (उ) वैशिष्ट्यम्—

अयमब्दचर्याप्रसङ्गो वस्तुतो जातकस्याङ्गो विद्यांशनाम्नास्मिन् पुस्तके दृश्यते यथा हि—

> 'एवं ते कथितं शास्त्रं त्वयि स्नेहाद्द्विजोत्तम।
> जातकांशं विद्यांशं किं भूयस्त्वं श्रोतुमिच्छसि॥'[5]

---

१. सीताराम झा, बृहज्जातकम् (२४, १५ तमौ अध्यायौ:) मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

२ सीताराम झा, सारावली (४६, तमो अध्यायः:) मास्टर खेलाड़ीलाल एण्ड सन्स, बनारस।

३. कपिलेश्वर शास्त्री, जातकपारिजातः (१६ तमौ अध्यायौ), चौखम्बा संस्कृत सीरिज, बनारस।
मन्त्रेश्वरः, फलदीपिका (११, २७, तमौ अध्यायाः), के० एस० कृष्णमूर्ति ६५ थर्डक्रास रोड, वासावागुदी, वंगलौर।

४. बी० सुब्रह्मण्यम् शास्त्री, होरासारः, (२५ तमो अध्यायः), ६५ थर्डक्रास रोड, वासावांगुदी, वंगलोर।

५. बृ० पा० उ० भा० १७।१०।

अतश्चास्य विद्यांश इति नाम स्पष्टं दृश्यते ।

अत्र च जातकवदब्दमासदिनचर्यावर्णनेन फलकथनमुपलभ्यते । अस्य वैशिष्ट्यं प्रश्नलग्ने वा वर्षप्रवेशे इत्यादिकमत्र नाङ्कितम् । ताजिकशास्त्रस्यास्मात्प्रवर्तनं सञ्जातमित्यपि सम्भाव्यते । अत्र च मुहूर्तादिप्रकारेण नित्यलग्नोदयविधिना लग्नादिकं विज्ञाय द्वादशराशीनां लग्नानाञ्च फलं कथितम् । दशवर्गस्यापि फलमुपलभ्यते । सरला प्रक्रियेयम् । अत्र सूर्योदयाल्लग्नादिकानयनस्य नास्त्यावश्यकता । ग्रहानयनप्रकारोऽपि सरलः । केवलं राशिक्रमेणैव ग्रहज्ञान भवति । यथा हि—

सिंहमेषाच्च चापाच्च नक्षत्रक्रम ईरितः ।
चन्द्रज्ञशुक्रधूमार्कपरिवेषकार्मुकाः ॥
गुरुः पातः शनिर्केतुर्ग्रहाः स्युर्द्वादशक्रमात् ॥[1]

एवञ्चात्राब्दचर्याफलज्ञाने सौकर्यम् । गणितज्यौतिषस्य नास्त्यत्रावश्यकता । मासचर्यायामपि करणसङ्ख्याफलकथन लिखितम् । दिनचर्यायामपि स्थानदसञ्ज्ञया फलकथनप्रकारः ।

१. बृ० पा० उ० भा० १४।१४-१५ ।

# एकादशोऽध्यायः

# प्रश्नशास्त्रनिरूपणम्

## (क) विषयावतरणम्—

प्रश्नशास्त्रस्यापि महत्त्वपूर्णं स्थानं विद्यते ज्योतिषशास्त्रे । होराशास्त्रे तु जन्मकालेष्टघट्यादिकमधिकृत्य जन्मकुण्डलीनिर्माणस्य तच्चाधिकृत्य च फलकथनस्य सर्वा योजना विद्यते । परञ्च यस्य जन्मकालादिकस्य ज्ञानं पित्रोः प्रमादान्न भवेत्तेन कथं भविष्यत्ज्ञानं कार्यमिति प्रश्ने ज्योतिर्विद्भिराचार्यैः प्रश्नशास्त्रस्याविष्कारः कृतः । ज्योतिषशास्त्रस्य मानवकल्याणार्थं रचना महर्षिभिर्विहिता । अत एव यदि कश्चिच्छ्रद्धाभक्तियुतो मानवो दैवज्ञमुपयाति स्वकीयभविष्यत्ज्ञानार्थं परञ्च तेन स्वजन्मकालाकादिकं न ज्ञायते तदा तस्य कल्याणं कथं भवेदिति प्रयोजनार्थमेव प्रश्नशास्त्रम् । अत एवात्र पृच्छकस्यापि नियमाः प्रोक्ता यैर्नियमैस्तेन पुत्रपुष्पादिकमादाय श्रद्धया दैवज्ञः प्रष्टव्य इत्यङ्कितम् । अत्र च पृच्छकस्य प्रश्नसमय एव जन्मकाल इति तमधिकृत्य सर्वं होराशास्त्रस्फलं प्रोक्तव्यमिति तत्त्वम् । अत एवात्रास्य प्रकरणस्य न विस्तारः । अस्य चर्चा केवलमस्य ग्रन्थस्योत्तरभागे प्रश्नाध्यायाख्ये अष्टादशाध्याये दृश्यते नान्यत्रेति भावः ।

काशीसंस्करणे ७८ तमोऽअध्यायो नष्टजातकाध्यायनाम्नैव दृश्यते ।

## (ख) प्रश्नशास्त्रस्वरूपम् ।[1]

ज्योतिषशास्त्रे प्रश्नशास्त्रनामको भागो विस्तरेण प्रतिपादितः पृथक्त्वेन दृश्यते । अस्य मूलमत्र पाराशरीये शास्त्रे दृश्यते । प्रश्नकर्ता कीदृशः स्यादत्र विवे-

---

१. बृ० पा० उ० भा०, १८ अध्यायः (मुम्बई-सं०)

चनं विहितम् । प्रश्नसमयानुसारमिष्टादिकं विधाय लग्नस्पष्टादिकं कृत्वा प्रश्न-शास्त्रानुसारं लग्नादिके शुभाशुभग्रहस्थित्यनुरूपं शुभाशुभं फलं वाच्यम् ।

## (इ) पृच्छकलक्षणम्—

यस्तु प्रश्नानुरूपं फलं ज्ञातुमिच्छति स दैवज्ञसमीपं कथं भूत्वा गच्छेदिति प्रश्नेऽप्याचार्येण तल्लक्षणादिकं प्रोक्तं विद्यते।

पृच्छकश्च नैष्ठिकः शुद्धो विनम्रोऽलुब्धश्च भूत्वा रत्नं स्वर्णं धनं वस्त्रं पुष्पमूलफलादिकं वा यथाशक्त्या चादाय दैवज्ञं पुरतश्चोपगम्योपहरेत् । ततश्च स्वेष्टप्रश्नं पृच्छेत् ।

## (उ) दैवज्ञलक्षणम्—

प्रश्नानन्तरं दैवज्ञः शुचिः सन् प्राङ्मुख आसीनो राशिचक्रं लिखेत् । यत्र तिर्यगूर्ध्वाः प्राक्पश्चिमा दक्षिणोत्तराश्च रज्जुसमाश्चतस्रो रेखा विन्यसेत् । तत्र मध्यस्थानि चत्वारि पदानि एकीकुर्यात् । अत्र सर्कारणकं पद्मं विन्यसेत् । ततश्चेशानकोणादारभ्यमीनाद्या राशयः क्रमाल्लिखेत् ।

### अत्र वीथीसञ्ज्ञामाह—

वृषाद्या राशयो मेषवीथीसञ्ज्ञका वृश्चिकाद्याश्च मिथुनवीथीनामानस्तथा मेषमीनतुलाकन्याख्यास्तु वृषवीथीसञ्ज्ञकाः प्रोक्ताः ।

निम्नप्रकारेण चक्रं ज्ञेयम्

| | | | |
|---|---|---|---|
| १२ | १ | २ | ३ |
| ११ | | | ४ |
| १० | | | ५ |
| ९ | ८ | ७ | ६ |

## वीथी-ज्ञान-चक्रम्

| मेष | मिथुन | वृष |
|---|---|---|
| २ | ८ | १ |
| ३ | ९ | १२ |
| ४ | १० | ७ |
| ५ | ११ | ६ |

### (क) प्रश्नज्ञानप्रकारः—

पृच्छको यस्यां दिशि स्थितः स्यात्तद्दिगनुरूप लग्नं विन्देत । तदारूढसञ्ज्ञकं लग्नं भवति । आरूढलग्नाच्च वीथीराशि गणयेत्तावत्संख्यानुसारं छत्रराशि विजानीयात् । जन्मलग्नवत्तच्छत्रलग्नेन सर्वं फल दैवज्ञेन वाच्यम् ।

अत्र प्रश्नलग्नमेव नष्टजातकं कथ्यते । अपि च जातकशास्त्रपद्धतिरेव प्रश्नादिशास्त्रेषु मूलरूपा । तन्नियमा एवान्यपद्धत्तिषु मान्याः ।

### (ख) विविधयोगाः—

#### (अ) आयुर्विचारः ।

लग्नं यत्कालपर्यन्तं तत्तत्कालपर्यन्तमायुर्निर्णये पृष्टे सति तेषां वलवत्तां ग्रहाणामनुसारमायुष्यं विजानीयात् ।

#### अत्र मृत्युयोगमाह—

अथ च मकरवृश्चिककर्कमीनाख्यानां राशीनामाद्यं द्रेष्काणमारूढलग्ने समापतेत्तदालग्नं मृत्युकारकमिति वाच्यम् ।

#### मृत्युलक्षणमाह—

प्रश्नलग्नस्य राशिर्यदि पृष्ठोदयः स्यात्तथा चतुर्थसप्तमद्वादशभावगाश्च

ग्रहा पापाः स्युरथ वा भौमः शनिर्वा द्वितीयस्थो नवमस्थो वा भवेत्। अपि च चन्द्रोऽष्टमस्थश्चेत्तदा प्रश्नकर्तुर्मृत्युर्वाच्यः।

### मरणयोगान्तरमाह—

प्रश्नलग्ने पापग्रहे दुरुधरायोगे सति (लग्नाद्द्वितीयद्वादशभावगाः पापाः स्युरिति भावः) चन्द्रे च लग्नचतुर्थसप्तमान्यतमे भावे स्थिते वा राहुकालसमायोगे वा प्रष्टुर्व्याधिना मृत्युर्ज्ञेयः।

### राहुकालयोगज्ञानमाह—

पूर्वं राहुकालभेदं निरूपयति। राहुश्च मेषाद्व्युत्क्रमेण गच्छति। अर्थात् मेषमीनकुम्भमकरादिक्रमेणेत्यर्थः कालश्च वृषादारम्य क्रमेण चरति। अर्थाद्वृषमिथुनकर्कसिंहादिक्रमेणेति ज्ञेयम्। अनयोरेकराशौ सूर्योदयादारभ्य पञ्चाशत्पलात्मको भोगकालः प्रोक्तः। एतत्प्रकारेण राहुकालौ मुहुर्मुहुर्लग्नादिकं भुञ्जेते।

रव्यादिसप्तवारेषु राहुश्च रात्रौ १, २, ४, ३, ५, ६, ८ घटिकासङ्ख्याक्रमेण प्राच्याः दिशो व्युत्क्रमेण गच्छति। अनेनैव घटिकादिमानेन कालश्च पूर्वदिशः क्रमेण सञ्चरति। अर्थाद्राहुः पूर्वेशानोत्तरवायुप्रभृति व्युत्क्रमेण दिक्षु सञ्चरति। कालश्च पूर्वाग्निदक्षिणनैर्ऋत्यादिक्रमेण दिक्षु सञ्चरतीति भावः।

उभौ राहुकालौ सार्द्धघटिकाद्वयेन द्वादशराशिषु सञ्चरतः। राहुश्च वामं कालश्च दक्षिणं गच्छत इति। यत्तु पञ्चाशत्पलात्मको भोगकाल उक्तः स तु लग्नस्य ज्ञेयः।

### अत्र भोगक्रममाह—

रविवासरे राहुकालयोः पूर्वोत्तराग्निनिर्ऋतिदक्षिणपश्चिमवायुनामकेषु दिक्षु, चन्द्रवासरे चैशानोत्तरपश्चिमेशानाग्निपूर्वदक्षिणदिक्षु, भौमवासरे निर्ऋति वाय्वग्न्येशानदक्षिणपश्चिमनिर्ऋतिषु दिक्षु, बुधवासरे वायूत्तरनिर्ऋत्यग्निपश्चिमोत्तरदिक्षु, गुरुवासरे वाय्वीशानपूर्वदक्षिणपश्चिमपूर्वनिर्ऋतिषु दिक्षु, शुक्रवासरे पूर्वपश्चिमाग्नेयेशानाग्निपश्चिमदक्षिणाग्नेयेषु दिक्षु, शनिवासरे वाय्वीशानोत्तरपूर्वाग्निनिर्ऋतिवायुनिर्ऋत्युत्तरपूर्वेशानाग्निदक्षिणपश्चिमाग्नेयेषु दिक्षु च क्रमेण विचरणं ज्ञेयम्।

## अथ नक्षत्रतिथिवारेषु राहुकालयोः सञ्चारस्य दिक्क्रममाह—

रव्यादिवारेषु प्रश्विन्य'दिनक्षत्रेषु प्रतिपदादितिथिषु च क्रमेणशानवायूत्त-राग्निदक्षिणनिर्ऋतिपश्चिमदिक्षु राहुश्च व्युत्क्रमेण कालश्च क्रमेण सञ्चरतः। अत्र तिथ्यादिषु राहुकालयोर्द्वयोरेव योगे सति प्रष्टुर्मरणं ज्ञेयम्। एकस्मिन्योगे सति च व्याधिर्वाच्यः।

## (इ) रश्म्यनुसारं प्रश्नलग्नफलम्—

द्वितीयभावादारभ्याष्ठमभावपर्यन्तं प्रत्येकस्य १६, २१, ५, २५, १५, १६, ५ क्रमेण रश्मिसङ्ख्या ज्ञेया। शेषाणां भावानां पूर्वोक्तरश्मिप्रकरणवदत्रानुपातेन रश्मिसङ्ख्या बोध्या।

## मेषादिराशीनां रश्मिसङ्ख्यामाह—

८, ८, ५, ३, ११, ७, ४, ६, १०, १०, ५, ८ इमाः सङ्ख्याः क्रमेण मेषा-दीनां राशीनां रश्मिसङ्ख्या प्रोक्ता।

## रश्मिसङ्ख्याप्रयोजनमाह—

पूर्वाब्दचर्याप्रकरणे रश्मिसङ्ख्यानुसारं लक्ष्मीयोगः प्रोक्तः। अतश्च लक्ष्मीयोगे सति यदि पूर्वोक्तमृत्युयोगोऽथा वा व्याधियोगो भवेत्तदा कदाचित् व्याधिर्भवति कदाचिन्न भवतीति बोध्यम्। अयं पूर्वोक्तयोगस्यापवाद इति ज्ञेयः।

## (उ) कालराहुविचारः—

## अथ व्याधितस्य प्रश्नकालसूचककालराहुविशेषयोगान्तरमाह—

प्रश्नकाले वैधृतिव्यतिपातान्यतरे योगे, रेवत्याश्लेषान्यतरे नक्षत्रे, कर्कराशौ, विषनाडीषु, सूर्यदोषयुतेषु च भौमबुधशनिगुरुशुक्रेषु पञ्चग्रहेषु पापाक्रान्तनक्षत्रे पापग्रहयुते राशावपि सन्धिकाले (प्रातः सायं मध्याह्ने वा) शून्यनक्षत्रतिथिराशि-युते मासे जन्मनक्षत्रे च, प्रश्नलग्नाद्द्वितीयाष्टमभावस्थे क्षीणचन्द्रेऽथ वा तस्मिन् स्थानद्वये (द्वितीयाष्टमभावयोरिति) शत्रुग्रहदृष्टे सति, राहुणा पादपृष्ठजङ्घाजा-नुनाभिगुल्फककर्णनेत्रभालमुखकण्ठाद्यन्यतमाङ्गस्पृष्टे, अथवा राहुणा चाष्टमभावेऽ

ष्टमलग्ने, षोडशांशे, विपद्वधप्रत्यरितारान्यतमायां तारायाञ्च, वैनाशनक्षत्रे चाक्रान्ते सति प्रष्टुर्मृत्युर्व्याधिर्वा भवति ।

**कालस्य नक्षत्रानुसारमवयवानाह—**

अश्विनीनक्षत्रादारम्य रेवतीपर्यन्तं क्रमेण सप्तविंशतिसङ्ख्याकाः शिरोललाटभ्रूनेत्रनासाकर्णकपोलोष्ठचिबुककण्ठस्कन्धहृदयपार्श्ववक्षःकुक्षिनाभिकटिजघननितम्बलिङ्गाण्डकोषवस्त्यूरुजानुजङ्घागुल्फाङ्घ्रिप्रभृतिकाः कालस्यावयवाः ज्ञेयाः ।

**(ऋ) प्रश्ने ग्रहाणां शुभाशुभयोगाः—**

**द्रष्टुर्दुश्चिह्नज्ञानमाह—**

यदि पृच्छकस्तैलाभ्यक्तोऽशुद्धः स्यादथ वा जलहृदनिकटस्थो भवेत्तदापि प्रष्टुर्मरणं ज्ञेयम् ।

अन्ये शुभाशुभयोगाः—

प्रश्नलग्ने तृतीयपञ्चमषष्ठनवमदशमैकादशप्रभृतिकेषु भावेषु च शुभग्रहयोगे रोगस्य शान्तिर्ज्ञेया । अन्यथा चैषु स्थानेषु पापग्रहयोगे सति प्रष्टुर्मरणं वाच्यम् ।

**अत्रापवादमाह—**

शुभग्रहयोगे शुभग्रहा नीचाः शत्रुभावगा वा न स्युः । तथा पापग्रहयोगे पापग्रहा उच्चस्था मित्रभावगा वा न भवेयुः । तदैव पूर्वोक्तयोगस्य फलं ज्ञेयमन्यथा तु फलमप्यन्यथेति भावः ।

**योगान्तरमाह ।**

यदि प्रश्नकाले जन्मकाले वा द्वादशभावस्थाः केन्द्रगाः (लग्नचतुर्थसप्तमदशमभावाः) त्रिकोणगा (लग्नपञ्चमनवमभावाः) वा शुभाः ग्रहाः स्युस्तदा शुभफलप्रदा ज्ञेयाः ।

**(ग) अथ नष्टजातकप्रकारः ।**

**(अ) जन्मकालीयवर्षर्तुमासतिथिज्ञानप्रकारमाह ।**

प्रश्नलग्नादेव प्रष्टुर्जन्मलग्नादिकस्य ज्ञानप्रकारोऽत्र निरूप्यते। यदि कश्चित्स्वकीयजन्मवर्षमासदिनकालादिकं न जानाति तस्य शुभाशुभज्ञानं कथं स्यादिति प्रश्ने प्रश्नलग्नादेव जन्मलग्नानयनविधिं निरूपयति।

## पूर्वमयनर्तु ज्ञानमाह।

प्रश्नकाले मकरादारभ्य षड्राशिवर्तमानः सूर्यः स्यात्तदोत्तरायणं जन्मकाले चासीदिति ज्ञेयम्। यदि च कर्कादारभ्य षड्राशिवर्तमानः सूर्यः स्यात्तदा दक्षिणायनं ज्ञेयम्।

## ऋतुज्ञानमाह—

प्रश्नलग्ने मकरकुम्भमीनमेषवृषभमिथुनराशीनां पूर्वार्द्धभागे शनिशुक्रभौम-चन्द्रबुधगुरुगुरूणामन्यतमो ग्रहः स्यात्तदा क्रमेण शिशिरवसन्तग्रीष्मवर्षाशरद्धेम-न्ताद्या ऋतवः क्रमेण बोध्याः। एवमेव कर्कसिंहकन्यातुलावृश्चिकधनुषामुत्तरभागे पूर्वोक्ता ग्रहाः स्युस्तदा पूर्वोक्ताः क्रमेण च ऋतवो ज्ञेयाः।

## प्रकारान्तरमाह।

प्रश्नलग्ने सूर्यचन्द्रभौमबुधगुरुशुक्राद्यन्यतमे ग्रहे सति क्रमेण ग्रीष्मवर्षाशर-द्धेमन्तशिशिरवसन्ताद्या ऋतवो वाच्याः।

अथ वा लग्नस्य द्रेष्काणस्वामी शुक्रमङ्गलशनिचन्द्रबुधगुरुप्रभृतिकग्रहान्य-तमः स्यात्तदापि पूर्वोक्तक्रमेण ग्रीष्माद्यन्यतम ऋतुर्ज्ञेयः। अथवा लग्नस्य नवांश-पतिः पूर्वोक्तशुक्रादिग्रहान्यतमः ग्रहः स्यात्तदापि पूर्वोक्तक्रमेण ग्रीष्माद्यन्यतम ऋतुर्बोध्यः।

## मासतिथिज्ञानप्रकारमाह—

पूर्वोक्तप्रकारेणग्रहादृतुज्ञाने सति ग्रहस्पष्टभागद्वयेन मासं विजानीयात्। अर्थाद्ग्रहश्च यदि पञ्चदशांशाभ्यन्तरस्तदा च ऋतोर्मासद्वयस्य पूर्वोमासो बोध्यः।

पञ्चदशांशानन्तरं त्रिंशदंशमध्यगो ग्रहश्चेत्तद द्वितीयो मासो ज्ञेयः। यथा हि सूर्येण ग्रीष्मर्तुज्ञानं प्रोक्तम्। ग्रीष्मर्तोर्मासद्वयं ज्येष्ठ आषाढश्च। अत्र यदि

सूर्यः पञ्चदशांशमध्यगस्तदा ज्येष्ठो मासो बोध्यः। पञ्चदशांशोत्तरं त्रिंशदंशमध्यगः स्यात्तदा चाषाढो मासो वाच्यः।

## तिथिज्ञानमाह—

ग्रहस्य त्रिंशदंशानुसारेण त्रिंशत्सङ्ख्याकास्तिथयोऽनुपातेन बोध्याः। पूर्वाः पञ्चदशांशाः शुक्लपक्षस्य द्योतका उत्तराश्च कृष्णपक्षस्येति स्वयमेव बोध्यम्।

## प्रश्नलग्नाद्वयोवर्षज्ञानमाह—

गुरुचारात्प्रश्नकर्तुर्वयोनुरूपमनुमानेन जन्मवर्षं बोध्यम्। प्रकारमाह।

प्रश्नलग्नात्त्रिकोणस्थो गुरुश्चेत्तदा यस्मिन्नाशौ वर्तमानो गुरुर्यदा तस्मिन् राशौ पूर्वमासीत्तस्मिन् वर्षे जन्म ज्ञेयम्। अत्र गुरोरेकस्मिन् राशौ चैकवर्षं वर्तमानेन द्वादशराशिषु द्वादशवर्षाणि भवन्ति। एवञ्च यदि वयोमानं मध्ये समापतेत्तदा गुरोर्नवांशराश्यनुसारं वयोऽनुमानं विधातव्यम्।

## अत्र काशीसंस्करणे प्रकारान्तरम्—

तत्रायं क्रमः। प्रश्नलग्नस्थगुरुराशिरेव जन्मलग्नस्य गुरुयुतो राशिर्बोध्यः। एवं द्वादश द्वादशवर्षाणां क्रमेण वयसोऽनुरूपं जन्मवर्षस्य ज्ञानं कार्यम्। वर्षज्ञानेऽत्र भेदे सति प्रश्नलग्नात्त्रिकोणस्थं गुरुं मत्वा प्रष्टुर्वयोऽनुरूपं जन्मवर्षं ज्ञेयमिति।[1]

अर्थाद्यस्मिन् राशौ यस्य नवांशे वा गुरुर्भवेत्तदनुसारं जन्मकालेऽपि तत्तद्राशौ गुरुस्थितिवशाद्वर्षज्ञानस्य सुलभत्वमिति स्पष्टम्।

## प्रकारान्तरेण मासराशिलग्नज्ञानमाह—

प्रश्नलग्नस्थसूर्यस्य गतांशानुरूपमनुपातेन तिथिर्ज्ञेया। तिथिश्च शुक्लपक्षादारभ्य ज्ञातुं प्रोक्ता।

प्रश्नलग्नं यदि रात्रिमध्यस्थं स्यात्तदा जन्मलग्नं दिवामध्यगं बोध्यम्। तथा च यदि दिवामध्यगं भवेत्तदा च रात्रिमध्यगं ज्ञेयम्।

---

१. वृ० पा० (काशी-सं०) ७८।११, १२ पृ० ६७१।

**प्राणज्ञानमाह—**

प्रश्नलग्नात्पूर्वं यावन्तः प्राणा गताः स्युस्तावन्तो जन्मकालेऽपि गता बोध्याः।

**मासज्ञानमाह—**

प्रश्नलग्नस्थचन्द्राराशिवन्मासो वाच्यः। अर्थाद्यदिऽचन्द्रो मेषस्थस्तदा चैत्रो मासः वृषस्थश्चेत्तदा वैशाख इति क्रमेण बोध्यम्।

**जन्मराशिज्ञानम्—**

चन्द्रः समं विषमं वा यल्लग्नमस्पृशत्तस्यात्रिकोणगो (पञ्चमनवमान्यतरः) यो बलाधिक्यो राशिर्भवेत् स जन्मराशिर्बोध्यः।

**(इ) जन्मलग्नहोरादिदशवर्गज्ञानप्रकारः—**

**जन्मलग्नज्ञानमाह।**

प्रश्नलग्नात्तु यावति राशौ चन्द्रस्तिष्ठेत्तावति राशौ जन्मलग्नं बोध्यम्। तद्यथा मीनं प्रश्नलग्नन्तदा जन्मलग्नमपि मोनम्। एवमन्यप्रश्नलग्नैरन्यं जन्मलग्नमिति बोध्यम्।

**नक्षत्रज्ञानम्—**

प्रश्नकाले पादछाया द्रष्ट्व्या छायासङ्ख्यायां वर्तमानप्रहरवारतिथिनक्षत्राणामपि सङ्ख्यां युञ्जीत।

तां सङ्ख्यां सप्तविंशतिभिर्विभजेत्। शेषसङ्ख्यानुसारं धनिष्ठानक्षत्रादिगणनया लब्धं नक्षत्रं विजानीयात्। यदि सङ्ख्या सप्तविंशतितो न्यूना स्यात्तदा भागस्य नास्त्यावश्यकतेति ज्ञेयम्।

**प्रकारान्तरमाह—**

यत्र पूर्वोक्तकलांशादिषु यन्नक्षत्रं प्रोक्तदैन्तव जन्मनक्षत्रमिति वाच्यम्।

**होराज्ञानमाह—**

कलांशेभ्यः सकाशादर्धहोरापर्यन्तं या होरा प्रोक्तास्तावत्सङ्ख्यानुसारं होरां विजानीयात्।

**प्रकारान्तरेण मासादिज्ञानमाह—**

लग्नं स्थानद्वये पृथक् पृथक् स्थापयेत् । एकत्र लग्नस्यांशकलादिकं स्ववर्गसङ्ख्यानुरूपं गुणीकुर्यात् । पुनश्चारूढछत्रयोर्मध्ये यो बलवान् तस्य वर्गेण पुनः गुणीकुर्वीत । विषमे सति पृथक् योगं कुर्यात् । समत्वे तु पृथक्त्वेन न्यूनीकुर्यात् । पुनश्च द्वादशभिर्विभजेत् लब्धं मासं विजानीयात् । त्रिंशद्भिर्विभक्ते सति दिवसज्ञानं भवति ।

**प्रकारान्तरमाह—**

लग्नस्य कलादिकं कृत्वा पूर्वोक्तक्रमेणभावशुद्धि विधाय पृथक् कृतस्य योगं विधाय नवभिःकलांशाद्यैस्तथोच्चत्रिकोणादिप्रकारैश्च क्रमादेकाशीतिभेदा भवन्ति तत्र नवकाद्यङ्कशोधनैर्येषां सतां योगगते काले समाप्तेषु तत्तन्मासादिकं ज्ञेयम् ।

**लग्नस्य बलवत्वमाह—**

स्वस्वामिना गुरुबुधाभ्याञ्च पूर्णदृष्ट्या युतं लग्नं बलवदिति प्रोक्तम् । इदं बल यदि लग्न स्वस्वामिनं विनाऽन्यपापग्रहैर्दृष्टं न भवेत्तथा शुभग्रहैश्च दृष्टं स्यात्तदैव ज्ञेयम् ।

**अत्र ग्रहदृष्टिज्ञानमाह—**

तृतीयदशमभावौ सर्वे ग्रहा पाददृष्ट्या पश्यन्ति शनिश्च पूर्णदृष्ट्येति । नवमपञ्चमौ भावौ सर्वे ग्रहा द्विपाददृष्ट्या पश्यन्ति गुरुश्च पूर्णदृष्ट्येति । एवं चतुर्थाष्टमौ त्रिपाददृष्ट्या भौमश्च पूर्णदृष्ट्या पश्यति । सप्तमं भावं सर्वे ग्रहा पूर्णदृष्ट्या पश्यन्तीति विशेषः । अयं दृष्टिप्रकारोऽपि जन्मलग्नप्रकारवदेव प्रश्नलग्ने चाचार्येण प्रोक्तमिति ।

स्थानबलं दिग्बलञ्च निरूपयति । स्वोच्चमूलत्रिकोणमित्रस्वद्रेष्काणनवांशस्थाग्रहाः स्थानबलिन इति । प्रश्नलग्नाद्दशमभावस्थौ रविभौमौ, सप्तमभावस्थः शनिर्लग्नस्थौ गुरुबुधौ, चतुर्थभावस्थौ चन्द्रशुक्रौ च क्रमाद्दिग्बलिनः ज्ञेयाः । अयं प्रकारः प्रश्नलग्ने एव बोध्या नान्यत्र, जन्मलग्नमुहूर्तादिकेष्विति भावः ।

**अयनबलमाह—**

मकरराशिमारभ्य मिथुनान्तं सूर्यचन्द्रबुधगुरुशुक्राः कर्कमारभ्य धनुरन्तं शनिभौमौ च क्रमेणायनबलिनौ प्रोक्तौ।

**पक्षबलमाह—**

शुक्लपक्षे शुभग्रहाः कृष्णपक्षे च पापग्रहा बलिन इति बोध्यम् ।

**चेष्टाबलमाह—**

वक्रिणो ग्रहाश्चेष्टाबलशलिन इति प्रोक्तम् ।

**दिवारात्रिबलमाह—**

शुभग्रहा दिवाबलिनः पापग्रहाश्च रात्रौ बलिनो बोध्याः ।

**दशवर्गबलमाह—**

लग्नहोराद्रेष्काणद्वादशांशनवांशसप्तांशषोडषांशकालहोरांशत्रिंशांशषष्ट्यंशगा ग्रहा उत्तरोत्तरं हीनबलिनः । अर्थात् पूर्वं पूर्वं बलिन इति भावः । अनेन लग्नस्य सर्वाधिक्यं बलम् ।

**जन्मलग्नज्ञानप्रकारान्तरमाह—**

प्रश्नलग्नस्य कलादिकं कृत्वा नवभिर्गुणीकुर्यात् । सप्तविंशतिभिर्विभजेत् । लब्धं नवांश विजानीयात् । शेषमेकत्र संस्थाप्य लब्धं सप्तभिर्गुणितं कृत्वा चतुर्भिर्विभजेत् । लब्धं नवांशं प्रोक्तम् । नवांशराशिरेव जन्मलग्नमिति । अथवा शेषसङ्ख्यां सप्तभिर्विभक्तां कुर्यात् । लब्धं सप्तममासस्य लग्नं बोध्यम् । तल्लग्नराशिर्यदि-शुभग्रहस्य तदा तदैव कर्मराशिः (नक्षत्रं वा) जन्मराशिः (नक्षत्र वा) ज्ञेयम् ।

### (घ) प्रश्नशास्त्ररहस्यावलोकनाय गौरीशङ्कराराधनविधिः।[१]

अथ चास्य होराशास्त्रस्य गूढरहस्ययुक्तस्य ज्ञानञ्च सरलोपयेन कथं कलियुगे भवितुमर्हतीति चात्रोपायमाह ।

पराशरमहर्षिणा चास्य शास्त्रस्य महान् महिमा निगदितः यदिदं शास्त्रं पुण्यं यशस्यं धन्यं त्रिकालज्ञानप्रदं प्रोक्तम् ।

---

१. बृ० पा० उ० भा० १६।१-१५ (काशी-सं०)

अस्य शास्त्रस्य मन्त्राराधनं विना च न भवितुमर्हति यतश्चेदं शास्त्रं महासमुद्रमनन्तं चेति भावः।

## अस्य शास्त्रस्यानधिकारिणमाह—

बुद्धिहीनाय पाखण्डिने क्रोधिने चेदं शास्त्रं न दातव्यम्। यदि चेदं दुष्टाय दत्तं भवेत्तदा वक्तुर्विद्या नष्टा भवति।

इदं शास्त्रं महर्षिपराशरेण मैत्रेयायेत्थं प्रदत्तं यथा भगवता शङ्करेण चोपन्युनाम्ने बालकाय प्रदत्तमासीदिति भावः।

यदीदृशो महिमा चास्य शास्त्रस्य तदा कलियुगे मन्दबुद्धीनां पुरुषाणां कृते कथमिदं शास्त्रं ज्ञेयं भवेदिति प्रश्ने पराशरेणोत्तरं प्रदीयते। यत्सत्ययुगे त्रेतायाञ्च मानवास्तपोरता आसन्। द्वापरे च तपसा शास्त्राभ्यासेन च भविष्यज्ञा अभवन्। कलियुगे तु धर्मस्य केवलमेकस्यैव पादस्य स्थितिवशात्तद्‌ज्ञानं न भवितुमर्हति।

अतश्च कलियुगे मन्त्राराधनं देवाराधनञ्चावश्यकम्। परञ्चात्रापि सुगमत्वं भवेदिति निर्णीय महर्षिणास्मिन् ग्रन्थे सरलोपायश्च कथितः।

## अथ ज्ञानोपायमाह—

ज्योतिषशास्त्रानुसारं त्रिकालज्ञानं प्राप्तुमत्र सरलो मन्त्रविधिः प्रोक्तः।

## अस्य मन्त्रस्य न्यासविनियोगध्यानादिकमाह—

## पूर्वं विनियोगः।

अनयोर्मन्त्रयोर्दक्षिणामूर्त्तिः ऋषिः गौरी परमेश्वरी सर्वज्ञः शिवश्च देवते गायत्र्यनुष्टुभौ छन्दसी मम त्रिकालदर्शकज्योतिशास्त्रज्ञानप्राप्तये विनियोगः।

षडङ्गन्यासमाह। पूर्वं हृदयादिन्यासं परतश्चाङ्गुष्ठादिन्यासं निरूपयति।

ॐ ऐं हृदयाय नमः, ॐ ऐं शिरसे स्वाहा, ॐ ऐं शिखायै वषट् ॐ ऐं कवचाय हुं, ॐ नेत्रत्रयाय वौषट्, ॐ ऐं अस्त्राय फट् इति च हृदयादिन्यासः। ॐ ऐं अंगुष्ठाभ्यां नमः, ॐ ऐं तर्जनीभ्यां नमः, ॐ ऐं मध्यमाभ्यां नमः, ॐ ऐं अनामिकाभ्यां नमः, ॐ ऐं कनिष्ठिकाभ्यां नमः, ॐ ऐं करतलकरपृष्ठाभ्यां नमः। इति चाङ्गुष्ठादिषडङ्गन्यासः।

**अथ ध्यानमाह—**

उद्यानस्यैकवृक्षाधः हिमालयपर्वतोद्भूते परमासने क्रीडन्तीं रत्नादिभूषितां शुक्लवस्त्रां शुचिस्मितां गौरीन्तदा देवदारुवने ध्यानस्तिमितनेत्रं त्रिनेत्रं चतुर्भुजं जटिलं चन्द्रशेखरं शुक्लवर्णं भगवन्तं परमीश्वरं महादेवं ध्यायेदिति ।

अथ मन्त्रौ—

पूर्वं गौरीमन्त्रः ।

**ॐ ऐं गौरि वद वद गिरि परमैश्वर्यसिद्ध्यार्थं ऐं इति ।**

शिवमन्त्रः—

**ॐ सर्वज्ञ नाथ पार्वतीपते सर्वश्लोकगुरो शिव शरणं त्वां प्रपन्नोऽस्मि पालय ज्ञानं प्रदापयेति ॥**

अस्य मन्त्रद्वयस्य पुरश्चर्यादिकं विनैव जपकरणात्सिद्धिर्भवति दैवज्ञत्वञ्च प्रकाशते । बुद्धिश्च विमला भवति । (अत्र सस्कृतटीकायां पुरश्चर्यादिकरण विना मन्त्रजपात्सिद्धिर्निगदिता हिन्दीटीकायाञ्च पुरश्चर्यादिकरणमावश्यकं लिखितम् । मूले च पुरश्चर्यादिकस्यावश्यकं नास्तीति सङ्केतउपलभ्यते)

**अत्र विशेषमाह—**

यश्च पुरुष इमं मन्त्रविधिं कृत्वा द्विविधिं खगोलभूगोलात्मकं गणितशास्त्रं विचार्य होराशास्त्रस्य भागद्वयमधीते । तस्यविप्रस्य वाणी न निष्फला भवितुमर्हति । (अत्र द्विजवरःशब्दो निर्दिष्टस्तस्य च टीकाकारेणायमर्थः प्रकाशितः यदिद ज्यौतिषशात्रं केवलं विप्रेणैवाधीतव्यम् । न तु जैनशूद्रादिकेन ब्राह्मणेतरेणेति ।)[1]

**(ड) समीक्षा—**

**(अ) पूर्वपरम्परा—**

अत्र केवलमुत्तरभागस्याष्टादशेऽध्याये एव प्रश्नशास्त्रस्य चर्चा तत्र केवलं प्रश्नलग्नात्सर्वं फलं सौकर्येण ज्ञातुं शक्यम् ।

---

१. बृ० पा० उ० भ० १८।१४,१५, पृ० ७३६ ।

गौरीशङ्करयोः आराधना तयोर्मन्त्रजपविधिश्च प्रतिपादितः ।[1] अनेनेदं सिध्यति निखिलज्ञानवदस्य ज्ञानस्यापि भगवतः शङ्करादेव प्रवृत्तिरिति । नारदपुराणेऽपि प्रश्नलग्नादिदं सकलं ज्ञातुं चर्चा दृश्यते ।[2] नारदं प्रति सनन्दनमुनिना ज्ञानं प्रदत्तमिति नारदपुराणे विद्यते । तेन नारदसनन्दनयोरपि पराशरात्पूर्वं प्रश्नशास्त्रज्ञत्वं सूचितं भवति । यदुत्तरभागेऽनुक्तं तच्च गर्गहोरायां द्रष्टव्यमिति वचनाद् गर्गस्यापि पराशरात्पूर्वमस्तित्वं स्वतः सिद्धयति ।[3]

## (इ) उत्तरवर्त्तिषु प्रभावः—

जैमिनिना जैमिनिसूत्रे प्रश्नशास्त्रस्य चर्चा न विहिता ।

वराहमिहिरेण तु बृहज्जानके नष्टजातकाध्यायनाम्ना २६ तमोऽध्यायोऽङ्कितः ।[4]

अत्र प्रश्नकालाज्जन्मकालज्ञानस्य तथा जन्मकालीयसम्वत्सरमासदिनादिकस्य ज्ञानप्रकारो निर्दिष्टः । यवनाचार्येणापि प्रश्नलग्नशास्त्रे पल्लवनङ्कृतमिति बृहज्जातकटीकायामुद्धृतवचनाज्ज्ञायते ।[5]

सारावल्यामपि कल्याणवर्मणा द्विपञ्चाशत्तमोऽध्यायो नष्टजातकनाम्नाङ्कितः[6] अनेनात्रेदमङ्कितम् । यद्यवनेन्द्रभदन्तादयोऽन्येऽपि नष्टजातकाचार्या आसन् । यथा हि ।

**यवनेन्द्रभदशनाद्यैः कथितं तदिहात्र सर्वमेव मया ।[7]**

---

१. बृ० पा० उ० भा० १८।४-१४ ।

२. नारदमहापुराणम् २।१।३४२-३४५, कल्याण, संक्षिप्तनारद विष्णुपुराणांकम्, जनवरी १९५४, गीता प्रेस, गोरखपुर ।

३. बृ० पा० उ० भा० १२।४२ (मुम्बई-सं०)

४. अच्युतानन्द झा, 'बृहज्जातकम् २६ अध्यायः, चौखम्बा संस्कृत सीरिज बनारस ।

५. तत्रैव, पृ० ३०६ ।

६. सीताराम झा 'बृहज्जातकम्' सारावली, ५२ अध्यायः, मास्टर खेलाड़ीलाल एण्ड संस, बनारस ।

७. तत्रैव, ५२।१६

जातकपारिजाते, सर्वार्थचिन्तामणौ, शम्भुहोराप्रकाशे जातकादेशमार्गे, फलदीपिकायां, दैवज्ञाभरणादिग्रन्थेषु चास्य चर्चा नोपलभ्यते।

कालिदासकृते उत्तरकालामृते प्रश्नखण्डनाम्ना सप्तमः खण्डो दृश्यते। अत्र च वर्षमासादिज्ञानार्थं गुलिकस्याप्युपयोगित्वं दर्शितम्।[1]

आचार्यढुढिराजकृते जातकाभरणेऽपि ३४ तमोऽध्यायो नष्टजातकाध्याय-नाम्नाङ्कितः।[2]

तदुत्तरवर्तिभिराचार्यैरस्य प्रश्नशास्त्रस्यानुकरणं कृद्भिराचार्यैः प्रश्नलग्ना-दन्यदपि सर्वं ज्ञातुं विविधानि प्रश्नशास्त्रविवेचने पुस्तकानि लिखितानि। प्रश्नकुतू-हलप्रश्नचण्डेश्वरप्रश्नज्ञानप्रदीपप्रश्नप्रदीपिकाप्रश्नपयोनिधिप्रश्नभूषणप्रश्नमार्गप्र--श्नमालाप्रश्नवैष्णवप्रश्नवैष्णवशास्त्रप्रश्नशिरोमणिप्रश्नसङ्ग्रहप्रश्नसिन्धुप्रश्नाङ्क--चूडामणिप्रभृतीनि चैतानि पुस्तकान्युपलभ्यन्ते। अत्र च चण्डेश्वरजीवनाथादि-कानामाचार्याणां विशेषेण प्रमुखत्वं ज्ञेयम्।[3]

केरलप्रश्नशास्त्रे प्रश्नसमयस्थाने प्रश्नाक्षराणां स्वरेण च प्रश्नविचारो विहितः।[4]

उत्तरकालीयरचितेषु पूर्वोक्तपुस्तकेषु प्रश्नलग्नानुसारं सर्वेषां प्रश्नानामुत्तरा-नुसन्धानविधिदृश्यते। यथा हि मम कार्यस्य सिद्धिः कदा भविष्यति? मम मान-सिकः प्रश्न इति? मूकप्रश्नस्य, मम विवाहः कस्यां दिशि भविष्यति मया किं भोजनं कृतमित्यादिविविधप्रश्नानामत्र विचारो विहितः। यस्य चर्चा जातकग्रन्थेषु नोपलभ्यते। जातकग्रन्थेषु केवलं नष्टजन्मकाले सति प्रश्नेन नष्टजातकज्ञानस्यैव प्रकारो विद्यते।

---

१. वी० सुब्रह्मण्यम् शास्त्री, उत्तरकालाभृत, ७ खण्डः, ५० थर्ड क्रास रोड, वासावा-गुरी बंगलोर।

२. पं० वनमाली, जातकारणम् (३४ अध्यायः) किशनलाल द्वारकाप्रसाद, बम्बई, भूषण प्रेस, मथुरा।

३. रत्नसमुच्चयनामक पुस्तकसूची पत्रम् पृ० ४१७, मेहरचन्द लक्ष्मणदास, संस्कृत हिन्दी पुस्तकालय, लाहौर।

४. सीतारामझा, प्रश्न केरल संग्रहः, मास्टर खेलाड़ीलाल, एण्ड संस, बनारस।

## (उ) वैशिष्ट्यम्—

प्रश्नशास्त्रनाम्नात्र पृथगध्यायो निरूपितः। तत्र चेदं लिखितम्।

'जन्मलग्नं समासाद्य यद्यत्प्रोक्तं तु जातके।
तत्सर्वं प्रश्नलग्नेन प्रश्नकालाद्वदेद्बुधः।'[1]

अनेनेदं सिध्यति प्रश्नशास्त्रमपि प्रश्नजातकमिति। अत एवानुवर्त्तिभिराचार्यैरस्य नष्टजातकमित्येव नामाङ्कितम्। अतश्चात्र जातकस्यैव प्रधान्यं न तु प्रश्नलग्नादन्यवस्तूनां ज्ञानस्येति। अपि च जन्मकालज्ञाने सति नष्टजातकस्य नावश्यकत्वम्।

जन्मकालज्ञाने सति नष्टजातकपद्धतेरनुपयोग इति सीताराम झा महोदयेन काशीसंस्करणे निरूपितम्।

'यन्त्रैः स्पष्टतरोऽत्र जन्मसमयो वेद्योऽस्य खेटाः स्फुटा।'

इति प्रमाणस्य दर्शनाज्जन्मसमयस्यैव प्राधान्यन्नतु प्रश्नकाललग्नस्येति भावः।[2]

यत्सत्ययुगे धर्मस्य पूर्णत्वात् त्रेतायां तपसश्च सत्वात् द्वापरे शास्त्रज्ञानस्य तपसश्चोभयस्य बलाद् दैवज्ञाः फलं वक्तुं समर्था अभवन्। परञ्च कलियुगे धर्मस्यैकपादत्वात् तपसोऽभावात्फलं वक्तुं दैवज्ञाः न समर्थाः।

---

१. बृ० पा० उ० भा० १८।२२ (मुम्बई-स०)
२. बृ० पा० पृ० ६७५ (काशी-सं०)

## संग्रन्थावली

१. अग्निपुराणम्
गुरुमण्डल ग्रन्थमाला संख्या १७, सन् १९५७, कलकत्ता ।

२. अग्रवाल, वासुदेवशरण
पाणिनिकालीन भारतवर्ष (प्रथम संस्करण) सं० २०१२,
मोतीलाल बनारसीदास, बनारस ।

३. अथर्वज्योतिष, सुधाकरसोमाकरभाष्य सहित
मास्टर खेलाड़ीलाल एण्ड संस, काशी ।

४. अथर्ववेद संहिता
वैदिक यन्त्रालय, अजमेर ।

५. अथर्ववेदसंहिता सायणभाष्योपेता
सनातनधर्म यन्त्रालय, मुरादाबाद ।

६. अवयाकन
राहु पिम्मा एण्ड यम काल्या
इण्डियन एस्ट्रोलोजिकल जनरल, दिल्ली ।

७. अय्यर के० आर० वीराङ्गव
दी एसेन्स आफ इण्डियन एस्ट्रोलोजी (प्रथम संस्करण) १९५२
९८ जी० ए० रोड, मद्रास ।

८. अष्टात्रिंशदुपनिषदः
खेमराज श्रीकृष्णदास, मुम्बई ।

९. आचार्य नारायण राम
मुहूर्तचिन्तामणिः (पञ्चमसंस्करणम्) १९४५
निर्णयसागर प्रेस, बम्बई ।

२९. जैमिनिसूत्राणि
नीलकण्ठकृतसुबोधिनी टीकोपेतानि, १९६०
खेमराज श्रीकृष्णदास, मुम्बई।

३०. जैन, नेमिचन्द्र
केवल ज्ञान प्रश्न चूड़ामणिः (प्रथमसंस्करणम्) १९५०
भारतीय ज्ञानपीठ, काशी।

३१. जोशी, आचार्य चक्रधर
'ज्योतिस्तत्वम् मुकुन्द दैवज्ञप्रणीतम्
श्रीलक्ष्मीधर विद्यामन्दिर, देवप्रयाग।

३२. जोशी, कृष्णचन्द्र
भुवनदीपक (प्रथमसंस्करणम्) १९५७
१२५, आहलूवालिया वस्ती गुजां, जालन्धर।

३३. जोशी, देवीदत्त
सुगम ज्योतिष (द्वितीय-संस्करणम्) १९३२
मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

३४. ज्यौतिषतत्त्वसुधार्णवः
खेमराज श्रीकृष्णदास, बम्बई।

३५. ज्यौतिषश्यामसङ्ग्रह
खेमराज श्रीकृष्णदास, मुम्बई।

३६. झा, अच्युतानन्द
जैमिनिसूत्रम्, १९४३
चौखम्बा संस्कृत सीरिज, बनारस।

३७. झा, अच्युतानन्द
बृहज्जातकम् (द्वितीय-संस्करणम्) १९५७
चौखम्बा संस्कृत सीरिज, बनारस।

३८. झा, अच्युतानन्द
बृहत्संहिता वराहमिहिरविरचिता १९५९
चौखम्बा विद्याभवन, वाराणसी।

३९. झा, सीताराम
केरलप्रश्नसंग्रहः, (चतुर्थसंस्करणम्) १९६१
मास्टर खेलाड़ीलाल एण्ड संस, वाराणसी।

४०. झा, सीताराम
गर्गमनोरमा
मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

४१. झा, सीताराम
जातकपद्धतिः १९४८
मास्टर खेलाड़ीलाल एण्ड सस, बनारस।

४२. झा, सीताराम
बृहज्जातकम् (द्वितीयसंस्करणम्) सं० २००९
मास्टर खेलाड़ीलाल एण्ड सस, बनारस।

४३. झा, सीताराम
बृहत्पाराशरहोराशास्त्रम्, १९५२
मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

४४. झा, सीताराम
भावप्रकाश-ज्यौतिषम् (द्वितोय-संस्करणम्) १९५३
मास्टर खेलाड़ीलाल एण्ड सस, बनारस।

४५. झा, सीताराम
लग्नविवेकः, (प्रथम-संस्करणम्) सं० २०१४
अन्नपूर्णा प्रकाशनम्, वाराणसी।

४६. झा, सीताराम
लघुजातकम्, १९४८
मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

४७. झा, सीताराम
लघुपाराशरी, १९५०
मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

१०. आपटे हरिनारायण
ऐतरेयब्राह्मणम्, १९३१
आनन्दाश्रम मुद्रणालय, पूना।

११. आपटे हरिनारायण
ऐतरेयसंहिता
आनन्दाश्रम मुद्रणालय, पूना।

१२. आपटे हरिनारायण
तैत्तिरीयब्राह्मणम्
आनन्दाश्रम मुद्रणालय, पूना।

१३. उपाध्याय बलदेव
संस्कृत साहित्य का इतिहास (पञ्चमसंस्करणम्) १९५८
शारदा मन्दिर, काशी।

१४ एलाईस ए० बेली
एसोटेरिक एस्ट्रोलोजी, तृतीय भागः, १९५१
ल्यूसिस प्रेस, लन्दन डब्ल्यू० सी० २।

१५. एलेन लिओ
कास्टिंग दी हारोस्कोप (अष्टमं संस्करणम्) १९५३
इण्टरनेशनल पब्लिशिंग कम्पनी, एडिनबर्ग।

१६. एलेन लिओ
प्रैक्टिकल एस्ट्रोलोजी
डी० बी० तारापोरेवाला एण्ड संस, बम्बई।

१७. ओझा, मीठालाल हिम्मतराम,
भारतीय कुण्डली विज्ञान
परमहंस संस्कृत पाठशाला, बनारस।

१८. कपूर, दीवान रामचन्द्र
लघुपाराशरीभाष्य, (प्रथम संस्करण) १९६४
मोतीलाल बनारसीदास, दिल्ली।

१६. काणे, पी० वी०
हिस्ट्री आफ धर्मशास्त्र, पञ्चमभाग: खण्ड: प्रथमः १९५८
भण्डारकर ग्रारियण्टेल रिसर्च इन्स्टीच्यूट, पूना।

२०. कार्टर चार्लस ई० ग्रो०
दी प्रिन्सीपलज ग्राफ एस्ट्रोलोजी,
दी थिओसोफिकल पब्लिशिंग हाउस, लन्दन।

२१. कार, सुनीलकुमार
जेमिनिसूत्राज, १९५५
रमण पब्लिकेशनज, बंगलोर।

२२. कूर्मपुराणम्
गुरु मण्डल ग्रन्थमाला सङ्ख्या २२, कलकत्ता।

२३. गोरखप्रसाद
भारतीय ज्योतिष का इतिहास (प्रथम संस्करण) १९५६
प्रकाशन ब्यूरो, उत्तर प्रदेश सरकार, लखनऊ।

२४. गैरोला वाचस्पति
कौटिल्य ग्रर्थशास्त्र
चौखम्बा विद्याभवन, बनारस।

२५. गैरोला वाचस्पति
संस्कृत साहित्य का इतिहास, १९६०
चौखम्बा विद्याभवन, वाराणसी।

२६. चतुर्वेदी पं० वनमाली
जातकाभरणम् सं० १९९२
किशनलाल द्वारकाप्रसाद, मथुरा।

२७. जार्ज ल्यूलियन
प्रैक्टिकल एस्ट्रोलोजी फार एवरी वाडी, १९३०
लास एंजल्स कैलिफोर्निया, यू० एस० ए०।

२८. जैमिनिसूत्राणि, १९६०
गङ्गाविष्णु श्रीकृष्णदास, वम्बई।

४८. झा, सीताराम
सारावली (प्रथम संस्करण) १९५३
मास्टर खेलाड़ीलाल एण्ड संस, बनारस।

४९. झारखण्डी, श्री शिवनाथ
भारतीय ज्योतिष
प्रकाशन ब्यूरो, सूचना विभाग, उत्तर प्रदेश।

५०. टक्कर डब्ल्यू० जे०
युग्रर स्टार ग्राफ डेस्टेनी
पेनस्पुर्श एवेन्यू सिण्डकप केण्ट, इङ्गलैण्ड।

५१. टी० चन्द्रशेखरन्
जातकसार-दीप
गवर्मेण्ट ग्रारियण्टल मैनुस्क्रिपिट्स लाइब्रेरी, मद्रास।

५२. टी० चन्द्रशेखरन्
देवकेरलम् (चन्द्रकलानाडी) १९५२
गवर्मेण्ट ग्रारियण्टल मैनुस्क्रिपिट्स् लाइब्रेरी, मद्रास।

५३. टी० चन्द्रशेखरन्
देवकेरलम् (चन्द्रकलानाड़ी) द्वितीयो भागो प्रथमोंशः, १९५६
गवर्मेण्ट आरियण्टल मैनुस्क्रिपिट्स लाइब्रेरी, मद्रास।

५४. टी० चन्द्रशेखरन्
देवकेरलम् (चन्द्रकलानाड़ी) द्वितीयो भागो द्वितीयांशः (१९५६)
गवर्मेण्ट आरियण्टल मैनुस्क्रिपट्स लाईब्रेरी, मद्रास।

५५. टी० चन्द्रशेखरन्
दैवज्ञाभरणम्, १९५४
गवर्मेण्ट ग्रारियण्टल मैनुस्क्रिपट्स लाईब्रेरी, मद्रास।

५६. टी० चन्द्रशेखरन्
महाभास्करीयम्, १९५७
मद्रास, गवर्मेण्ट ग्रारियण्टल सीरिज, मद्रास।

५७. त्रिपाठी, श्यामसुन्दरलल
कर्मविपाकसंहिता
श्री वेंकटेश्वर प्रेस, मुम्बई।

५८. देवकीनन्दनसिंह
ज्योतिषरत्नाकरः, प्रथम खण्ड, (द्वितीय-संस्करणम्) सं० २०१४
श्री गिरिजाशंकरसिंह, माउर जि० मुंगेर।

५९. दैवज्ञकामधेनुः, १९०६
वृजभूषणदास एण्ड कम्पनी, बनारस।

६०. द्विवेदी, दुर्गाप्रसाद
जैमिनिपद्यामृतं, १९२५
निर्णयसागर प्रेस, बम्बई।

६१. द्विवेदी, महादेवप्रसाद
जातकालकार
नवलकिशोर प्रेस, लखनऊ।

६२. निक्कस डी०, वारे,
एनसाईक्लोपीडिया आफ एस्ट्रोलोजी, १९४७
फिलोसोफिकल लाईब्रेरी, न्यू यार्क।

६३. निरुक्तम्, दुर्गाचार्यकृतटीकोपेतम्, १९५२
गुरुमण्डल ग्रन्थमाला सं० ११, कलकत्ता।

६४. पटेल, श्रीबालमुकुन्द
फलितप्रकाशः, सं० १९९४
बाबू बैजनाथ बुकसेलर, काशी।

६५. पण्डितः, महेश,
श्रीरणवीरज्योतिर्महानिबन्धः, सं० १९९४
जम्मू काश्मीर सरकार, जम्मू।

६६. पद्मपुराणम्, प्रथम, द्वितीय, तृतीय चतुर्थपञ्चमाः भागाः, १९५७
गुरुमण्डलग्रन्थमाला सङ्ख्या १८, कलकत्ता।

६७. पाठक, श्रीनिवास महादेव जी
जातकतत्त्व, (षष्ठं संस्करणम्) १९६१
श्री भुवनेश्वरी पुस्तकालय, रतलाम ।

६८. पाठक, श्रीनिवास महादेव जी,
दशाफलदर्पणम् (द्वितीय संस्करणम्) १९४८
श्री भुवनेश्वरी यन्त्र, रतलाम ।

६९. पाठक, श्रीनिवास महादेव जी
सन्ततिसमयविचार, १९५१
भुवनेश्वरी प्रिंटिंग प्रेस रतलाम ।

७०. पोद्दार, हनुमानप्रसाद
कल्याण, संक्षिप्तनारदविष्णुपुराणाङ्क, जनवरी, १९५४
गीता प्रेस, गोरखपुर ।

७१. फ्रेन्ज क्यूमोण्ट,
एस्ट्रोलोजी एण्ड रिलिजन
डोवर पब्लिकेशनज, न्यूयार्क ।

७२. ब्रह्मपुराणम्, १९५४
गुरुमण्डल ग्रन्थ माला सङ्ख्या ११, कलकत्ता ।

७३. ब्रह्माण्ड महापुराणम्
खेमराज श्रीकृष्णदास, वम्बई ।

७४. *ब्रह्मवैवर्त्तपुराणम्, प्रथमद्वितीयभागौ*
गुरुमण्डल ग्रन्थमाला सङ्ख्या १४, कलकत्ता ।

७५. भट्टोत्पल:
बृहज्जातकम्
खेमराज श्रीकृष्णदास, मुम्बई

७६. भविष्यपुराणम्,
खेमराज श्रीकृष्णदास, मुम्बई ।

७७. मत्स्यपुराणम्, १९५४
गुरुमडण्ल ग्रन्थ माला सं० १३, कलकत्ता।

७८. मनुस्मृतिः, कुलुकभट्टटीकायुता, १९१३
गुजराती प्रिंटिंग प्रेस, बम्बई।

७९. महता, धर्मदेव
पाजिटिव साइन्सेस इन् दी वेदालज्, १९६१
दी एकेडेमी आफ वैदिक रिसर्चेज्, नई दिल्ली।

८०. महाभारत, १९५६
गीता प्रेस, गोरखपुर।

८१. माधवाचार्यः
कामसूत्रम्, वात्सस्यायनप्रणीतम्, जयमङ्गलाव्याख्यासहितम्, सं० १९९१
गङ्गाविष्णु श्रीकृष्णदास, बम्बई।

८२. मार्कग्राउवार्ड,
एस्ट्रोलोजी एण्ड आलकेमी, १९५३
फिलोसोफिकल लाईब्रेरी, न्यूयार्क।

८३. मिश्र, अनूप,
मानसागरी, (षष्ठं संस्करणम्) १९६१
भार्गव पुस्तकालय, काशी।

८४. मिश्र, कन्हैयालाल
मुद्धिदीपिका, १९०६
खेमराज श्रीकृष्णदास, बम्बई।

८५. मिश्र, बलदेवप्रसाद
वाराहीसंहिता स० २००९
खेमराज श्रीकृष्णदास, मुम्बई।

८६. मैकडानल
वैदिक इण्डेक्स, प्रथमभागः १९५८
मोतीलाल वनारसीदास, दिल्ली।

८७. मैथिलबच्चू झा
सर्वसंग्रहः, दीनानाथविरचितः, सं० १९८२
गङ्गाविष्णु श्रीकृष्णदास, मुम्बई।

८८. रमण, वी० वी०
अष्टकवर्ग सिस्टम आफ प्रिडिक्शन्स, १९६२
रमण पब्लिकेशन्स, वंगलोर।

८९. रमण, वी० वी०
एस्ट्रोलोजी एण्ड मार्डन थाट (चतुर्थ-संस्करणम्) १९५८
रमण पब्लिकेशनज, वंगलोर।

९०. रमण, वी० वी०
ग्रह एण्ड भाव वल (सप्तमं संस्करणम्)
रमण पब्लिकेशनज, वंगलोर।

९१. रमण, वी वी०
जैमिनिसूत्राज (तृतीय-संस्करणम्) १९४९
रमण पब्लिकेशन्ज, वंगलोर।

९२. रमण, वी० वी०
थ्री हण्ड्रड इम्पार्टेण्ट कम्बिनेशनज (चतुर्थ-संस्करणम्) १९६१
रमण पब्लिकेशन्ज, वंगलोर।

९३. रमण, वी० वी०
भावार्थरत्नाकरः (तृतीय-संस्करणम्) १९५८
रमण पब्लिकेकेशन्ज, वंगलोर।

९४. रमण, वी० वी०
मैन्युल ग्राफ हिन्दू एस्ट्रोलोजी (सप्तम-संस्करणम्) १९६२
रमण पब्लिकेशनुज, वंगलोर।

९५. रमण, वी० वी०
वराहमिहराज् बृहज्जातकम् (चतुर्थ-संस्करणम्) १९५७
रमण पब्लिकेशनुज, वंगलोर।

९६. रमण, वी० वी०
हिन्दू प्रिडिक्टिव एस्ट्रोलोजी, १९६३
रमण पब्लिकेशनुज, वंगलोर।

९७. रमण वी० वी०
हौ टु जज्ज होरोस्कोप, प्रथम खण्ड,
रमण पब्लिकेशनुज, वंगलोर।

९८. राजा सी कन्हन
भार्गव नाडिका, १९५०
गवर्मेण्ट ग्रारियण्टल मैनुस्क्रिपिट्स लाईब्रेरी, मद्रास ।

९९. लहरी एन० सी०
टेवल ग्राफ एसेडेण्टस, १९४७
एस्ट्रो रिसर्च व्यूरो, कलकत्ता।

१००. लिंगपुराणम्
गुरुमण्डल ग्रन्थमाला संख्या १६, १९६० कलकत्ता।

१०१. लिंगमहापुराणम्
श्रीवेंकटेश्वर प्रेस, बम्बई।

१०२. वसु, श्रीनगेन्द्रनाथ
हिन्दी विश्वकोष, १९२७
९ विश्वकोष लेन, कलकत्ता।

१०३. विष्णुधर्मोत्तर महापुराणम्, सं० १९३९
खेमराज श्रीकृष्णदास, मुम्बई।

८६. मैकडानल
वैदिक इण्डेक्स, प्रथमभागः १६५८
मोतीलाल वनारसीदास, दिल्ली।

८७. मैथिलवच्चू झा
सर्वसंग्रहः, दीनानाथविरचितः, सं० १६८२
गङ्गाविष्णु श्रीकृष्णदास, मुम्वई।

८८. रमण, वी० वी०
अष्टकवर्ग सिस्टम आफ प्रिडिक्शन्स, १६६२
रमण पब्लिकेशन्स, बंगलोर।

८६. रमण, वी० वी०
एस्ट्रोलोजी एण्ड मार्डन थाट (चतुर्थ-संस्करणम्) १६५८
रमण पब्लिकेशनज, वंगलोर।

६०. रमण, वी० वी०
ग्रह एण्ड भाव वल (सप्तमं संस्करणम्)
रमण पब्लिकेशनज, वंगलोर।

६१. रमण, वी वी०
जैमिनिसूत्राज (तृतीय-संस्करणम्) १६४६
रमण पब्लिकेशन्ज, बंगलोर।

६२. रमण, वी० वी०
थ्री हण्ड्रड इम्पार्टेण्ट कम्बिनेशनज (चतुर्थ-संस्करणम्) १६६
रमण पब्लिकेशन्ज, वगलोर।

६३. रमण, वी० वी०
भावार्थरत्नाकरः (तृतीय-संस्करणम्) १६५८
रमण पब्लिकेकेशन्ज, वंगलोर।

९४. रमण, वी० वी०
मैन्युल ग्राफ हिन्दू एस्ट्रोलोजी (सप्तम-संस्करणम्) १९६२
रमण पब्लिकेशन्ज, बंगलोर।

९५. रमण, वी० वी०
वराहमिहराज् बृहज्जातकम् (चतुर्थ-संस्करणम्) १९५७
रमण पब्लिकेशन्ज, बंगलोर।

९६. रमण, वी० वी०
हिन्दू प्रिडिक्टिव एस्ट्रोलोजी, १९६३
रमण पब्लिकेशन्ज, बंगलोर।

९७. रमण वी० वी०
हौ टु जज्ज होरोस्कोप, प्रथम खण्ड,
रमण पब्लिकेशन्ज, बंगलोर।

९८. राजा सी कन्हन
भार्गव नाडिका, १९५०
गवर्मेण्ट ग्रारियण्टल मैनुस्क्रिपिट्स लाईब्रेरी, मद्रास।

९९. लहरी एन० सी०
टेबल ग्राफ एसेडेण्टस, १९४७
एस्ट्रो रिसर्च व्यूरो, कलकत्ता।

१००. लिंगपुराणम्
गुरुमण्डल ग्रन्थमाला संख्या १६, १९६० कलकत्ता।

१०१. लिंगमहापुराणम्
श्रीवेंकटेश्वर प्रेस, बम्वई।

१०२. वसु, श्रीनगेन्द्रनाथ
हिन्दी विश्वकोष, १९२७
९ विश्वकोष लेन, कलकत्ता।

१०३. विष्णुधर्मोत्तर महापुराणम्, सं० १९३९
खेमराज श्रीकृष्णदास, मुम्वई।

१०४. विष्णुपुराणम्, सं० १९९०
गीताप्रेस, गोरखपुर।

१०५. वायुपुराणम्, १९५९
गुरुमण्डल-ग्रन्थमाला संख्या २१, कलकत्ता।

१०६. वैद्य, सी० व्ही
महाभारत मीमांसा सं० १९७७
इण्डियन प्रेस, इलाहाबाद।

१०७. वैद्य, सी० व्ही
हिस्ट्री आफ संस्कृत लिट्रेचर, १९३०
३१४ सदाशिव पेठ, पूना।

१०८. शब्दकल्पद्रुमः
मोतीलाल बनारसीदास, दिल्ली।

१०९. शर्मा, दुर्गादत्त
ज्योतिष-जगत् (प्रथम-संस्करणम्) १९६३
मोतीलाल बनारसीदास, दिल्ली।

११०. शर्मा, महीधर
शम्भुहोरा-प्रकाशः, १९३७
गङ्गाविष्णु श्रीकृष्णदास, बम्बई।

१११. शर्मा, महीधर
सर्वार्थ-चिन्तमणिः, सं० २०१२
गङ्गाविष्णु श्रीकृष्णदास, बम्बई।

११२. शर्मा, रामशरण
ज्योतिषरत्नाकरः, सं० १९५४
ज्योतिरत्नाकर कार्यालय, लाहौर।

११३. शर्मा, रामस्वरूप
त्रैलोक्य-प्रकाशः, १९४४ (प्रथम संस्करण)
कुशल एस्ट्रोलोजिकल रिसर्च इन्स्टीच्यूट, लाहौर

११४. शर्मा, वसतिराम
'नारद संहिता' सं० १९९४
खेमराज श्रीकृष्णदास, वम्बई।

११५. शर्मा, वासुदेव
सिद्धान्तकौमुदी तत्त्ववोधिनी-व्याख्योपेता, (षष्ठ-संकरणम्) १९२९
निर्णयसागर प्रेस, वम्बई।

११६. शर्मा, श्रीधर
वृहत्पाराशरहोराशास्त्रम्, सं० १९५६
श्रीवेंकटेश्वर प्रेस, वम्बई।

११७. शर्मा, हनूमान्
समरसार
खेमराज श्रीकृष्णदास, वम्बई।

११८. शाम शास्त्री आर०
विद्यामाधवीयम्, १९२३
यूनिवर्सिटी आफ मैसूर।

११९. श्रीमद्भगवद्गीता (चतुःसप्तति-संस्करम्) स० २०२०
गीता प्रेस, गोरखपुर।

१२०. श्रीमद्भागवतमहापुराणम् प्रथम-स० १९९८
गीता प्रेस, गोरखपुर।

१२१. श्रीमद्देवीभागवतमहापुराणम् (प्रथमद्वितीयभागौ) १९६०
गुरुमण्डलग्रन्थमाला संख्या २१, कलकत्ता।

१२२. श्रीन्मत्स्यपुराणम्, सं० १९८०
श्रीलक्ष्मीवेंकटेश्वर प्रेस, वम्बई।

१४०. स्मृतिसन्दर्भः
प्रथम-द्वितीय-तृतीय-भागाः १९५२
चतुर्थ भागः, १९५३
पञ्चम भागः, १९५५
षष्ठ भागः, १९५७
गुरुमण्डल ग्रन्थमाला, संख्या, कलकत्ता।

१४१. हंसराज
वैदिक कोषः, १९८२
दयानन्द महाविद्यालय, लाहौर।

१४२. हैरोल्डफुल्लर्ड
दी यूनिवर्सिटी एटलेस
जार्ज फिलिप एण्ड संस, लन्दन।